सूत्राणि कृत्वा व्यासो महायशाः ॥ ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तम[1] इत्यादि ।

॥ ॐ ॥ ॐ ॥ **अथातो ब्रह्मजिज्ञासा ॥ ॐ ॥ १ ॥**

'अथ' शब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च । 'अतः' शब्दो हेत्वर्थः । उक्तं च गारुडे 'अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि । प्रारभन्ते नियत्यैव तत्किमत्र नियामकम् ॥ कश्चार्थश्च तयोर्विद्वन् कथमुत्तमता तयोः । एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्त्वतः ॥ एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः । आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च ॥ अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः । परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् ॥ स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः । सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिःसृतौ ॥ ॐकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् । तद्धेतुत्वं यदश्चापि तृतीयोऽत्र उदाहृतः ॥ अकारस्सर्वनामात्मा परब्रह्माभिधायकः । तथा प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ॥ अतश्च पूर्वमुचार्याः सर्वे एते सतां मताः । अथातःशब्दयोरेवं वीर्यमाज्ञाय तत्त्वतः । सूत्रेषु तु महाप्राज्ञास्ताचेवादौ प्रयुञ्जत' इति ॥

अधिकारश्चोक्तो भागवततन्त्रे 'मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः । तत्र मन्दा मनुष्येषु ये उत्तमगणा मताः ॥ मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः । इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः ॥ भक्तिमान् परमे विष्णौ यस्त्वध्ययनतत्परः । अधमः शमादिसंयुक्तो मध्यमः स (तु) उदाहृतः ॥ आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम् । विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ॥ स उत्तमोऽधिकारी स्यात्संन्यस्ताखिलकर्म-

[1] परमेश्वरः पा

वानि'ति ॥ 'अध्ययनमात्रवतः'[1] 'नाविशेषादि'[2]ति चोपरि ॥ 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्'[3] ॥ 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'[4] ॥ 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'[5] ॥ 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन'[6] इत्यादिश्रुतिभ्यश्च ॥ व्योमसंहितायां च ॥ 'अन्त्यजा अपि ये भक्ता नामज्ञानाधिकारिणः । स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता ॥ एकदेशे परोक्ते तु न तु ग्रन्थपुरःसरे । त्रैवर्णिकानां वेदोक्ते सम्यग्भक्तिमतां हरौ ॥ आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके । यथोर्वशी यमी चैव शच्याद्याश्च तथाऽपरा' इति ॥ यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्या ॥ 'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । वाक्यं वेति सतां नीतिः सावकाशे न तद्भवेदि'ति बृहत्संहितायाम् ॥ 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते'[7]॥ 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'[8]। 'यमेवैष वृणुते तेन लभ्यः'[9]। 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'[10] इत्यादिश्रुतिस्मृतिभ्यः ॥ 'कर्मणा त्वधमः प्रोक्तः प्रसादः, श्रवणादिभिः ॥ मध्यमो, ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः ॥ प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः । मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ॥ श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च । साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ॥ न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चने'ति नारदीये॥

[1] ३-४-१२. ब्र.सू. [2] ३-४-१३. ब्र.सू. [3] ६-४-२३ बृ.उ.
[4] मु.उ. १२-१२. [5] क.उ. २-२३. [6] श्वे.उ. ६-२३.
[7] ३-१२. तै.आ. [8] ७-१७. भ.गी. [9] २-२३. क.उ.
[10] ६-५-६. बृ उ.

'ब्रह्म'शब्दश्च विष्णावेव । 'यमन्तः समुद्रे कवयोऽवयन्ति तदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्या'मित्युक्त्वा 'तदेवर्तं तदुसत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'[1]ति हि श्रुतिः ॥ 'तन्नो विष्णुरि'[+]तिवचनाद्विष्णुरेव हि तत्रोच्यते ॥ न चेतरशब्दात्प्राप्तिः ॥ 'नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् । नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती'ति माल्लवेयश्रुतिः ॥ 'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवनायन्त्यन्ये'[2]त्येवशब्दात्अन्येषां सर्वनामता । 'अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुरि'[3]ति विष्णोर्हि लिङ्गम्। न च प्रसिद्धार्थं विनाऽन्योऽर्थो युज्यते॥ 'अजस्य नाभाविति यस्य नाभेरभूत श्रुतेः पुष्करं लोकसारम् ॥ तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' इति स्कान्दे । 'परो दिवा पर एना पृथिव्ये'[4] ति समाख्याश्रुतौ ॥ 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामि'त्युक्त्वा 'मम योनिरप्स्वन्तः समुद्रे'[5] इत्याह । उग्रो रुद्रः । समुद्रेऽन्तर्नारायणः । प्रसिद्धत्यागस्त्वचितत्वाद्यासार्थस्य । न चाविरोधे प्रसिद्धः परित्यज्यते । उक्तन्यायेन च श्रुतय एवमेव वदन्ति । 'वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयत' इति हरिवंशेषु ॥ न चेतरग्रन्थविरोधः । 'एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुर्वि'ति वाराहवचनात् ॥ शैवे च स्कान्दे ॥ 'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः । तदैवाच्युत यान्त्येव

[1] म ना उ. १ ३, ६ [+] ३-१६ म ना उ [2] १० ८२ ३ ऋ स
[3] १०-८२-६ ऋ स [4] १०-८२-५ ऋ स [5] १०-१२५-५, ७ ऋ स

यदैव त्वं पराङ्मुख' इति ॥ ब्राह्मे च ब्रह्मवैवर्ते 'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः । बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युत' इति ॥ न च वैष्णवेषु तथा । 'तच्चैष मोहमि'त्युक्तम् ॥ जिज्ञासाधिकरणम् ॥ १ ॥

ब्रह्मणो लक्षणमाह । ॐ **जन्माद्यस्य यतः** ॐ ॥२॥ सृष्टिस्थितिसम्हारनियमनज्ञानाज्ञानबन्धमोक्षा यतः । 'उत्पत्तिस्थितिसम्हारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडि'ति स्कान्दे । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे'[1] ति । 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा'[2] ॥ 'चतुर्भिः साकंनवतिं च नामभिश्चक्रं न वृत्तं व्यतीरवीविपत्'[3] । 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप'[4] ॥ 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वे'[5]त्यादि च ॥२॥ जन्माधिकरणम् ॥२॥

अनुमानतोऽन्ये न कल्पनीयाः ॥ ॐ **शास्त्रयोनित्वात्** ॐ ॥३॥ 'नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं साम्पराये'[6] ॥ 'औपनिषदः पुरुष' इत्यादिश्रुतिभ्यश्च ॥ न चानुमानस्य नियतप्रामाण्यम् ॥ 'श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् । निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च ॥ श्रुतिस्मृतिसहाय यत् प्रमाणान्तरमुत्तमम् । प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥ पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् । इत्याद्यमूहनं तर्कः शुष्कतर्कं तु

[1] ३ १ तै उ  [2] १-१५४ ४ ऋ स  [3] १ १५५ ६ ऋ स
[4] ७ ९९ १ २ ऋ स  [5] १० ८२ ३ ऋ स  [6] ३ १२ ९ तै ब्रा

यद्गेयदि'त्यादि कौर्मे ॥ अशक्यत्वाच्चानुमानानां सर्वत्र । 'सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा । तस्माच्च सा शक्तिमती विनागम मुदीक्षितुमि'ति वाराहे ॥ 'रेतो धातुर्वटकणिका घृतधूमाधिवासनम् । जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ॥ प्रेत्यभूताप्ययश्चैव देवताभ्युपयाचनम् । मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चय'इति मोक्षधर्मवचनाच्च नास्तिक्यवादो युज्यते । दर्शनाच्च तपआदिफलस्य । 'ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् । मूलरामायणं चैव शास्त्र-मित्यभिधीयते ॥ यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् । अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तदि'ति स्कान्दे ॥ 'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च'इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तम्, इतरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि॥ शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि ॥ शास्त्रयोनित्वाधिकरणम् ॥३॥

अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम्, कुतः ? । **ॐ तत्तु समन्वयात् ॐ** ॥ ४ ॥ अन्वय उपपत्त्यादिलिङ्गम् । उक्तं च बृहत्संहितायाम् । 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय' इति ॥ उपक्रमादितात्पर्य-लिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यम् । 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् । इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चने'ति हि भागवते ॥४॥ समन्वयाधिकरणम् ॥ ४ ॥

ननु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'[1] ॥ 'अशब्द-मस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्'[2] ॥ 'अवचनेनैव प्रोवाच'[3] ॥ 'यद्वाचाऽनभ्युदितम् । येनवागभ्युद्यते ॥ यच्छ्रोत्रेण न शृणोति । येन श्रोत्रमिदꣳ श्रुतमि'[4]त्यादिभिर्न तच्छब्दगोचरम् ।

[1] २४-१. तै.उ. [2] ३-१५. क.उ. [3] बाष्कलश्रुतिः [4] १ के.उ.

नेत्याह ॥ ॐ **ईक्षतेर्नाशब्दम्** ॐ ॥५॥ 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते'[1] ॥ 'आत्मन्येवात्मानं पश्येत् ॥ विज्ञाय प्रज्ञां कुर्वीते'[2] त्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव । औपनिषदत्वात्प्रवचनेनेक्षणम् ॥ 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति'[3] ॥ 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहमि'[4] त्यादिश्रुतिस्मृतिभ्यश्च ॥ अवाच्यत्वादिकं त्वप्रसिद्धत्वात् । 'न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते । पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चित'इतिवत् ॥ 'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः ॥ अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतमि'ति गारुडे । न चाशब्दत्वमितरसिद्धम् ॥ ५ ॥ ॐ **गौणश्चेन्नात्मशब्दात्** ॐ ॥६॥ न च गौण आत्मा दृश्यो वाच्यश्च न निर्गुण इति युक्तम्, आत्मशब्दात् ॥ 'यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः । हेयोपादेयरहितः स आत्मेत्यभिधीयते ॥ एतदन्यस्वभावो यः सोऽनात्मेति सतां मतम् ॥ अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यत' इति वामने ॥ 'द्वे वा च ब्रह्मणो रूपे आत्मा चैऽवानात्मा च । तत्र यः स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च ॥ अथ ह योऽनीदृशः सोऽनात्मे'ति तलवकारब्राह्मणम् ॥ न च मुख्ये सत्यमुख्यं युज्यते ॥ ॥६॥ ॐ **तन्निष्ठस्य मोक्षोपदेशात्** ॐ ॥७॥ न हि गौणात्मनिष्ठस्य मोक्षः 'यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् सन्दोहे गहने प्रविष्टः ॥ स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एवे'[5]त्यात्मनिष्ठस्य मोक्ष उपदिश्यते। 'अयमात्मा ब्रह्म'[6] ॥ 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' । 'दत्तं दूर्वाससं सोममात्मेशब्रह्मसम्भवान्'॥

---

[1] ५.५. प्र.उ. [2] ६-४-२३, ६-४ २१. बृ.उ. [3] २-१५ क.उ.
[4] १५-१५. भ.गी. [5] ६-४-१३. बृ.उ. [6] १-२. मा.उ. ४-५-१९. बृ.उ.

'चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ॥ जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥ इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते । तस्मात्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः ॥ सगुणास्त्वपरे प्रोक्ताः तज्ज्ञानान्नैव मुच्यते ॥ परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृत'इति पाद्मे ॥७॥ ॐ **हेयत्वावचनाच्च** ॐ ॥८॥ 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुरि'[1] त्यन्येषां हेयत्ववचनादस्याहेयत्ववचनाच्च गौण आत्मा ॥८॥ ॐ **स्वाप्ययात्** ॐ ॥९॥ 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'[2] ॥ 'स आत्मन आत्मानमुद्धृत्याऽऽत्मन्येव विलापयत्यथात्मैव भवति' ॥ 'स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः । एकीभूय पुनः शेते निर्दोषो हरिरादिकृदि'ति स्वस्यैव स्वस्मिन्नप्ययवचनात् ॥ न हि गौणात्मनि निर्दोषस्य लयः ॥९॥ ॐ **गतिसामान्यात्** ॐ ॥१०॥ न च कासुचिच्छाखास्वन्यथोच्यते। 'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं स्वेकमेव । प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहास'इति पैङ्गिश्रुतेर्गतेर्ज्ञानस्य साम्यमेव ॥१०॥ ॐ **श्रुतत्वाच्च** ॐ ॥११॥ 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे'[3]ति । न ह्यशब्दः श्रूयते । न चाप्रसिद्धं कल्प्यम् । सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः ॥ ॥११॥ ईक्षत्यधिकरणम् ॥ ५ ॥

तमेव समन्वयं प्रकटयत्यानन्दमयोऽभ्यासादित्यादिना समस्तेनाध्यायेन प्रायेण । प्रायेणान्यत्रप्रसिद्धानां शब्दानां परमात्मनि

---

[1] २-२५. मुं उ. [2] ७ १ १. बृ.उ. [3] ६-११. श्वे.उ.

समन्वयः प्रदर्श्यतेऽस्मिन् पादे। नान्यथा तदृष्टेः। ब्रह्मजिज्ञासा कर्तव्येत्युक्तम्। तच्च 'ब्रह्म पुच्छं प्रतिष्ठे'[1]त्यानन्दमयावयवरूपं प्रतीयते। न ह्यवयविनं विना अवयवमात्रस्य ज्ञेयतेत्यत आह।

**ॐ आनन्दमयोऽभ्यासात् ॐ** ॥१२॥ आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा। ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः शतानन्दनाम्ना च। अष्टमूर्तित्वात्स्वयं प्रोक्तत्वाच्च रुद्रस्य। एवमन्येषामपि। 'मम योनिर्महद्ब्रह्मे'[2]ति ब्रह्मशब्दाद्बहुभावाच्च प्रकृतेः। 'बृह जातिजीवकमलासनशब्दराशिष्वि'ति ब्रह्मशब्दादेव सर्वजीवानाम्। अन्नमयादेश्च। तथापि न त अनन्दमयशब्देनोच्यन्ते, किन्तु विष्णुरेव। 'तदेव ब्रह्म परमं कवीनाम्'[3]। 'एतमेव ब्रह्मेत्याचक्षते'[4]। 'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते। असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्'॥ 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'॥ 'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिरि'त्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥१२॥ **ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ** ॥१३॥

विकारात्मकत्वात्तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्छब्दो न तु परमात्मन इति मा भूत्। प्रचुरानन्दत्वाद्ध्यानन्दमयः। न तु तद्विकारत्वात्। अन्नादीनां च प्राचुर्यमेव॥ 'अद्यतेऽत्ति चे'[5]ति व्याख्यानात्तत्प्राचुर्यं च युज्यते॥ उपजीव्यत्वमेवाद्यत्वम्॥ 'स वा एष'[6] इत्यन्यप्रारम्भात्॥ 'येऽन्नं ब्रह्मोपासत'[7] इत्यादिब्रह्मशब्दाद्बहुरूपत्वाच्च न विकारित्वमविरोधश्च। न च पृथक्कल्पना युक्ता। स्वरूपे च युज्यते प्रचुरप्रकाशो रविरितिवत् ॥ १३ ॥ **ॐ तद्धेतुव्यपदेशाच्च ॐ** ॥१४॥ 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश

---

[1] २ ५-२. तै.उ. [2] १४-३. भ.गी. [3] १-६. म.ना.उ [4] ३ २, ३-१२. ऐ आ. [5] २-२. तै.उ. [6] २ २. तै.उ. [7] २-२. तै.उ.

आनन्दो न स्यादि'[1]ति ॥१४॥ **ॐ मान्त्रवर्णिकमेव च गीयते ॐ** ॥१५॥ 'ब्रह्मविदाप्नोति परमि'ति सूचयित्वा 'सत्य ज्ञानमनन्तं ब्रह्मे'[2]ति मन्त्रवर्णलक्षित परमेव[3] ब्रह्म शब्दानुसन्धानाद्गीयते। न चानयत्वविरोधः॥ 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छमि'ति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम्॥ 'शिरो नारायणः पक्षो दक्षिणः सव्य एव च। प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः॥ नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा। पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा॥ अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः॥ ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिञ्जनार्दने। अतर्क्यं हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमे'ति बृहत्संहितायाम्। रसशब्देन विशेषणात्तत्तत्सारभूत चिन्मात्रमेवोच्यते॥ इदमिति च दृश्यमान-सन्निहितत्वात्। 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्। प्रोच्यते भगवान् विष्णुरैश्वर्यात्पुरुषोत्तम' इति ब्रह्माण्डपुराणे[4]। न चोक्तप्राप्त्या निरिश्वादिरुच्यते॥ १५॥ **ॐ नेतरोऽनुपपत्तेः ॐ** ॥१६॥ न ह्यन्यज्ञानान्मोक्ष उपपद्यते। 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत'[5]इति ह्युक्तम्॥ १६॥ **ॐ भेदव्यपदेशाच्च ॐ** ॥१७॥ 'ते ये शत प्रजापतेरानन्दाः'[6]॥ 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभय प्रतिष्ठा विन्दते। 'अथ सोऽभय गतो भवति'[7]। 'स पश्चाय पुरुष'[8]इत्यादिभेदव्यपदेशात्। न च तत्त्वमसि[9] अह ब्रह्मास्मि[10] इत्यादिश्रुतिविरोधः॥ 'नामानि सर्वाणि यमाविशन्ती'[11]ति तत्तच्छब्दवाच्यत्वोक्तेः॥ 'इद

---

[1] ७ तै उ [2] २ १ तै उ [3] लक्षितमेव पा [4] ब्रह्माण्डे पा
[5] ३ १२ ७ तै आ [6] २ ८ तै उ [7] २ ७ तै उ [8] २ ८ तै उ
[9] ६ ८ छा उ [10] १ ४ १० बृ उ [11] भाल्लवेयश्रुति।

हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः'[1] ॥ 'असर्वः सर्व इत्यपि'[2] ॥ 'विद्याऽऽत्मनि भिदाबोधः'[3] ॥ 'भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा'[3] । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः'[4] । 'असर्वः सर्व इवात्मैव सङ्गनात्मेव प्रत्यङ्परा-ङ्विवेक ईयते बहुधेयते' । 'स पुरुषः' 'स ईश्वरः स ब्रह्म' । 'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते । एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः' ॥ 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वहे'[5]-त्यादेश्च । उक्ता च प्राप्तिः । 'ब्रह्मैव सन्नि'[6]त्यपि जीव एव ब्रह्म शब्दः । उपपद्यते च विरोधे । भ्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते । 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरि'ति हि भागवते ॥ १७ ॥

न च तत्तदनुमानविरोधः ॥ **ॐ कामाच्च नानुमानापेक्षा ॐ ॥ १८ ॥** यथाकामं ह्यनुमातुं शक्यते । अतो न तत्वे पृथगनुमानमपेक्ष्यते ॥ उक्तं च स्कान्दे—'यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः । पूर्वापराविरोधाय चेष्यते नान्यथा कचिदि'ति ॥ 'नैषा तर्केण मतिराऽपनेये'ति[7] च ॥ **ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ १९ ॥** अस्य जीवस्य । युक्तिसमुच्चये चशब्दः । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता'[8] । 'अनिलयनेऽभयं प्रतिष्ठां विन्दते'[9] । 'एतमानन्दमयमात्मानमुपसङ्क्रामती'[10]-त्यादि ॥ १९ ॥ आनन्दमयाधिकरणम् ॥ ६ ॥

अदृश्येऽनात्म्य इत्युक्तम् । तच्चादृश्यत्वं 'अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवा'[11]

---

[1] भागवते [2] तुरुस्तुतिः [3] भागवते [4] ३-१-२. मु.उ. [5] मोक्षधर्मे [6] ६.४. बृ.उ. [7] २-९. कठ-उ [8] २-१. तै.उ. [9] २ ७. तै.उ. [10] - . तै - [11] ३-११. तै.आ.

आनन्दो न स्यादि'[1]ति ॥१४॥ **ॐ मान्त्रवर्णिकमेव च गीयते ॐ** ॥१५॥ 'ब्रह्मविदाप्नोति परमि'ति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्मे'[2]ति मन्त्रवर्णलक्षितं परमेव[3] ब्रह्म शब्दानुसन्धानाद्गीयते। न चावयवत्वविरोधः॥ 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छमि'ति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम्॥ 'शिरो नारायणः पक्षो दक्षिणः सव्य एव च। प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः॥ नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा। पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा॥ अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः॥ ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिञ्जनार्दने। अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमे'ति बृहत्संहितायाम्। रसशब्देन विशेषणात्तत्तत्सारभूतं चिन्मात्रमेवोच्यते॥ इदमिति च दृश्यमानसन्निहितत्वात्। 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्। प्रोच्यते भगवान् विष्णुरैश्वर्यात्पुरुषोत्तम' इति ब्रह्माण्डपुराणे[4]। न चोक्तप्राप्त्या विरिञ्चादिरुच्यते॥ १५॥ **ॐ नेतरोऽनुपपत्तेः ॐ** ॥१६॥ न ह्यन्यज्ञानान्मोक्ष उपपद्यते। 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत'[5]इति ह्युक्तम्॥ १६॥ **ॐ भेदव्यपदेशाच्च ॐ** ॥१७॥ 'ते ये शत प्रजापतेरानन्दाः'[6]॥ 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। 'अथ सोऽभयं गतो भवति'[7]। 'स यश्चायं पुरुष'[8]इत्यादिभेदव्यपदेशात्। न च तत्त्वमसि[9] अहं ब्रह्मास्मि[10] इत्यादिश्रुतिविरोधः॥ 'नामानि सर्वाणि यमाविशन्ती'[11]ति तत्तच्छब्दवाच्यत्वोक्तेः॥ 'इद

---

[1] २७ तै उ [2] २-१ तै उ [3] लक्षितमेव पा [4] ब्रह्माण्डे पा
[5] ३ १२७ तै आ [6] २८ तै उ [7] २७ तै उ [8] २८ तै उ
[9] ६८ छां उ [10] ३-४-१० बृ उ [11] माल्लवेयश्रुतिः।

हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः'[1] ॥ 'असर्वः सर्व इत्यपि'[2] ॥ 'विद्याऽऽत्मनि भिदाबोधः'[3] ॥ 'भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा'[3] । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः'[4] । 'असर्वः सर्व इवात्मैव सन्नात्मेव प्रत्यङ्पराङित्येक ईयते बहुधेयते' । 'स पुरुषः' 'स ईश्वरः स ब्रह्म' । 'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते । एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः' ॥ 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह'[5]-त्यादेश्च । उक्ता च प्राप्तिः । 'ब्रह्मैव सन्नि'[6]त्यपि जीव एव ब्रह्मशब्दः । उपपद्यते च विरोधे । प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते । 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरि'ति हि भागवते ॥ १७ ॥

न च तत्तदनुमानविरोधः ॥ ॐ **कामाच्च नानुमानापेक्षा ॐ** ॥ १८ ॥ यथाकामं ह्यनुमातुं शक्यते। अतो न तत्त्वे पृथगनुमानमपेक्ष्यते । उक्तं च स्कान्दे—'यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः । पूर्वापराविरोधाय चेष्यते नान्यथा क्वचिदि'ति ॥ 'नैषा तर्केण मतिरापनेये'ति[7] च ॥ ॐ **अस्मिन्नस्य च तद्योगं शास्ति ॐ** ॥ १९ ॥ अस्य जीवस्य । युक्तिसमुच्चये चशब्दः । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता'[8] । 'अनिलयनेऽभयं प्रतिष्ठां विन्दते'[9] । 'एतमानन्दमयमात्मानमुपसङ्क्रामती'[10]-त्यादि ॥ १९ ॥ आनन्दमयाधिकरणम् ॥ ६ ॥

अदृश्येऽनात्म्य इत्युक्तम् । तच्चादृश्यत्वं 'अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम्। सहैव सन्तं न विजानन्ति देवा'[11]

---

[1] भागवते [2] तुरश्रुतिः [3] भागवते [4] ३ १ २ मु उ [5] मोक्षधर्मे [6] ६ ४ बृ उ [7] २-९ कठ उ [8] २-१ तै उ [9] २ ७ तै उ [10] २ ८ तै उ [11] ३-११ तै आ

इत्यन्तस्थस्य कस्यचिदुच्यते । स च 'इन्द्रो राजा'[1] 'सप्त युञ्जन्ती'[2]-त्यादिभिरन्यः प्रतीयते । तस्मात्स एवानन्दमय इति न मन्तव्यम् ।

॥ ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ २० ॥ अन्तः श्रूयमाणो विष्णुरेव । 'अन्तस्समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे'[3] । 'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः'[4] । 'यस्याण्डकोशश्शुष्ममाहु'[5]रित्यादि तद्धर्मोपदेशात् । स हि क्षीरसमुद्रशायी । तस्य च वीर्यमण्डकोशः । 'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति व्यासस्मृतौ[6] । 'अहं तत्तेजोरस्मीन्नारायण पुरुषं जातमग्रतः । पुरुषात्प्रकृतिर्जगदण्डमि'ति[7] चतुर्वेदशिखायाम् ॥ २० ॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ २१ ॥ 'इन्द्रस्यात्मा निहितः पञ्च होता' 'वायोरात्मानं कवयो निचिक्युः' 'अन्तरादित्ये मनसा चरन्तम्, देवानाꣳहृदयं ब्रह्मान्वविन्ददि'[8]त्यादि भेदव्यपदेशात् ॥ ॥ २१ ॥ अन्तःस्थत्वाधिकरणम् ॥ ७ ॥

'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'[9]-त्याकाशस्यानन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिति न मन्तव्यम् । यतः— ॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ २२ ॥ 'अस्य लोकस्य का गतिरित्याकाश इति होवाचे'[10]त्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते, किन्तु विष्णुरेव । 'स एष परोवरीयानुद्गीथः स

[1] ३-११-६ तै आ [2] ३ ११ ८ तै आ [3] ३-११ १ तै आ [4] ३-११-११ तै आ [5] ३ ११-४ तै आ [6] स्मृते पा [7] च इत्यधिक पाठ [8] ३-११ तै आ [9] २-७ तै उ [10] १ ९ छा उ

एषोऽनन्त'[11] इत्यादि तल्लिङ्गात् । 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । परो मात्रया तन्वा वृधाने'[1] त्यादिना तस्यैव[2] हि तल्लिङ्गम् । 'अनन्तो भगवान्ब्रह्म आनन्देत्यादिभिः पदैः । प्रोच्यते विष्णुरेवैकः परेषामुपचारत' इति[3] ब्राह्मे । 'नामानि सर्वाणि यमाविशन्ती'[4]ति चोक्तम् ॥ २२ ॥ आकाशाधिकरणम् ॥ ८ ॥

॥ ॐ अत एव प्राणः ॐ ॥ २३ ॥ 'तद्वै त्वं प्राणो अभवः महान्भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान्प्राणयो नवे'[5]ति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् । स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवम् । यतो विष्णुरेव प्राणः । अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ, अहोरात्रे पार्श्वे'[6] इत्यादि तल्लिङ्गादेव ॥ २३ ॥ प्राणाधिकरणम् ॥ ९ ॥

'यो वेद निहितं गुहायामि'त्युक्तम् । तच्च गुहानिहितं, 'वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूरआधीः किंस्विद्वक्ष्यामि किमु नू मनिष्य'[7] इति ज्योतिरुक्तम् । तच्च ज्योतिरग्निरुक्तत्वात्प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह—॥ ॐ ज्योतिश्चरणाभिधानात् ॐ॥२४॥ विष्णुरेव ज्योतिः । कर्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधाने'त्यादिना कर्णादिविदूरः ॥२४॥ ज्योतिरधिकरणम् ॥१०॥

॥ ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ २५ ॥ 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्युक्तस्य ज्योतिषो 'गायत्री वा इदꣳ सर्वमि'ति गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेन्न ।

---

[11] १-९ छा उ [1] ७-९९-१ ऋ सं [2] तस्य पा [3] च इत्यधिक. पाठः [4] भाल्लवेयश्रुति [5] ३-१४ तै आ [6] ३-१३ तै आ [7] ६-९-६ ऋ सं

इत्यन्तःस्थस्य कस्यचिदुच्यते । स च 'इन्द्रो राजा'[1] 'सप्त युञ्जन्ती'[2]त्यादिभिरन्यः प्रतीयते । तस्मात्स एवानन्दमय इति न मन्तव्यम् । **॥ ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ २० ॥** अन्तः श्रूयमाणो विष्णुरेव । 'अन्तस्समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे'[3] । 'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः'[4] । 'यस्याण्डकोशःशुष्ममाहु'[5]रित्यादि तद्धर्मोपदेशात् । स हि क्षीरसमुद्रशायी । तस्य च वीर्यमण्डकोशः । 'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति व्यासस्मृतौ[6] । 'अहं तत्तेजोरश्मीन्नारायण पुरुषं जातमग्रतः । पुरुषात्प्रकृतिर्जगदण्डमि'ति[7] चतुर्वेदशिखायाम् ॥ २० ॥ **ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ २१ ॥** 'इन्द्रस्यात्मा निहितः पञ्च होता' 'वायोरात्मानं कवयो निचिक्युः' 'अन्तरादित्ये मनसा चरन्तम्, देवानाःहृदयं ब्रह्मान्वविन्ददि'[8]त्यादि भेदव्यपदेशात् ॥ ॥ २१ ॥ अन्तःस्थत्वाधिकरणम् ॥ ७ ॥

'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'[9]त्याकाशस्यानन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिति न मन्तव्यम् । यतः— **॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ २२ ॥** 'अस्य लोकस्य का गतिरित्याकाश इति होवाचे'[10]त्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते, किन्तु विष्णुरेव । 'स एष परोवरीयानुद्गीथः स

[1] ३-११-६ तै आ [2] ३-११-८ तै आ [3] ३-११-१ तै आ [4] ३-११-१६ तै आ [5] ३-११-४ तै आ [6] स्मृतेः पा [7] च इत्यधिक. पाठ. [8] ३-११ तै आ [9] २-७ तै उ [10] १-९ छा उ

एषोऽनन्त'[11] इत्यादि तल्लिङ्गात् । 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । परो मात्रया तन्वा वृधाने'[1] त्यादिना तस्यैव[2] हि तल्लिङ्गम् । 'अनन्तो भगवान्ब्रह्म आनन्देत्यादिभिः पदैः । प्रोच्यते विष्णुरेवैकः परेषामुपचारत' इति[3] ब्राह्मे । 'नामानि सर्वाणि यमाविशन्ती'[4]ति चोक्तम् ॥ २२ ॥ आकाशाधिकरणम् ॥ ८ ॥

॥ ॐ अत एव प्राणः ॐ ॥ २३ ॥ 'तद्वै त्वं प्राणो अभवः महान्भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान्प्राणयो नवे'ति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् । स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवम् । यतो विष्णुरेव प्राणः । अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ, अहोरात्रे पार्श्वे'[6] इत्यादि तल्लिङ्गादेव ॥ २३ ॥ प्राणाधिकरणम् ॥ ९ ॥

'यो वेद निहितं गुहायामि'त्युक्तम् । तत्र गुहानिहितं, 'वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूरआधीः किंस्विद्वक्ष्यामि किमु नु मनिष्ये'[7] इति ज्योतिरुक्तम् । तच्च ज्योतिरग्निसूक्तत्वात्प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह—॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ २४ ॥ विष्णुरेव ज्योतिः । कर्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधाने'त्यादिना कर्णादिविदूरः ॥ २४ ॥ ज्योतिरधिकरणम् ॥ १० ॥

॥ ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ २५ ॥ 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्युक्तस्य ज्योतिषो 'गायत्री वा इद९ सर्वमि'ति गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेन्न ।

---

[11] १-९ छां.उ. [1] ७-९८-१. ऋ.सं [2] तस्य पा. [3] च इत्यधिकः पाठः [4] भाल्लवेयश्रुतिः [5] ३-१४. तै.आ. [6] ३-१३. तै.आ. [7] ६-९-६. ऋ.सं

तथा चेतोऽर्पणार्थं हि निगद्यते। अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यते। तथाहि दर्शनं 'गायति त्रायति चे'[1]त्यादि। 'सर्वच्छन्दोऽभिधो ह्येष सर्वदेवाभिधो ह्यसौ[2]। सर्वलोकाभिदो ह्येष[3] तेषां तदुपचारत' इति वामने ॥ २५ ॥ ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ॥२६॥ 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी'[4]ति। 'सुवर्णं कोशं रजसा परीवृतं देवानां वसुधानीं विराजम्। अमृतस्य पूर्णां तामु कलां विचक्षते पादं षड्ढोतुर्न किला विवित्स'[5] इति श्रुतेः। पाद इत्येकदेशपरिमितं चतुर्भागवल इतिगच्छिन्न च। स हि पुरुषसूक्ताभिधेयः। 'यज्ञेन यज्ञमयजन्ते'[6]ति यज्ञशब्दात्। 'यज्ञो वै विष्णुर्देवते'[7]ति हि श्रुतिः। 'तस्मिन्काले महाराज राम एवाभिधीयते। यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयत' इति (च) स्कान्दे। ॥ॐउपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ॥ ॥ २७ ॥ 'त्रिपादस्यामृतं दिवी'[8]ति पूर्वोपदेशः। 'परो दिव'[9] इति पञ्चम्यन्तः पश्चिमः। तस्मान्नैक वस्त्वत्रोच्यत इति चेन्न, त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥२७॥ गायत्र्यधिकरणम् ॥११॥[10]

प्राणो विष्णुरित्युक्तम्। तत्र 'ता (वा) एताः शीर्षञ्छ्रियश्रिताश्चक्षुःश्रोत्रं मनो वाक्प्राण'[11]इत्यत्र प्राणस्य विष्णुत्वं न युज्यते[12]। इन्द्रियैः सहाभिधानादित्यत आह ॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ २८ ॥ 'तं देवाः प्राणयन्त'[13] 'स एषोऽसुः स एष प्राणः'[14] 'प्राणऋच इत्येव विद्यात्'[15] 'तदय प्राणोऽधितिष्ठती'[16]त्याद्यनुगमा-

[1] ३-१२-१ छा उ [2] अप्यसौ पा [3] अप्येष पा [4] ३ १२ ६ छा उ
[5] ३ ११ तै आ [6] ३ १२ तै आ [7] श्रुत्यन्तरम् [8] ३ १२ ६ छा उ
[9] ३-१३-७ छा उ [10] ज्योतिर्गायत्र्यधिकरणमित्येकमेवाधिकरण एत क्वचित् [11] २-१-४ ऐ आ [12] विद्यते पा [13] २ १ ५ ऐ आ
[14] २-१-८ ऐ आ [15] २ २ २ ऐ आ [16] २ ३-८ ऐ आ

दत्रापि प्राणो विष्णुरेव । 'विष्णुमेवानयन्देवा विष्णुं भुतिमुपासते । स एव सर्ववेदोक्तस्तद्रथो देह उच्यत'इति स्कान्दे । ब्रह्मशब्दानुगमाच्च॥ २८ ॥ **ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ॥ २९ ॥** 'प्राणो वा अहमस्म्यृष'[1] इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न, 'प्राणस्त्वं प्राणः सर्वाणि भूतानी'[2]ति बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ॥ २९ ॥ ॥ **ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥ ३० ॥** 'तच्छास्त्रमन्तर्यामी । 'संविच्छास्त्रं पर पदमि'ति हि भागवते । 'तच्छास्त्रोच्यते विष्णुः सर्वशास्त्रत्वहेतुतः । न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तममि'ति (च) पाद्मे । 'अहं मनुरभवं सूर्यश्चे'[3]त्यादिवत् ॥ ३० ॥ ॥ **ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ ॥ ३१ ॥** 'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ती'[4]ति जीवलिङ्गम् । प्राणसंवादादि मुख्यप्राणलिङ्गम् । तस्मान्नेति चेन्न । अन्तर्बहिः सर्वगतत्वेनेत्युपासात्रैविध्यादिहाऽश्रितत्वाच्च । 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत'[5] । 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्'[6] । 'एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय'[7] इत्यादिना ॥ 'महिदासाभिधो जज्ञ इतरायास्तपोबलात् । साक्षात्स भगवान्विष्णुर्यस्तन्त्रं वैष्णवं व्यधादि'ति (च) ब्रह्माण्डे । तत्तदुपासनायोग्यतया च पुरुषाणाम् । 'केषाञ्चित्सर्वगत्वेन केषाञ्चिद्धृदये हरिः । केषाञ्चिद्बहिरेवासावुपास्यः पुरुषोत्तम' इति ब्राह्मे ॥ 'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः । प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनामि'ति

[1] २-२-३ ऐ आ  [2] २२३ ऐ आ.  [3] ४२६१. ऋ सं.  [4] २२४ ऐ आ  [5] २-४-३ ऐ आ  [6] २-४-३ ऐ आ  [7] २-१-८ ऐ आ

च ॥ ३१ ॥ पादान्त्यप्राणाधिकरणम् ॥ १२ ॥ इति श्रीमत्कृष्णद्वैपायनकृत ब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते प्रथमाध्यायस्य प्रथमः पादः[1] ॥

ॐ ॥ लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन्पादे प्राधान्येन । 'ब्रह्म ततमि'ति सर्वगतत्वमुक्तं विष्णोः । तच्च 'तर्सतत्सामानादित्यो रस'[2]इत्यादिनाऽऽदित्यस्य प्रतीयत इत्यतोऽब्रवीत्। ॥ **ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ** ॥ १ ॥ 'स यश्चायमशरीरः प्रज्ञात्मे'[3]त्यादिना सर्वत्रोच्यमानो नारायण एव । 'तदेव ब्रह्म परमं कवीनाम्'[4] । 'परम यो महद्ब्रह्म' । 'वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत । स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारत' इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ॥ १ ॥ **ॐ विवक्षितगुणोपपत्तेश्च ॐ** ॥ २ ॥ 'स योऽतोऽश्रुत'[5] इत्यादि[6] । स हि 'न ते विष्णो जायमान'[7] इत्यादिनाऽश्रुतत्वादिगुणः । 'स सविता स वायुः स इन्द्रः, सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्त' इत्यादि चतुर्वेदशिखायाम् ॥ २ ॥

न चाऽऽदित्यशब्दाचक्षुर्मयत्वादेश्च जीव इति वाच्यम् ॥ **ॐ अनुपपत्तेस्तु न शारीरः ॐ** ॥ ३ ॥ एकस्य सर्वशरीरव्यस्त्वानुपपत्तेरेव ॥ ३ ॥ **ॐ कर्मकर्तृव्यपदेशाच्च ॐ**॥४॥ 'आत्मानं परमं भ्रमती'[8]त्यादि ॥ ४ ॥ **ॐ शब्दविशेषात् ॐ** ॥ ५ ॥ 'एतमेव ब्रह्मेत्याचक्षत'[9] इति । न हि जीवमेव ब्रह्मेत्याचक्षते । 'एष उ एव ब्रह्मैष उ एवात्मैष उ एव मन्तैष उ

[1] क्वचित् श्रीमत्कृष्णद्वैपायनकृतेति नास्ति, आचार्य इति च नास्ति ।
[2] ३-२-३ ऐ आ [3] ३-२-४ ऐ आ [4] ६ म ना उ [5] ३-२-४ ऐ आ [6] एतद्वाक्य सूत्रात्पूर्वमेव पठितं क्वचित् । [7] ७-९९-२ ऋ स [8] ३-२-२ ऐ आ [9] ३-२-३ ऐ आ

एवेन्द्र एष उ एव हरिर्हरति परानन्द' इति चैन्द्रद्युम्नशाखायाम् ॥५॥
॥ ॐ स्मृतेश्च ॐ ॥ ६ ॥ 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः'[1] । 'गामाविश्य च भूतानि धारयाम्यहमोजसे'[2]त्यादि । न चाप्रामाणिकं[3] कल्प्यम् ॥ ६ ॥ **ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ॥७॥** सर्वेषु भूतेष्वित्यल्पौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेन्न। अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् । सर्वगतत्वेऽप्यल्पौकस्त्वं युज्यते च व्योमवत् । 'सर्वेन्द्रियमयो विष्णुः सर्वमार्गेषु च स्थितः । सर्वनामाभिधेयश्च सर्ववेदोदितश्च स' इति स्कान्दे ॥ ७ ॥ **ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ ८ ॥** जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न। सामर्थ्यवैशेष्यात् । उक्तं हि गारुडे—'सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः । स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोरि'ति[4] ॥८॥
सर्वगतत्वाधिकरणम् ॥ १ ॥

'जन्माद्यस्य यत'[5] इत्युक्तम् । तत्रातृत्वं 'स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्वमि'[6]त्यदितेः प्रतीयते । 'स यद्यदेवासृजते'ति[7] पुलिङ्गं च 'कूटस्थोऽक्षर उच्यत'[8] इतिवत् । अत्रोच्यते **॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥९॥** न हि चराचरस्य सर्वस्यात्तृत्वमदितेः । 'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु । वासुदेवः परः[10] पुंसामितरेऽल्पस्य वा नवे'ति स्कान्दे ॥ 'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति

[1] १०-२०. भ.गी. [2] १५-१३. भ.गी. [3] अप्रमाणकं पा. [4] इति च पा.
[5] १-१-२. ब्र.सू. [6] ३-२-५. बृ.उ. [7] क्वचित् एतदन्तं नास्ति [8] १५-१६. भ.गी. [9] इत्यादि पा [10] देवो परः पा.

भुवनं साम्पराये स नो हरिर्घृतमिहाऽऽयुपेऽत्तु देव' इति (च) श्रुतिः ॥९॥

॥ ॐ **प्रकरणाच्च** ॐ ॥१०॥ अप्संवत्सरसृष्ट्यादिना तत्प्रकरणाच्च । 'नेहाऽऽसीत्किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा । सो त्मनो मनसाऽस्राक्षीदप एव जनार्दनः ॥ शयानस्तासु भगवान्निर्ममेऽण्डं महत्तरम् । तत्र सवत्सर नाम ब्रह्माणमसृजत्प्रभुः । तमत्तुं व्याददादास्यं तदाऽसौ विरराव ह ॥ अथ तं (तत्) कृपया विष्णुः सृष्टिकर्मण्ययोजयत् । सोऽसृजद्भुवन विश्वमद्यार्थं हरये विभुरि'ति ब्रह्मवैवर्ते ॥ १० ॥ अत्त्राधिकरणम् ॥ २ ॥

सर्वात्त्रैकः पर उक्तः । 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः[1]' । इति पिबन्तौ प्रतीयेते, तौ काविति । उच्यते ।

॥ ॐ **गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** ॐ ॥११॥ गुहा प्रविष्टौ पिबन्तौ विष्णुरूपे एव । 'घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगामे'[2]त्यादिना तद्दर्शनात् । 'आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः । निविष्टो हृदये नित्य रस पिबति कर्मजमि'ति बृहत्संहितायाम् । 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचिदि'ति पाद्मे । 'यो वेद निहितं गुहायामि'[3]त्यादिना प्रसिद्ध हिशब्देन दर्शयति ॥ ११ ॥ ॐ **विशेषणाच्च** ॐ ॥ १२ ॥ 'यः सेतुरीजानानामक्षरं ब्रह्म तत्परमि'[4]ति । 'पृथग्यत्तु गुणास्तस्य न शक्यन्तेऽमितत्वतः यतोऽन्यो ब्रह्मशब्देन सर्वेषां ग्रहण भवेत् ॥ एतस्माद्ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम् । अमिता हि गुणा यस्मान्नान्येषां तमृते वि(प्र)भुमि'ति ब्राह्मे । न च जीवे समन्वयोऽभिधीयते ।

---

[1] १ ३-१ क उ [2] १० ११४ १ ऋ स [3] २-१ तै उ [4] १ ३ २ क उ

'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवाऽरुवण्यो मैवाऽरुवण्यो मैवाऽरुवण्य' इति पैङ्गिश्रुतिः। 'आत्मा हि परमस्स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवर' इति (च) भाल्लवेयश्रुतिः[1]। यथेश्वरस्य जीवस्य भेदस्सत्यो विनिश्चयात्। एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि'॥ 'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम्। तेन सत्येन मां देवास्त्रायन्तु सहकेशवा' इत्यादेर्नानयोर्भेदः॥ १२॥ गुहाधिकरणम्॥ ३॥

आदित्ये विष्णुरित्युक्तम्। 'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मी'[2]त्यादावग्नीनामेवादित्यस्थत्वमुच्यते। अतोऽक्ष्यादित्ययोरैक्या'द्य एषोऽन्तरक्षिणि पुरुषो दृश्यत'[3] इत्यत्राप्यग्निरेवोच्यते। अत'स्तद्यथा पुष्कर पलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत'[4] इत्यग्निज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति। अतोऽब्रवीत्[5]॥ **ॐ अन्तर उपपत्तेः ॐ**॥ १३॥ चक्षुरन्तस्थो विष्णुरेव। 'त्रिपादस्यामृतं दिवी'[6]त्यादिना तस्यैवामृतत्वाद्युपपत्तेः। ब्रह्मशब्दाद्युपपत्तेश्च। सोऽहमसीत्यादि त्वन्तर्याम्यपेक्षया। 'अन्तर्यामिणमीशानमपेक्ष्याहं त्वमित्यपि। सर्वे शब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु' इति महाकौर्मे॥ १३॥ **ॐ स्थानादिव्यपदेशाच्च ॐ**॥ १४॥ 'तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती'[7]त्यादिस्थानशक्तिः वामनिर्भामनिरित्याद्यात्मशक्तिश्चोच्यते। तस्य ह्येतल्लिङ्गम्। 'स ईशः सोऽसपत्नः स हरिः स परः परोवरीयान् यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स वामनः स भामनः स आनन्दः सोऽच्युत'इति चतुर्वेदशिखायाम्। 'यत्स्थानत्वादिदं चक्षुरसङ्ग सर्ववस्तुभिः।

---

[1] क्वचित् श्रुतिरियं न पठिता [2] ४-११ छा उ [3] ४.१५ छा उ [4] ४ १४ छा उ [5] ब्रवीति पा [6] १०-९०-३ ऋ स [7] ४-१५ छा उ

स वामनः परोऽस्माकं गतिरित्येव चिन्तयेदि'ति वामने ॥ १४ ॥ ॥ ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ १५ ॥ 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति,[1] 'विज्ञानमानन्दं ब्रह्म',[2] 'आनन्दो ब्रह्मेति व्यजानादि'[3]त्यादेस्तस्य हि तल्लक्षणम् । 'लक्षणं परमानन्दो विष्णोरेव न संशयः । अव्यक्तादितृणान्तास्तु विलुडानन्दभागिन' इति ब्रह्मतर्के । न च मुख्ये सत्यमुख्यं युज्यते ॥ १५ ॥ ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ १६ ॥ 'स एनान्ब्रह्म गमयती'[4]ति । न ह्यन्यविषया अन्यगतिर्युक्ता ॥ १६ ॥ ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ १७ ॥ जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः, साम्यादसम्भवाच्च न जीवः । नियम (मे) प्रमाणाभावात् । अनीश्वरापक्षत्वाच्च ॥ १७ ॥ अन्तराधिकरणम् ॥ ४ ॥

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत'[5] इत्यादिनाऽन्तर्याम्युच्यते[6] । तत्र 'नैतदमृतमि'[7]त्युक्तममृतत्वमुच्यते । स च 'यस्य पृथिवी शरीरमि'त्यादिना सर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवो वा युक्तः । न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह—

॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ ॥ १८ ॥ 'यं पृथिवी न वेद' 'यः पृथिव्या अन्तर'[8] इत्यादिना अधिदैवादिषु तद्धर्मव्यपदेशाद्विष्णुरेवान्तर्यामी । स हि 'न तं विष्णो जायमानो न जातः'[9] 'स योऽस्तोऽश्रुतोऽमतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुष'[10] इत्यादिनाऽभिहितोऽन्तरश्च ॥ १८ ॥

[1] ४ १० छा उ [2] ५ ९ २८ बृ उ [3] ३ ६ त उ [4] ४ १५ छा उ
[5] ५ ७ ३ बृ उ [6] स्यायन्त पा [7] ४ १५ १ छा उ [8] ५ ७ ३ बृ उ
[9] ७ ९९-२ ऋ सं [10] ३ २ ८ प श्रा

**॥ ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ १९ ॥**

त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामि ॥ १९ ॥

**॥ ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥२०॥**

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः'[1] 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं वेद यस्य विज्ञानं न शरीरमि'त्युभयेऽपि हि शारीरनो भेदेनैन(जीव)मधीयते । 'शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगदि'ति वचनाच्च शरीरत्वविरोधः ॥ २० ॥ अन्तर्याम्यधिकरणम् ॥ ५ ॥

अदृश्यत्वादिगुणा विष्णोरुक्ताः । तत्र 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'[2] इत्युक्त्वा,[3] 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वमि'[4]त्युक्त्वा तस्माच्च 'अक्षरात्परतः परः'[5] इति परः प्रतीयत इत्यतोऽब्रवीत्[6]— **॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ २१ ॥** पृथिव्यादिदृष्टान्तमुक्त्वा 'अक्षरात्सम्भवतीह विश्वमि'[7]त्यतः परं तत्परतः पराभिधानात्, 'कूटस्थोऽक्षर उच्यते'[8] इति स्मृतेश्च प्रकृतेः प्राप्तिः । ब्रह्मशब्दात्तत्परतः पराभिध्यानादेव च हिरण्यगर्भस्य । 'तमेवं विद्वानमृत इह भवति'[9] 'तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया' 'अथ द्वे वाव विद्ये वेदितव्ये परा चैवा(चा)परा च । तत्र ये वेदा

[1] बृ. माध्यन्दिनपाठः [2] १-१-६. मुं.उ. [3] एतदनन्तरं इत्युक्त्वेत्यन्तो ग्रन्थः क्वचिन्नास्ति. [4] १-१-७. मुं.उ. [5] २-१-२. मुं.उ. [6] ब्रवीति पा. [7] १-१-७. मु.उ. [8] १५-१६. भ.गी. [9] ३-१२-७. तै.आ

यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि साऽपरा। अथ परा यया स हरिर्विदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मे'त्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः॥२१॥

॥ ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥२२॥

'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः'[1] इति विशेषणान्न प्रकृतिः। 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते'[2] इति भेदव्यपदेशान्न विरिञ्चः। 'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया॥ तामक्षरं परं प्राहुः परतः परमक्षरम्। हरिमेवाखिलगुणमक्षरत्रयमीरितम्'॥ इति स्कान्दे त्र्यक्षराभिधानादक्षरात्परतः पर इत्यपि विशेषणमेव। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः'[3] इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्रः॥ २२॥ ॐ रूपोपन्यासाच्च ॐ ॥ २३॥ 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमि'[4]ति। 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः। स मुनिर्भूत्वा समचिन्तयत्। तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति। तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्णमिति। स एतान्येतेभ्योऽभ्य(व्य)चीकॢपत्। विमिश्राणि-व्यमिश्रयत्'। अत एतादृगेतद्रूपमिति तस्यैव हि रूपाण्यभिधीयन्ते॥ २३॥ अदृश्यत्वाधिकरणम्॥ ६॥

अदृश्यत्वादिगुणेषु सर्वगतत्वं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते'[5] इति वैश्वानरस्योक्तमित्यत आह—

॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ २४॥

---

[1] १-१-९ मु उ [2] १-१-९ मु उ [3] ३-१-२ मु उ. [4] ३-१-३. मु उ [5] ५-१८-१ छां उ.

अग्निविष्णोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥ २४ ॥ **ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ २५ ॥** 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित'[1] इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम् । समाख्यानात् । इति शब्दः समाख्याप्रदर्शकः ॥ २५ ॥ **ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥२६॥** 'अयमग्निर्वैश्वानरः'[2] 'वैश्वानरमृत आजातमग्निमि'[3]त्यादि(:)शब्दः । 'वैश्वानरे तद्धुतं भवति'[4] । 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय'[5]मित्याद्यग्निलिङ्गमादिशब्दोक्तम् । 'येनेदमन्नं पच्यते'[6] 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमि'[7]त्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते । तस्मान्न विष्णुरिति चेन्न । 'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति' । 'स य एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवती'ति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि ॥ 'अनात्तत्वादनात्मान उक्तात्मगुणराशितः । अब्रह्माणः परे सर्वे ब्रह्मात्मा विष्णुरेव हि'त्यादिना 'को न आत्मा किं ब्रह्मे'[8]त्यारम्भाच्च अन्येषामसम्भवाद्विष्णुरेव वैश्वानरः । 'चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायते'[9]त्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः

---

[1] १५-१४. भ.गी. [2] ७-९-१. बृ.उ. [3] ६-७-१. ऋ.सं. [4] ५-२४-४. छां.उ. [5] ५-१८-२. छां.उ. [6] ७-९-१. बृ.उ. [7] ५-१९-१. छां.उ. [8] ५-११-१. छां.उ. [9] ३-१२. तै.आ.

प्राणः पृथग्वर्त्मे''त्यादिना वैश्वानरमधीयते। चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति। तथा च ब्राह्मे—'यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम्। तथैव मे मनो नित्यं भूयाद्विष्णुपरायणमि'ति। चतुर्वेदशिखायां च 'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपादित्येष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूप' इति। बृहत्संहितायां च—'यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम्। न तथा सर्ववेदाश्च वेदाङ्गानि च नारदे'त्यादि। 'यस्माद्यजायते चाङ्गाछोकवेदादिकं हरेः। तस्मात्सर्वमयमङ्गं तद्यथा ब्रह्मादिकं सुराणमि'ति नारदीयवचनाभावभेदोक्तिविरोधः॥२६॥ ॐ **अत एव न देवता भूतं च** ॐ ॥ २७ ॥ अग्निवैश्वानरादिशब्दस्तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तत्राभिधीयते॥ ॥ २७ ॥ ॐ **साक्षादप्यविरोधं जैमिनिः** ॐ ॥ २८ ॥ नाग्न्यादयः शब्दा अग्न्यादिवाचकास्तथापि साक्षादेवानन्ययोगेन ब्रह्मवाचकशब्दैः व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोध जैमिनिर्मेनेत्ति। 'व्योमचित्तस्थिताकाशादनच्छिन्नानि कानिचित्। अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवदि'ति स्कान्दवचनाच्च मतानां परस्परविरोधः ॥ २८ ॥ ॐ **अभिव्यक्तेरित्याश्मरथ्यः** ॐ ॥ २९ ॥ तत्र तत्र प्रसिद्धाप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः॥२९॥ ॐ **अनुस्मृतेर्बादरिः** ॐ ॥ ३० ॥ तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियम इति बादरिः ॥३०॥ ॐ **सम्पत्तेरिति**

[1] ५-१८-२ छा उ

**जैमिनिस्तथा हि दर्शयति ॐ ॥ ३१ ॥** साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममन्त्यादिसम्प्राप्तथा मन्यते । 'तं यथा यथोपासते तदेव भवती'ति दर्शयति ॥ ३१ ॥ न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—॥ **ॐ आमनन्ति चैनमस्मिन् ॐ ॥ ३२ ॥** एनं विष्णुमग्न्यादावामनन्ति । 'योऽग्नौ तिष्ठन्'[1] 'य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष'[2] इत्यादिना ॥ ३२ ॥ वैश्वानराधिकरणम् ॥ ७ ॥ इति श्रीमत्कृष्णद्वैपायनकृत ब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते प्रथमाध्यायस्य द्वितीयः पादः ॥

ॐ तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन्पादे दर्शयति । विष्णोः परविद्याविषयत्वमुक्तम् । तत् 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमि'[3]त्यत्र 'प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः'[4] 'प्राणेश्वरः कृत्तिवासाः पिनाकी'[5]त्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः 'स एषोऽन्तश्चरते बहुधा जायमान'[6] इति जीवलिङ्गाच्च तयोः प्राप्तिरित्यत उच्यते[7] ॥ **ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ १ ॥** 'तमेवैकं जानथ आत्मानमि'[8]त्यात्मशब्दात् द्युभ्वाद्याश्रयो विष्णुरेव । 'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् । न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णते'ति ब्रह्मवैवर्ते ॥ १ ॥ **ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥** 'अमृतस्यैष सेतुरि'[8]ति । 'ब्रह्मविदाप्नोति परम्'[9], 'नारायणं

---

[1] ५-७-५. बृ. उ. [2] ४-५३ बृ. उ. [3] २ २ ५. मु. उ. [4] ३ ५. म.ना उ. [5] पुलसूक्तम्. [6] २-२-६ मुं. उ. [7] आह. पा. [8] २-२-५ मुं उ [9] २-१. तै. उ.

महाज्ञेयं विश्वात्मानं परायणम्'[1] 'मुक्तानां परमा गतिः' 'एतमानन्दमयमात्मानमुपसङ्क्रामती'[2] त्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् । 'बहुनाऽत्र किमुक्तेन यावन्नैतं न गच्छति । योगी तावन्न मुक्तस्स्यादेष शास्त्रविनिर्णय' इत्यादित्यपुराणे ॥ २ ॥ ॥ ॐ नानुमानमतच्छब्दात् ॐ ॥ ३ ॥ नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः । भस्मधरोग्रत्वादितच्छब्दाभावात् । 'सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयानि'त्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् । ब्रह्माण्डे च 'रुतं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । ईशनादेव चेशानो महादेवो महत्त्वतः ॥ पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात् । तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥ शिवः सुखात्मकत्वेन सर्वः संरोधनाद्धरिः ॥ कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन् ॥ कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् । बृंहणाद्ब्रह्मनामाऽसावैश्वर्यादिन्द्र उच्यते ॥ एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः । वेदेषु सपुराणेषु गीयते पुरुषोत्तम' इति । वामने च 'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः । अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित' इति । स्कान्दे च 'ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्' इति । 'चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति । उग्रो भस्मधरो नग्नः कपालीति शिवस्य च । विशेषनामानि ददौ स्वकीयान्यपि केशव' इति (च) ब्राह्मे ॥ ३ ॥ ॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥ एतैरेव हेतुभिर्न जीवो वायुश्च । 'अजायमानो बहुधा विजायत'[3] इति तस्यैव बहुधा जन्मोक्तेः ॥ ४ ॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥ न चैस्य वाच्यम् । 'जुष्टं

[1] ११ (म ना उ) [2] २-८ तै उ [3] ३-१३ । तै आ

यदा पश्यत्यन्यमीशमस्य महिमानमि[1]ति भेदव्यपदेशात् ॥ ५ ॥
॥ ॐ **प्रकरणात् ॐ** ॥ ६ ॥ 'द्वे विद्ये वेदितव्ये'[2] इति तस्य हेतत्प्रकरणम् ॥ ६ ॥ ॥ ॐ **स्थित्यदनाभ्यां च ॐ** ॥ ७ ॥ 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीती'ति ईशजीवयोः स्थित्यदनोक्तेः ॥ ७ ॥ द्युभ्वाद्यधिकरणम् ॥ १ ॥

'प्राणो वा आशाया भूयान्' इत्युक्त्वा 'यो वै भूमा तत्सुखमि'[4]त्युक्तेस्तस्यैव भूमत्वप्राप्तिः । 'उत्क्रान्तप्राणानि'[5]त्यादितल्लिङ्गात्प्राणशब्दश्च वायुवाचीत्यतो वक्ति॥ ॐ **भूमा सम्प्रसादादध्युपदेशात् ॐ** ॥ ८ ॥ 'सम्प्रसादात्' पूर्णसुखरूपत्वात् 'अध्युपदेशात्' सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा । 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् ॥ विश्वतः परमां नित्यमि'[6]ति हि श्रुतिः । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'[7]त्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि ॥ ८ ॥ ॐ **धर्मोपपत्तेश्च ॐ** ॥ ९ ॥ सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥ भूमाधिकरणम् ॥ २ ॥

अदृश्यत्वादिगुणा विष्णोरुक्ताः[8] 'अदृष्टं द्रष्टृश्रुतं श्रोत्रि'[9]त्यादिना । 'अहं सोममाहनसं बिभर्मी'[10]त्यादेस्तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इत्यतो ब्रूते ॥ ॐ **अक्षरमम्बरान्तधृतेः**

1 ३-१-२. मुं.उ. 2 १-१-४. मुं.उ. 3 ३-१-१. मुं.उ. 4 २-३. छां.उ. 5 ७-१५-३. छां.उ. 6 ११. म.ना.उ. 7 ६ ४-२. बृ.उ.
8 विष्णोरुक्ताः इति क्वचिन्नास्ति 9 ५-५-११. बृ.उ. 10 १०-१२४-२. ऋ.सं.

ॐ ॥ १० ॥ 'एतस्मिन् (नु) खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे' [1]स्यम्वरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम्। 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा'[2]। 'भर्ता सन्भ्रियमाणो बिभर्ति। एको देवो बहुधा निविष्टः[3]। यदा भारं तन्द्रयते स भर्तुम्। परास्य[4] भारं पुनरस्तमेति[5]'। 'यस्मिन्निदं सञ्च नि चैवि सर्वं यस्मिन्देवा अधि विश्वे निषेदुरि'[6]त्यादिश्रुतेः। 'पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत्। विष्णुरेको बिभर्तीदं नान्यस्तस्मात्समो धृतावि'ति(च) स्कान्दे ॥ १० ॥ ॐ सा च प्रशासनात् ॐ ॥ ११ ॥ सा च धृतिः प्रशासनादुच्यते 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत'[7] इत्यादिना। तच्च प्रशासनं विष्णोरेव। 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि'[8]। 'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीरवीविपदि'[9]त्यादिश्रुतेः। 'एकः शास्ता न द्वितीयोऽस्ति शास्ता'[10] 'यो हृच्छयस्तमहमिह ब्रवीमि'[11] 'न केवलं मे भवतश्च राजन्स वै बलं बलिना चापरेषामि'[12]त्यादेश्च ॥ ११ ॥

ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥ 'अस्थूलमनण्वि'[13]त्यादिना स्थूलत्वादीनामन्यवस्तुस्वभावाना व्यावृत्तेश्च। 'अस्थूलोऽनणुरमध्यमो मध्यमोऽप्यव्यापको व्यापको योऽसौ हरिरादिरनादिरविधो विधः सगुणो निर्गुण' इत्यादेर्विष्णोरेव(हि) ते धर्माः। 'अस्थूलोऽनणुरूपोऽसावविधो'[14]विध एव च। विरुद्धधर्मरूपोऽसाव-

---

[1] ५ ७ ११ बृ उ [2] १-१५४ ४ ऋ सं [3] सन्निविष्ट पा
[4] निधाय पा [5] ३ १४ तै आ [6] १ २ म ना उ [7] ५ ८ ९ बृ उ
[8] १ १६४ ३६ ऋ सं [9] १ १५५ ६ ऋ सं [10] भारते [11] ग्रन्थोऽयं
कचित्र पठित [12] भागवते [13] ५ ८ ८ बृ उ [14] स विधोऽविध पा

ऽर्थात्पुरुषोत्तम' इति च[1] ब्राह्मे ॥ १२॥ अक्षराधिकरणम् ॥ ३ ॥

'सदेव सोम्येदमग्र आसीदि'[2]त्यादिना सतः स्रष्टृत्वमुच्यते। तच्च सत् 'बहु स्यां प्रजायेये'[3]ति परिणामप्रतीतेर्न विष्णुः। स 'ह्यविकारस्सदा शुद्धो नित्य आत्मा सदा हरिरि'त्यादिनाऽविकारः प्रसिद्ध इत्यतो ब्रवीति ॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १३ ॥ 'तदैक्षते'तीक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते। 'नान्योऽतोऽस्ति द्रष्टा'[4]'नान्यदतोऽस्ति द्रष्टृ'[5]त्यादिना तस्यैव हि तल्लक्षणम्। बहुत्वं चाविकारेणैवोक्तं 'अजायमानो बहुधा विजायत'[6] इति ॥ १३ ॥ सदधिकरणम् ॥ ४ ॥

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम्। तच्च 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः . . . . किं तदत्र विद्यते . . . .'[7] 'उभे अस्मिन् द्यावा पृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ। विद्युन्नक्षत्राणी'[8]त्यादिनाऽकाशस्य प्रतीयते। स चाकाशो न विष्णुः। 'तस्यान्ते सुषिरँ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमि'[9]ति श्रुतेरित्यत आह ॥ ॐ दहर उत्तरेभ्यः ॐ ॥ १४ ॥ 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य'[10] इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरे विष्णुरेव। 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति'[11] 'स एष सर्वेभ्यः पाप्मभ्य उदित'[12] इत्यादिना विष्णोरेव हि ते गुणाः। 'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः। अशनायादि-

[1] आदि पा. [2] ६-२-१ छां.उ. [3] ६-२-३ छां.उ. [4] ५-७-२३. बृ.उ. [5] ५-८ ११ बृ उ. [6] ३-१३ १ तै. आ. [7] ८-१-२. छां.उ. [8] ८-१-३. छां.उ. [9] ११. म.ना.उ. [10] ८-७-१. छां.उ. [11] ५-५. बृ.उ. [12] १-६-७. छां.उ.

कानन्ये तत्प्रमादात्तरन्ति ही 'ति पाद्मे । सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् । 'सत्यकामः परो नास्ति तमृते विष्णुमव्ययम् । सत्यकामत्वमन्येषा भवेत्तत्काम्यकामिते 'ति स्कान्दे ॥ १४ ॥

**ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ १५ ॥** 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती '[2]ति सुप्तस्य तद्गतिर्ब्रह्म शब्दश्चोच्यते । 'सता सोम्य तदा सम्पन्नो भवती '[3]ति श्रुतेस्तं हि सुप्तो गच्छति । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक '[4] इति लिङ्गं च तथा(हि) दृष्टम् । 'अरश्च वै ण्यश्च सुधामसमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वा'वित्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ॥ १५ ॥ **ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १६ ॥** 'एष सेतुर्विधृतिरि '[5]ति धृतेः, '(एष सर्वेश्वर) एष भूताधिपतिरेष भूतपाल '[6] इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः । 'एतस्मिन्(न्नु) खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च '[7] 'एतस्य वा अक्षरस्य प्रशासने गार्गि '[8] 'स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः' 'पतिं विश्वस्याऽत्मेश्वरमि '[9]त्यादि श्रुतिभ्यस्तस्य ह्येष महिमा । 'सर्वेभ्यो विष्णुरेवैको नान्योऽस्ति जगतः पतिरि 'ति स्कान्दे ॥ १६ ॥ **ॐ प्रसिद्धेश्च ॐ ॥ १७ ॥** 'तत्रापि दह्र (हर) गगन विशोक स्तस्मिन् यदन्तस्तदुपासितव्यमि '[10]ति प्रसिद्धेश्च । तदन्तस्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः ॥ १७ ॥ **ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ १८ ॥** 'पर ज्योतिरुपसम्पद्य

---

[1] कामोऽपरो वा [2] ८ ३ २ छा उ [3] ६-८ १ छा उ [4] ८-५ ३ छा उ [5] ८-४ १ छा उ [6] ६ ४ २२ बृ उ [7] ५ ८ ११ बृ उ [8] ५ ८ ९ बृ उ [9] ११ म ना उ [10] १० ७ म ना उ

स्वेन रूपेणाभिनिष्पद्यते'[1] 'एष आत्मेति होवाचे'[2]ति जीवपरामर्शात्स इति चेन्न। तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥ १८ ॥

॥ ॐ **उत्तराच्चेदाविर्भूतस्वरूपस्तु** ॐ ॥ १९ ॥ 'स तत्र पर्येति जक्षन् क्रीडन् रममाण'[3] इत्याद्युत्तरवचनाज्जीव एवेति चेन्न। तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते। यत्प्रसादात्स मुक्तो भवति स भगवान्पूर्वोक्तः ॥ १९ ॥ ॐ **अन्यार्थश्च परामर्शः** ॐ ॥ २० ॥ यं प्राप्य स्वेन रूपेण जीवो निष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः ॥ २० ॥ ॐ **अल्पश्रुतेरिति चेत्तदुक्तम्** ॐ ॥ २१ ॥ 'दहर'[4] इत्यल्पश्रुतेर्नेति चेन्न। 'निचाय्यत्वादेवं व्योमवच्चे'त्युक्तत्वात्। 'एष म आत्माऽन्तर्हृदये ज्यायानि'[5]ति श्रुत्युक्तत्वाच्च ॥ २१ ॥ दहराधिकरणम् ॥ ५ ॥

अदृश्यत्वादयः परमेश्वरगुणा उक्ताः। 'तेषां सुखं शाश्वतं नेतरेषाम्। तदेतदितिमन्यन्तेऽनिर्देश्यं परमं सुखमि'[6]त्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति ॥ ॐ **अनुकृतेस्तस्य च** ॐ ॥ २२ ॥ 'तमेव भान्तमनुभाति सर्वमि'[7]त्यनुकृतेः, 'तस्य भासा सर्वमिदं विभाती'[7]ति वचनाच्च परमात्मैवानिर्देश्यसुखरूपः। न हि ज्ञानिसुखमनुभाति सर्वम्। न च तद्भासा। 'अहं तत्तेजो रश्मीदि'ति नारायणभासा हि सर्वं भाति ॥ २२ ॥ ॐ **अपि स्मर्यते** ॐ ॥ २३ ॥ 'यदादित्यगतं तेजो

---

1 ८-१२-३. छां.उ. 2 ८।७।१. छां.उ. 3 ८।१२।३. छां.उ.
4 ८।१।१. छां.उ. 5 ३-१४।३. छां.उ. 6 ५-१२, १४ क.उ. कथं नु तद्विजानीयामित्यधिकः पाठः क्वचित्. 7 ५-१५. क.उ.

जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक-मि'[1]ति। 'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'[2]ति च ॥२३॥ अनुकृत्यधिकरणम् ॥ ६ ॥

विष्णुरेव जिज्ञास्य इत्युक्तम् । तत्र 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासते'[3] इति सर्वदेवो-पास्यः कश्चित्प्रतीयते । स च 'एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथ गेव सन्निधत्ते'[4] 'योऽयं मध्यमः प्राणः'[5] 'कुविदङ्ग'[6]त्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते । अतोऽन्नीत् ॥ ॐ **शब्दादेव प्रमितः** ॐ ॥ २४ ॥ वामन-शब्दादेव विष्णुरिति प्रमितः । न हि श्रुतेर्लिङ्गं बलवत् । 'श्रुति लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वं पूर्वं बलीयः स्यादेवमा-गमनिर्णयः' इति स्कान्दे । तच्च लिङ्गं विष्णोरेव । तस्यैव प्राणत्वोक्तेः 'तद्वै त्वं प्राणो अभवः' इति ॥ २४ ॥ ॐ **हृद्यपेक्षया तु मनुष्याधिकारत्वात्** ॐ ॥ २५ ॥ सर्वगतस्यापि तस्याङ्गुष्ठ-मात्रत्वं हृदयकाशापेक्षया युज्यते । इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्या-धिकारत्वान्न विरोधः ॥ २५ ॥ वामनाधिकरणम् ॥ ७ ॥

मनुष्याणामेव वेदविद्यायामधिकार इत्युक्तम् । तिर्यगाद्यपेक्ष-यैव मनुष्यत्वविशेषणमुक्तं, न तु देवाद्यपेक्षयेत्याह—ॐ **तदुपर्यपि बादरायणः सम्भवात्** ॐ ॥ २६ ॥ तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि । सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावात् ।

1 १५ १२ भ गी 2 १५ ६ भ गी 3 ५ ३ क उ 4 ३ ४ प्र उ
5 ३ ५ २१ बृ उ 6 ७ ९ ११ ऋ सं

तिर्यगादीनां तदभावादभावः । तेषामपि यत्र विशिष्टबुद्ध्यादिभावस्तत्राविरोधः । निषेधाभावात् । दृश्यन्ते हि जरितार्यादयः ॥ २६ ॥ ॐ

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ २७ ॥** मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत्पूर्वं देवताभावाद्देवतोद्दिष्टकर्मणि विरोध इति चेन्न । अनेकेषां देवतापदप्राप्तेर्दर्शनात् । 'ते ह नाकं महिमानः सचन्ते(न्त) यत्र पूर्वे साध्याः सन्ति देवा'[1] इति ॥ २७ ॥ ॐ

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ॥ २८ ॥**'वाचा विरूप नित्यये'[2]त्यादि श्रुतेराप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य, स्वतः प्रामाण्यप्रसिद्धेश्च नित्यत्वाद्वेदस्य तदुदितानां देवानामनित्यत्वात् पुनरन्यभावनियमाभावाच्च[3] शब्दे विरोध इति चेन्न । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'[4] 'यथैव नियमः काले सुरादिनियमस्तथा । तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यती'त्यादेरत एव शब्दात्तेषां प्रभवनियमात्, महतां प्रत्यक्षात् । यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्च ॥ २८ ॥ ॐ

**अत एव च नित्यत्वम् ॐ ॥ २९ ॥** अत एव शब्दस्य नित्यत्वादेव च देवप्रवाह(स्य)नित्यत्वं युक्तम्[5] ॥२९ ॥ ॐ

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥ ३० ॥** अतीतानागतानां देवानां समाननामरूपत्वात्प्राप्तपदानां मुक्त्याऽऽवृत्तावप्यविरोधः । 'यथापूर्वमि'[6]ति दर्शनात् । 'अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा । ऋषीणां नामधेयानि याश्च वेदेषु

[1] ३ १२. तै आ [2] ८ ६४ ६ ऋ स [3] पुनरित्यादि क्वचित् नास्ति
[4] ५-७ म ना उ [5] भवति पा [6] ५ ७. म ना उ

ह्यय: । वेदशब्देभ्य एवादौ निर्ममे स महेश्वर[1] इति स्मृतेश्च ॥ ३० ॥
**ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ** ॥ ३१ ॥ 'वसूनामेवैको भूत्वे'[1]त्यादिना प्राप्यफलत्वात्प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥ ३१ ॥ **ॐ ज्योतिषि भावाच्च ॐ** ॥ ३२ ॥ ज्योतिषि सर्वज्ञत्वे भावाच्च । आदित्यप्रकाशेऽन्तर्भावयत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावात् । नित्यसिद्धत्वाच्च विद्यानाम् ॥ ३२ ॥ **ॐ भावं तु बादरायणोऽस्ति हि ॐ** ॥ ३३ ॥ फलविशेषभावात्प्राप्तपदानामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते । अस्ति हि प्रकाशविशेषः । 'यावत्स्मेवा परे तत्त्वे तावत्सुरविशेषता । सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ॥ तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् । सर्वे निधीयते नित्यं सर्वयज्ञादिकर्म चे'ति स्कान्दे ॥ उक्तफलानधिकारमात्रं जैमिनिमतम् । अतो न तन्मतनिरोधः[2] । 'सर्वज्ञस्यैव कृष्णस्य ह्येकदेशविचिन्तितम् । स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यत' इति (च) ब्राह्मे ॥ ३३ ॥ देवताधिकरणम् ॥ ८ ॥

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्या'प्यह हारेत्वा शूद्र'-[3]ति पौत्रायणोक्तेरधिकार इत्यत आह ॥ **ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ** ॥ ३४ ॥ नासौ पौत्रायणश्शूद्रः, शुचाऽऽद्रवणमेव शूद्रत्वम्[4] । 'कम्वर एतमेतत्सन्तमि'[5]त्यनादरश्रवणात् । 'स ह सञ्जिहान एव क्षत्तारमुवाचे'[6]ति सूच्यते हि ॥ ३४ ॥ **ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्र-**

---

[1] ३-६-२ छा उ  [2] तदिति क्वचिन्नास्ति  [3] ४-२-३ छा उ
[4] शूद्रशब्देनोक्तम् पा  [5] ४-१-३ छा उ  [6] ४-१-५ छा उ

-**रथेन लिङ्गात् ॐ ॥ ३५ ॥** अयमश्वतरीरथ इति चित्ररथ-सम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च । 'रथस्त्वश्वतरी-युक्तश्चित्र इत्यभिधीयत' इति ब्रह्माण्डे[1] । 'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथ' इति (च) ब्रह्मवैवर्ते ॥ ३५ ॥ **ॐ संस्कारपरा-मर्शात्तदभावाभिलापाच्च ॐ ॥ ३६ ॥** 'अष्टवर्षं ब्राह्मण-मुपनयीत, तमध्यापयीते'त्यध्ययनार्थं संस्कारपरामर्शात् । 'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्ये'ति पैङ्गिश्रुतौ संस्कारा-भावाभिलापाच्च । उत्तमस्त्रीणां तु न शूद्रवत् । 'सपत्नीं मे पराधमे'[2] त्यादिष्वधिकारदर्शनात् । संस्काराभावेनामावस्तु सामान्येन । अस्ति च तासां संस्कारः । 'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथे'ति स्मृतेः[3] ॥ ३६ ॥ **ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ ॥ ३७ ॥** 'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मी'[4]ति सत्यवचनेन सत्य-कामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतदब्राह्मणो विवक्तुमर्ह-ती'[5]ति तत्संस्कारे प्रवृत्तेश्च ॥ ३७ ॥ **ॐ श्रवणाध्ययनार्थ-प्रतिषेधात्स्मृतेश्च ॐ ॥ ३८ ॥** 'श्रवणे त्रपुजतुभ्यां श्रोत्र-परिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारण-मि'[6]ति प्रतिषेधात् । 'नाग्निर्न यज्ञश्शूद्रस्य तथैवाध्ययनं कुतः । केवलैव तु शुश्रूषा त्रिवर्णानां विधीयत' इति स्मृतेश्च । विदुरादीनां तु उत्पन्नज्ञानत्वात्कश्चिद्वि[7]शेषः ॥ ३८ ॥ अपशूद्राधिकरणम् ॥९॥

'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं -वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती'[8]त्युपलब्धब्रह्मात्ममोक्षः प्रतीयते

[1] ब्राह्मे पा. [2] १-१६. मन्त्रप्रश्न [3] व्यासस्मृतिः [4] ४ ४. छां.उ. [5] ४-५. छां.उ [6] १२-४-७. गौ.ध. [7] कश्चित् कश्चिदिति नास्ति कुम्भकोण पुस्तके नैत्यधिकः पाठः. [8] २-३-२. क.उ.

(श्रूयत) इत्यतोऽब्रवीत् ॥ ॐ कम्पनात् ॐ ॥ ३९ ॥ एजतीति कम्पनरचनादुद्यतवज्रो भगवानेव 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'[1]ति हि श्रुतिः। 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरि'[2]ति च। 'नमस्सतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः। किमुतान्यस्य जगतो यस्य चेष्टा नमस्सत' इति (च) (हि) स्कान्दे ॥ 'चक्रं चङ्क्रमणादेष वर्जनाद्वज्र उच्यते । खण्डनात्खड्ग एवैष हेतिनामा स्वयं हरिरि'ति ब्रह्मवैवर्ते ॥३९॥ कम्पनाधिकरणम् ॥१०॥

हृदय आहितं ज्योतिः परमात्मेत्युक्तम्। तत्र 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष'[3] इत्यत्र 'उभौ लोकावनुसञ्चरती'[4]ति वचनाज्जीव इति प्रतीयत इत्यत उच्यते—॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ ४० ॥ 'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म(।) विष्णुरेवाऽऽत्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्द' इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव । 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्याती'[4]ति वचनात्तस्यापि लोकसञ्चरणमस्त्येव ॥४०॥ ज्योतिरधिकरणम् ॥ ११ ॥

सर्वाधारत्वं विष्णोरुक्तम् त'दाकाशो वै नाम नामरूपयोर्निर्वहिते'[5] त्यत्राऽऽकाशस्य प्रतीयते । वैनामेति प्रसिद्धोपदेशात् । प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्यत उच्यते ॥ ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ ४१ ॥ 'ते यदन्तरा तद्ब्रह्म'[5] त्यर्थान्तरत्वादि व्यपदेशादाकाशो हरिरेव। 'अवर्ण'[6] 'यतो वाचो निवर्तन्त'[7] इत्यादि श्रुतेस्तस्यैव हि तल्लक्षणम्। 'अनामा सोऽप्रसि-

[1] २७ तै उ [2] ६-४ १८ बृ उ [3] ६-३ ७ बृ उ [4] ६ ३ ३५ बृ उ
[5] ८-१४ १ छा उ [6] अवर्णमचक्षुश्श्रोत्रम्' इत्याद्याथर्वणी श्रुति
[7] २ ४ तै उ

द्भुत्वादरूपो भूतवर्जनादि'ति (हि) ब्राह्मे ॥ ४१ ॥ आकाशाधिकरणम् ॥ १२ ॥

असङ्गत्वं परमात्मन उक्तम् । तच्च 'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष'[1] इति स्वप्नादिद्रष्टुः प्रतीयते । स च जीवः प्रसिद्धेरित्यत आह—॥ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ ४२ ॥ 'प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्'[2] 'प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद्याती'[3]ति भेदव्यपदेशान्न जीवः, पर एवासङ्गः । स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ॥ ४२ ॥ सुषुप्त्यधिकरणम् ॥ १३ ॥

'एष नित्यो महिमा ब्राह्मणस्ये'[4]ति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते । स च ब्राह्मणः 'स वा एष महानज आत्मे'[5]त्यजशब्दादिभिरिश्व इति प्राप्तम् । देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति । अतो ब्रवीति ॥ ॐ पत्यादि शब्देभ्यः ॐ ॥ ४३ ॥ 'सर्वस्याधिपतिः सर्वस्येशानः . . . . स वा एष नेति नेती'[6]त्यादि शब्देभ्यो नित्यमहिमा विष्णुरेव । 'उतामृतत्वस्येशानो यदन्नेनातिरोहति'[7] 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि'[8] 'स योऽस्तोऽश्रुत'[9] इत्यादि श्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥ ४३ ॥ ब्राह्मणाधिकरणम् ॥ १४ ॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते प्रथमाध्यायस्य तृतीयः पादः ॥

---

[1] ६-३ १५. बृ. उ.　[2] ६-३-२१ बृ. उ.　[3] ६-३-३५. बृ.उ.
[4] ६-४-२२. बृ.उ.　[5] ६-४-२४. बृ.उ.　[6] ६-४ २१. बृ.उ.
[7] ३ १२. तै.आ.　[8] १-१६४-३६. ऋ.सं.　[9] ३-२-४. ऐ.आ.

ॐ॥श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन[1] विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पादे ॥ॐ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ** ॥१॥ 'तत्तु समन्वया'[2]दिति सर्वशब्दानां परमेश्वरे समन्वय उक्तः । तन्न युज्यते । यतो'ऽव्यक्तात्पुरुषः पर'[3] इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः । क्तप्रत्ययः इत्तसने । परमात्मन एवाव्यक्तशब्दः । तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याप्यव्यक्तशब्दः । 'तुच्छ्येनाभ्वपिहितं यदासीदि'[4]ति दर्शयति च । 'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् । यो वेद हरिमात्मानं स भयादनुमुच्यत' इति पिप्पलादशाखायाम् । 'अक्षरं ब्रह्म परममि'त्युक्त्वा 'अव्यक्तोऽक्षर इत्युक्त(च्यत)'[5] इति वचनाच्च ॥१॥ ॐ **सूक्ष्मं तु तदर्हत्वात् ॐ** ॥ २ ॥ सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तद्ध्यव्यक्ततामर्हति । सूक्ष्मत्वं च मुख्यं तस्यैव । 'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति । यत्तल्लोका न विदुर्लोकसार विन्दन्त्येतत्कवयो योगनिष्ठा' इति च पिप्पलादशाखायाम् । मुख्ये च विद्यमाने नामुख्यं युक्तम् ॥ २ ॥ ॐ **तदधीनत्वादर्थवत् ॐ** ॥३॥ तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरात्परत्वादिकमर्थवत् । 'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते । यथा जीवः परात्मेति यथा राजा जयीत्यपी'ति च स्कान्दे ॥ ३ ॥ ॐ **ज्ञेयत्वावचनाच्च ॐ** ॥ ॥ ४ ॥ अन्यस्य न वाच्यत्वं युज्यते ॥ ४ ॥ ॐ **वदतीति**

[1] एतदन्त कचित् नास्ति [2] १-१-४ ब्र सू [3] १-३-११ क उ
[4] १०-१२९-३ ऋ स [5] ८-३, २१. भ गी

**चेन्न प्राज्ञो हि ॐ ॥ ५ ॥** 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत'[1] इति ज्ञेयत्वं वदतीति चेन्न । प्राज्ञः परमात्मा हि तत्रोच्यते ॥ 'अणोरणीयान्महतो महीयानि'[2]ति तस्यैव हि महतो महत्वम् । सर्वस्मात्परस्य महतोऽपि परत्वं युज्यते ॥ ५ ॥ **॥ ॐ प्रकरणात् ॐ ॥६॥** 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि'[3]ति तस्य ह्येतत्प्रकरणम् ॥ ६ ॥ **ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ॥७॥** त्रयाणामेव पितृसौमनस्य-स्वर्गाग्निपरमात्मनां प्रश्न उपन्यासश्च । 'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयत' इति वचनान्न विरोधः ॥ ७ ॥ **ॐ महद्वच्च ॐ ॥ ८ ॥** यथा महच्छब्दो महत्तत्त्वे प्रसिद्धोऽपि परममहत्वात्परमात्मन एव मुख्यः एवमितरेऽपि ॥ ८ ॥ **ॐ चमसवदविशेषात् ॐ ॥ ९ ॥** यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपि 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न'[4] इति श्रुतेः शिरोवाचक(ः) एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती'[5]त्यादि श्रुतेः परमात्माभिधायका एव । अविशेषाच्छ्रुतेः ॥९॥ आनुमानिकाधिकरणम् ॥१॥

'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादि कर्माभिधायकस्य कर्मक्रमादिविरोधान्न युज्यत इत्यत आह— **॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ १० ॥** ज्योतिरादि कर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । 'एष इमं लोकमभ्यार्चदि'त्युपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदास्सर्वे घोषाः एकैव

---

[1] १-३-१५. क.उ. [2] १-२-२०. क.उ. [3] १-३-९. क.उ. [4] २.२.३. बृ.उ. [5] माल्लवेयश्रुतिः.

व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यादि[1]ति ह्यधीयत एके ॥१०॥
॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥११॥ मधुविद्यादिवत्सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्मक्रमादि विरोधः ॥ ११ ॥ ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥

॥ ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२ ॥ 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित[2] इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः। तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपत्वाच्च ॥ १२ ॥ पञ्च जनानाह—
॥ ॐ प्राणादयो वाक्यशेषात् ॐ ॥ १३ ॥ 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन' इति वाक्यशेषात् ॥ १३ ॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ ॥१४॥ 'तद्देवा ज्योतिषां ज्योति'[3]रित्यनेन काण्वानां पञ्चकम्॥१४॥ नसङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति ॥ ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ॥ ॥ १५ ॥ आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः। यथाव्यपदिष्टस्यैव परस्य 'य आकाशे तिष्ठन्नि'[4]त्यादिना आकाशादिषूक्तेः ॥ ॥ १५ ॥ आकाशाधिकरणम् ॥ ४ ॥

सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतो ब्रवीति ॥ ॐ समाकर्षात् ॐ ॥ १६ ॥ परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते। 'परस्य वाचकाश्शब्दाः

---
[1] ७.२.२ ऐ आ [2] ६-४ १७. बृ उ [3] काण्वपाठ [4] अथ या
जीयो जदानि षा

समाकृष्येतरेष्वपि । व्यवह्रियन्ते सततं लोकवेदानुसारत' इति पाद्मे ॥ ॥ १६ ॥ तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः ? ॥ ॐ **जगद्वाचित्वात् ॐ ॥ १७ ॥** जगति व्यवहारो लोकस्य । न तु परमात्मनि तथा । अतो जगति प्रसिद्धिः शब्दानाम् ॥१७॥ ॥ **ॐ जीवमुख्यप्राणलिङ्गादिति चेत्त(न्न त)द्व्याख्यातम् ॐ ॥१८॥** तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम् । तज्जीवमुख्यप्राणयोर्लिङ्गम् । 'अस्य यदेकां शाखां जीवो जहात्यथ' सा शुष्यति'[2] 'वायुना हि लोका नेनीयन्त' इत्यादि श्रुतिभ्य इति चेन्न । उपासात्रैविध्यादिति व्याख्यातत्वात् ॥ १८ ॥ **ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥१९॥** परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये'[3] 'कथं नु भगवः स आदेशो भवतीति । यथा सौम्यैकेन मृत्पिण्डेने'[4]त्यादिप्रश्नव्याख्यानाभ्याम् । एवमपि चैके पठन्ति 'यस्तन्न वेद किमृचा करिष्यती'[5]ति ॥१९॥ **ॐ वाक्यान्वयात् ॐ ॥ २० ॥** वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थितस्यापि परमात्मना ॥ २० ॥ **ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ २१ ॥** 'नान्यः पन्था अयनाय विद्यत'[6] इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति ॥२१॥ **ॐ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॐ ॥ २२ ॥** उत्क्रमिष्यतो मुमुक्षोः

---

[1] अथ यां जीवो जहाति. पा.　[2] ६-११-२. छां.उ.　[3] १-१३-४. मुं.उ.
[4] ६-१ ३ ४. छां.उ　[5] १-१६४-३९. ऋ.सं.　[6] ३-१२-७. तै.आ.

कर्मादिना भाव्यं (साधन) साधनत्वेन अतस्तद्वक्तीत्यौडुलोमिर्मन्यते ॥ ॥ २२ ॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ २३ ॥ सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः । 'कृष्णद्वैपायनमतादेकदेशविदः परे । वदन्ति ते यथाप्रज्ञं न निरोधः कथञ्चने'ति पाद्मे ॥ २३ ॥ समाकर्षाधिकरणम् ॥ ५ ॥

स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—॥ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥ २४ ॥ 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यस्स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्ती'ति प्रतिज्ञादृष्टान्तानुपरोधात्प्रकृतिशब्दवाच्योऽपि स एव ॥२४॥ ॐ अभिध्योपदेशाच्च ॐ ॥ २५ ॥ 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'[1] 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' इति वचनाच्चदभिध्यैव (च) प्रकृतिशब्देनोच्यते । 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्द' इति श्रुतेरभिध्या च स्वरूपमेव । 'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च । परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते' इति ब्रह्माण्डे ॥२५॥ ॥ ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ २६ ॥ 'एष ह्येव पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद्भिश्वरूप' इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ॥ २६ ॥ ॐ आत्मकृतेः परिणामात् ॐ ॥ २७ ॥ प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च । प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामेषु स्थित्वाऽऽत्मनो बहुधा-

[1] ४-१० श्वे उ

करणात् । 'अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार । तस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षत' इति भाल्लवेयश्रुतिः । 'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् । अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयत'॥ इति नारदीये । न चान्यत्कल्प्यम् , अप्रामाणिकत्वात्[1] ॥ २७ ॥ **ॐ योनिश्च हि गीयते ॐ ॥ २७ ॥**

अव्यवधानेनोत्पत्तिद्वारत्वं (च) प्रकृतित्वम् । तत्रास्यैव हि गीयते 'यद्भूतयोनिं परिपश्यन्ति धीरा'[2] इति । 'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते । सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ॥ उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् । प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयत' इति ब्रह्माण्डे ॥ २८ ॥ प्रकृत्यधिकरणम् ॥ ६ ॥

**॥ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ॥**

॥ २९ ॥ एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः । 'एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्चे'ति महोपनिषदि । 'शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम् । तस्माच्छून्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥ नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः । अतोऽभावं वदन्त्येनं नास्यत्वाभ्यास इत्यपि ॥ सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता । अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभि'रिति महाकौर्मे । एतेन तदधीनत्वाद्युक्तियुक्तिसमुदायेन । 'अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः । द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णय' ॥ इति वाराहसंहितायाम् ॥२९॥ एतेन सर्वेव्याख्याताधिकरणम्[3] ॥ ७ ॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते प्रथमाध्यायस्य चतुर्थः पादः ॥ समन्वयाध्यायस्समाप्तः ॥

---

[1] अप्रमाणत्वात्. पा. [2] १-१-६. मुं.उ. [3] सर्वव्याख्यानाधिकरणं. पा.

॥ अथ द्वितीयाध्यायः ॥

श्रीगुरुभ्यो नमः। हरिः ॐ॥ उक्तेऽर्थेऽविरोधं दर्शयत्यनेनाध्यायेन। प्रथमपादे युक्त्यविरोधम्। प्रथमतः स्मृत्यविरोधं दर्शयति॥ **ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ १ ॥** सर्वज्ञा हि रुद्रादयः। अतस्तेषां वचनविरोधेऽप्रामाण्यमेव स्यादिति चेन्न। अन्यस्मृतीनां विष्ण्वादिभिर्नितरां सर्वज्ञैरेव कृतत्वाच्छ्रुतेराधिक्यं (च) सिध्यति॥ १॥ **ॐ इतरेषां चानुपलब्धेः ॐ ॥ २ ॥** इतरेषां तासु स्मृतिपूक्तानां फलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तम्। चशब्देन भागोपलब्धिरङ्गीकृता॥२॥ **ॐ एतेन योगः प्रत्युक्तः ॐ ॥ ३ ॥** योगफलं प्रत्यक्षत उपलभ्यत इति न मन्तव्यम्। उक्ताभ्यासे तत्काल एव फलादृष्टेः॥ ३॥ स्मृत्यधिकरणम्॥ १॥

॥ **ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥४॥** नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यम्[1]। विलक्षणत्वात्--नित्यत्वात्तदनुसारित्वाच्च। न हि नित्ये दोषाः कल्प्याः। स्वतश्च प्रामाण्यम्। अन्यथाऽनवस्थितेः। 'न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ती'ति भाल्लवेयश्रुतेश्च। नित्यत्वं च शब्दादेव प्रतीयते 'वाचा विरूप नित्यये'[2]त्यादेः। 'अनादिनिधना नित्ये'ति च स्मृतिः॥ ४॥ **ॐ दृश्यते तु ॐ ॥५॥** अधिकारिणां फलम्। भविष्यत्पुराणे च--'ऋग्यजुः

[1] वाच्यम् पा [2] ८६४-६ ऋ स

सामाथर्वाश्च मूलरामायणं तथा । भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ॥ पुराणानि च यानीह वैष्णवानि विदो विदुः । स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ॥ यच्चेपूक्तं न दृश्येत पूर्वकर्मात्र कारणम् । नाप्रामाण्यं भवेत्तेषां दृश्यते ह्यधिकारतः ॥ इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन । अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशय' इति ॥ ५ ॥ नविलक्षणत्वाधिकरणम्[1] ॥ २ ॥

'मृदब्रवीत्'[2] 'आपोऽब्रुवन्नि'[2]त्यादिवचनाद्युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्—॥ **ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ** ॥६॥ मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते । तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र । अतस्तासां सर्वमुक्तं युज्यते ॥ ६ ॥ **ॐ दृश्यते च ॐ** ॥ ७ ॥ तासां सामर्थ्यं महद्भिः । भविष्यत्पुराणे च 'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः । अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः । ताश्च सर्वगता नित्यं वासुदेवैकसंश्रया' इति ॥ ७ ॥ अभिमान्यधिकरणम् ॥ ३ ॥

'असदेवेदमग्र आसीत्'[3] 'असतः सदजायते'[4]त्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति—॥**ॐ असदिति चेन्न प्रतिषेधमात्रत्वात्** ॥८॥ प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् । असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । सर्वशब्दानां ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवदि'[5]त्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वेनाङ्गीकारादसतः प्राप्तिः । तथा(च) श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधात् । अर्था-

[1] श्रुतिनित्यत्वाधिकरणम्. पा. [2] ६-१ ३. श.ब्रा. [3] ६-२ १. छां.उ.
[4] १०-७२-३. ऋ.सं. [5] १-४-३. ब्र.सू.

युक्तिविरोधो(ऽपि) निराक्रियते ॥ ८ ॥ **ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ ९ ॥** असत उत्पत्तौ प्रलयेऽपि सर्वासत्त्वमेव स्यात् ॥ ९ ॥ **ॐ न तु दृष्टान्तभावात् ॐ ॥ १० ॥** प्रलये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते । सत उत्पत्तिः, सशेषविनाशश्च हि लोके दृष्टः ॥ १० ॥ **ॐ स्वपक्षदोषाच्च ॐ ॥ ११ ॥** दृष्टान्ताभावादेव ॥११॥ **ॐ तर्काप्रतिष्ठानादन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ १२ ॥** एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाऽनुमेयमिति चेन्न, एवं सति प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वादनिर्मोक्षप्रसङ्गः । अतो यावत्प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यम् । नातोऽन्यच्छङ्क्यम् । 'यावदेव प्रमाणेन सिद्ध तावदहापयन् । स्वीकुर्यान्नैव चान्यत्र शङ्क्यं मानमृते क्वचिदि'ति वामने ॥ १२ ॥ **ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ॥ १३ ॥** एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपि । 'अकस्माद्वीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति' 'प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति । प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम्' । 'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः । जीवे तु लयमृच्छन्ति न जीवात्कारणं परमि'त्यादि श्रुतिप्राप्ता निराकृताः । यथा दुःखादिषु जीवस्यास्वातन्त्र्यमेवमन्येष्वपीति दृष्टान्तः । श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते, यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ॥ १३ ॥ असदधिकरणम् ॥ ४ ॥

॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥

॥ १४ ॥ 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ती'[1]ति मुक्तजीवस्य परापत्तिरुच्यते। अतस्तयोरविभागः। अतः पूर्वमपि स एव। न ह्यन्यस्यान्यत्वं युज्यत इति चेन्न। स्याल्लोकवत्। यथा लोके उदके उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येव, एवं स्यादत्रापि। तथा च श्रुतिः 'यथोदके शुद्धे शुद्धमासिक्तं तादृगेव भवती'[2]ति। स्कान्दे च—'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्। न चैतदेव भवति यतो वृद्धिः प्रदृश्यते॥ एवमेव हि जीवोऽपि तादात्म्यं परमात्मना। प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणादि'ति। 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते। तद्यत्स्वभावः कैवल्यं स भवान् केवलो हर' इति च। 'न ते महित्वमन्वश्नुवन्ति'[3] 'न ते विष्णो जायमानो न जात'[4] इत्यादि च। फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम्॥ १४॥ भोक्त्रधिकरणम्॥ ५॥

॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥

॥ १५ ॥ स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा। नैवं ब्रह्मणः। (किन्तु) स्वरूपसामर्थ्यादेव तस्य सृष्टिः। 'किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथाऽऽसीदि'[5]ति ह्याक्षेपः। अधिष्ठानाद्यनुक्तेः। आदिशब्दाद्युक्तिभिश्च। 'परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते। साधनाना साधनत्वं यतः किं तस्य साधनै'रित्यादिभि.॥ १५॥

॥ ॐ भावे चोपलब्धेः ॐ ॥ १६ ॥ स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत। 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन। अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः' इति स्कान्दे॥ १६॥ 'अङ्गयः

---

[1] ३ २ ७ मु उ [2] ४ १५ क उ [3] ७ ९९ १ ऋ स [4] ७ ९९ २ ऋ स [5] १० ८१ २ ऋ स

सम्भूतः पृथिव्यै रसाच्चे''त्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह—॥ ॐ सत्त्वाच्चावरस्य ॐ ॥ १७ ॥ अवरस्य तदधीनस्य साधनस्य सत्त्वात् । 'काल आसीत्पुरुष आसीत्परम आसीत्तद्यदासीत्तदावृतमासीत्तदधीनमासीदथ ह्येक एव परम आसीद्यर्स्मस्तदासीन्न ह्येतदासीदि'ति काषायणश्रुतिः ॥ १७ ॥

॥ ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥ १८ ॥ 'नासदासीन्नो सदासी'[2]दिति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न । अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते । 'तम आसीदि'[3]ति वाक्यशेषात् । न चान्यत्र प्रमाणमस्ति । 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'[4] । 'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति । न चान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा भविष्यत्' । 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्'[5] । 'असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि' 'यस्सत्यरूपं जगदेतदीदृक्सृष्ट्वा स्वभूत्सत्यकर्मा महात्मा' । 'अर्थनमाहुस्सत्यकर्मेति, सत्यं ह्येवेदं विश्वमसौ सृजते । अर्थनमाहुर्नित्यकर्मेति नित्यं ह्येनामौ कुरुते' । 'यच्चिकेत सत्यमित्तन्न मोघमि'[6]त्यादि श्रुतिस्मृतिभ्यः । 'परस्परविरोधे तु वाक्यानां यत्र युक्तता । तथार्थः परिज्ञेयो नाशक्या युक्तिरिष्यत' इति बृहत्संहितायाम् । 'विरुद्धवत्प्रतीयन्त आगमा यत्र वै मिथः । तत्र दृष्टानुसारेण तेषामर्थोऽन्वेष्यत' इति च । 'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि । इत्यादिन्द्विरुद्धानि वचनान्यथ युक्तयः । प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ॥ वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना । अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रम' इति च

[1] ३-१३ तै आ　[2] १०-१२९-१ ऋ सं　[3] १०-१२९-३ ऋ सं
[4] १०-५ म ना उ　[5] १६-८ भ गी　[6] १०-५५-६ ऋ सं.

भागवततन्त्रे । 'शास्त्रार्थयुक्तोऽनुभवः प्रमाणं तूत्तमं मतम् । मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् । प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु । अनुमाद्या न स्वतन्त्राः प्रमाणपदवीं ययुरि'ति पुरुषोत्तमतन्त्रे ॥१८॥ **ॐ युक्तेः शब्दान्तराच्च ॐ ॥१९॥** 'साधनानां साधनत्वं यदात्माधीनमिष्यते । तदा साधनसम्पत्ति-रैश्वर्यद्योतिका भवेदि'त्यादेः साधनान्तरेण सृष्टिर्युक्ता । 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यथावि'त्यादि शब्दान्तराच्च ॥ १९ ॥ **ॐ पटवच्च ॐ ॥२०॥** साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ॥२०॥ ॥ **ॐ यथा प्राणादिः ॐ ॥२१॥** तच्च साधनजातं तेनानु-प्रविष्टमेव यथा शरीरेन्द्रियादिः । 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः । क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुरि'ति कौर्मे ॥ २१ ॥ आरम्भणाधिकरणम् ॥ ६ ॥

जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते ॥ **ॐ इतर-व्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥२२॥** जीव-कर्तृत्वपक्षे हिताकरणमहितकरणं च न स्यात् ॥२२॥ **ॐ अधिकं तु भेदनिर्देशात् ॐ ॥ २३ ।** न च ब्रह्मणः श्रमचिन्तादि-दोषप्राप्तिः । अधिकशक्तित्वात् । 'श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः'[2] 'एष त आत्मा सर्वान्तरः'[3] 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती'[3]त्यादिविशेष-निर्देशात् ॥ २३ ॥ **ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ॥ ॥ २४ ॥** चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात्स्वतः कर्तृत्वानुपपत्ति-

[1] १-११. म ना.उ.　[2] ३-२-४. ऐ.आ.　[3] ५-५-१. बृ.उ.

जीवस्य। 'यथा दारुमयीं योषां नरः स्थिरसमाहितः। इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः' इति भारते ॥ २४ ॥ **ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ ॥ २५ ॥** जीवेन कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न। यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते, 'अन्नं रसादिरूपेण प्राणः परिणयत्यमा'निति वचनात्; एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात्परकृत एव। 'य आत्मानमन्तरो यमयति'[1]। 'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुरि'त्यादेः ॥ २५ ॥ **ॐ देवादिवदपि लोके ॐ ॥ २६ ॥** न च कर्तुरीश्वरस्यादृष्टिविरोधः। देवादिवददृश्यत्वशक्तियोगात्। लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा, किम्वीश्वरस्य। 'न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचित्। विरोध एव वाक्यानां युक्तयो न तु युक्तय' इति बृहत्संहितायाम् ॥ २६ ॥ **ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ॥ २७ ॥** अयं च दोषो जीवकर्तृत्वपक्षे। एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात्। न च तद्युज्यते, सामर्थ्यैकदेशदर्शनात्। न चैकदेशेन, निरवयवत्वात्। 'अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थ' इति माल्लवयश्रुतिः। न चोपाधिकृतोंऽशः स एवांश उपहित इति, द्वित्वापेक्षत्वात्। न चान्यत्कल्प्यम्। 'यद्धि युक्त्या विरुध्येत तदीशकृतमेव ही'ति मतान्तरोक्तेः ॥ २७ ॥ इतरव्यपदेशाधिकरणम् ॥ ७ ॥

॥ **ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ २८ ॥**

[1] बृ उ माध्यंदिन पाठ

न चेश्वरपक्षेऽयं विरोधः । 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मे'ति पैङ्ग्यादिश्रुतेरत्र । शब्दमूलत्वाच्च न युक्तिविरोधः । 'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित् । विरोधे वाक्ययोः क्वापि किञ्चित्साहाय्यकारणमि'ति पुरुषोत्तमतन्त्रे ॥ २८ ॥ **ॐ आत्मनि चैवं विचित्राश्च हि ॐ ॥ २९ ॥** परमात्मनो विचित्राश्च शक्तयस्सन्ति, नान्येषाम् । 'विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः(शः) स्युः । एको वशी सर्वभूतान्तरात्मा सर्वान्देवानेक एवानुविष्ट' इति श्वेताश्वतरश्रुतिः ॥ २९ ॥ **ॐ स्वपक्षदोषाच्च ॐ ॥३०॥** 'ये दोषा इतरत्रापि ते गुणाः परमे मताः । न दोषः परमे कश्चिद्गुणा एव निरन्तरा' इति वचनाज्जीवपक्ष एव दोषो न परपक्षे । 'अथ यस्सदोषः साञ्जनः सजनिः स जीवोऽथ यः स निर्दोषो निष्कलः सगुणः परः परमात्मे'ति कापायणश्रुतिः ॥३०॥ **ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ ३१ ॥** 'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम् । नित्यानन्दा, नित्यरूपाऽजरा च या शाश्वताऽत्मेति च यां वदन्ती'ति च चतुर्वेदशिखायाम् ॥ अतो न केवलं विचित्रशक्तिः, किन्तु सर्वशक्तिरेव ॥३१॥ **ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥ ३२ ॥** न च करणाभावादनुपपत्तिरिति युक्तम् । 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्'[1] ॥ 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया

[1] ३-१९. श्वे.उ.

चे'[1]त्यादि श्रुतिभ्यः । 'सर्वोपेता चे'ति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्का ॥ ३२ ॥ शब्दमूलत्वाधिकरणम् ॥ ८ ॥

यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वान्न पूर्णतेत्यत आह—॥ ॐ

**न प्रयोजनत्त्वात् ॐ ॥ ३३ ॥** 'अथैष एव परम आनन्द'[2] इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः । किन्तु—॥ ॐ

**लोकवत्तु लीलाकैवल्यम् ॐ ॥ ३४ ॥** यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिलीला न तु प्रयोजनापेक्षया, एवमेवेश्वरस्य ॥ नारायणसंहितायां च—'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु । कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् ॥ पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः । मुक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मन' इति ॥ 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहे'[3]ति च श्रुतिः ॥३४॥ नप्रयोजनाधिकरणम् ॥ ९ ॥

सर्वकर्तृत्वे वैषम्यनैर्घृण्ये तस्येत्यतो वक्ति—॥ ॐ **वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ ३५ ॥** कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये । 'पुण्येन पुण्यं लोकं नयति पापेन पापमि'[4]ति हि श्रुतिः ॥ ३५ ॥ ॐ **न कर्माविभागादिति चेन्नानादित्वात् ॐ ॥३६॥** यदपेक्षयाऽसौ फलं ददाति न तत्कर्म । 'एष ह्येवैनं साधुकर्मकारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधुकर्म कारयति तं यमधो निनीषत'[5] इति श्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेन्न । तस्यापि पूर्वकर्म कारणमित्यनादित्वात्कर्मणः । भविष्यत्पुराणे च—'पुण्य-

[1] ६-८ श्वे उ [2] ४-३ ३३ बृ उ [3] २० मा उ [4] ३ ७ प्र उ
[5] ३ ८ कौ उ

पापादिकं विष्णुः कारयेत्पूर्वकर्मणा । अनादित्वात्कर्मणश्च न विरोधः कथञ्चने'ति ॥ ३६ ॥ **ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ ३७ ॥** न च कर्मापेक्षत्वेनेश्वरस्यास्वातन्त्र्यम् । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'त्यादिना कर्मादीनां सत्त्वस्यापि तदधीनत्वात् । न च पुनर्वैषम्याद्यापातेन दोषः । तादृशवैषम्यादेरुपलभ्यमानत्वात् । 'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि । ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानामि'ति चतुर्वेदशिखायाम् ॥ ३७ ॥ वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥

अवशिष्टैरुपसंहरति ॥ **ॐ सर्वधर्मोपपत्तेश्च ॐ ॥३८॥** 'गुणाःश्रुताः सुनिरुद्धाश्च देवे मन्त्यश्रुता अपि नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नार्हैहि तथा प्रतीता' इति सर्वगुणोपपत्तिश्रुतेश्च[1] ॥ ३८ ॥ सर्वधर्मोपपत्त्यधिकरणम् ॥११॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पदाचार्यविरचिते द्वितीयाध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

'इतरेषां चानुपलब्धे'[2]रिति सामान्यनिराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन्पादे ।

अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति ॥ **ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ १ ॥** अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ । चशब्देन प्रमाणाभावं दर्शयति ॥ १ ॥ **ॐ प्रवृत्तेश्च ॐ ॥ २ ॥** चेतनस्य स्वतः प्रवृत्तिदर्शनाच्च ॥२॥ **ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ ३ ॥**

---

[1] सर्वधर्मोपपत्तेरिति पा [2] २-१-२ ब्र सू

पयाऽम्बुवदचेतनस्यापि प्रवृत्तिर्युज्यत इति न युक्तम् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते, याश्च श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या या या च दिशमनु'[1] 'एतेन ह वाव पयो मण्ड भवती'त्यादिना तत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ॥ ३ ॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ ४ ॥ 'न ऋते त्वत्क्रियते किं चनारे'[2] इति तद्व्यतिरेकेण कस्यापि कर्मणोऽनवस्थितेरनपेक्षितमेवाचेतनादिमतम् ॥ ४ ॥ रचनानुपपत्त्यधिकरणम् ॥१॥

सेश्वरसाङ्ख्यमतं निराकरोति । यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते, एवं प्रधानादीश्वरानुगृहीतं जगदित्यतो नेति ॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥५॥ 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'ब्रह्मणैवेदमाविरासीद्ब्रह्मणि स्थितं ब्रह्मणि (न)लयमभ्युपैति ब्रह्माधस्ताद्ब्रह्मोपरिष्टाद्ब्रह्म मध्यतो ब्रह्म सर्वतो' 'ब्रह्मैवेद सर्वमि'[3]त्यादिश्रुतिभ्योऽन्यत्र जगतोऽभावात्तृणादीनां पर्जन्यवदनानुग्राहकत्वमात्रमीश्वरस्य । 'स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् । अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृदि'ति भागवते । द्रव्यं कर्म च कालश्चेत्यादि च । चशब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम् ॥५॥ अन्यत्राभावाधिकरणम् ॥ २ ॥

लोकायतिकपक्षं निराकरोति— ॥ ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ ६ ॥ यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम् । अतः स्वव्याहतत्वोपेक्ष्य. ॥ ६ ॥ अभ्युपगमाधिकरणम् ॥ ३ ॥

---

[1] ५-८-९ बृ उ [2] १०-११२-९ ऋ सं [3] ४-५-१ बृ उ

पुरुषोपसर्जनप्रकृतिकर्तृत्ववादमपाकरोति—॥ ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ॥ ७ ॥ यथा चेतनसम्बन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छति, एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात्प्रवर्तेत इति चेन्न। 'न ऋते त्वत्क्रियते' इति तत्रापि तथात्वे दृष्टान्ताभावात् ॥ ७ ॥ ॐ अङ्गित्वानुपपत्तेः ॐ ॥ ॥ ८ ॥ शरीरप्रवृत्तौ पुरुषस्याङ्गित्वात्। 'अङ्गमङ्गी ममादाय यथाकार्यं करोत्यसा'वित्यङ्गिस्व्यवहारोऽनुपपन्नः ॥ ८ ॥ पुरुषाश्माधिकरणम् ॥ ४ ॥

प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति—॥ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥९॥ शरीरसम्बन्धात्पुरुषः प्रवर्तेत इत्यङ्गीकारेऽपि स्वतस्तस्यासामर्थ्याच्छरीरसम्बन्ध एवायुक्तः ॥९॥ ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥१०॥ सकलश्रुतिस्मृतियुक्तिनिरुद्धत्वाच्चानीश्वरमतमसमञ्जसम्। 'श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम्। वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधम' इति पाद्मे ॥ १० ॥ अन्यथानुमित्यधिकरणम् ॥ ५ ॥

परमाण्वारम्भवादमपाकरोति—॥ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥११॥ महत्त्वाद्दीर्घत्वाच्च यथा कार्यमुत्पद्यते, एवं ह्रस्वत्वात्पारिमाण्डल्याच्चोत्पद्येत। वाशब्दादन्यर्थतयोरपि न स्यात्, विशेषकारणाभावात् ॥११॥ ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ॥ १२ ॥ ईश्वरेच्छाया नित्यत्वे तद्द्वारेऽपि परमाणुकर्माभावाच्चेदानीमपि (तत्) स्यात्। अनित्यत्वे तत्कारणाभावात्। अतः परमाणुचेष्टाभावात्तत्कार्याभावः। वैदिके-

श्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते। अत एव काले विशेषा[1]ङ्गीकृतेश्च ॥१२॥ ॐ **समवायाभ्युपगमाच्च साम्यादनवस्थितेः** ॐ ॥१३॥ कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात्तस्य च भिन्नत्वसाम्यात्समवायान्तरापेक्षायामनवस्थितेः(तिः)। न च तत्प्रमाणम्। प्रथमसम्बन्धासिद्धचैव च तदसिद्धिः स्वनिर्वाहकत्वे समवाय एव न स्यात्॥ १३ ॥ ॐ **नित्यमेव च भावात्** ॐ ॥ १४ ॥ नित्यत्वाच्च परमाणूनां समवायस्य च तस्यैव जनित्वाङ्गीकारान्नित्यमेव कार्यं स्यात्। अन्यथा न कदाचित्॥ १४ ॥ ॥ ॐ **रूपादिमत्त्वाच्च विपर्ययो दर्शनात्** ॐ ॥१५॥ रूपादिमत्त्वाच्च परमाणूनामनित्यत्वम्। तथा दृष्टत्वाल्लोके ॥ १५ ॥ ॥ ॐ **उभयथा च दोषात्** ॐ ॥ १६ ॥ नित्यत्वे परमाणूनां तद्वत्सर्वनित्यत्वं स्यात्। विशेषप्रमाणाभावात्। अनित्यत्वे कारणाभावात्तत्तुल्यत्वभावः ॥ १६ ॥ ॐ **अपरिग्रहाच्चात्यन्तमनपेक्षा** ॐ ॥ १७ ॥ श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्ष(क्ष्य)ता। 'आन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थकाम्' इति(च) मोक्षधर्मे ॥ १७ ॥ वैशेषिकाधिकरणम् ॥ ६ ॥

परमाणुपुञ्जवादिमतं निराकरोति— ॥ ॐ **समुदाय उभयहेतुकेऽपि तदप्राप्तिः** ॐ ॥ १८ ॥ समुदायस्यैकहेतुकत्वं न युज्यते। उभयहेतुकेऽप्यन्योऽन्याश्रयात्तदप्राप्तिः। अन्यथा सर्वदा समुदायसत्त्वं[2] स्यात् ॥१८॥ ॐ **इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्** ॐ॥१९॥ सर्वदा विद्यमानोऽपि

[1] निमेद. पा. [2] समुदायत्व पा

समुदायः परस्परापेक्षया व्यवह्रियत इति चेन्न । एकं कार्यमुत्पाद्य तस्य विनिष्टत्वात्परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यते । कारणे सति कार्यं भवत्येवेति हि तस्य नियमः ॥ १९ ॥ ॐ **उत्तरोत्पादे च पूर्वनिरोधात्** ॐ ॥ २० ॥ कार्योत्पत्तावेव कारणस्य विनाशाच्च न विशेषकार्योत्पत्तिः ॥२०॥ ॐ **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॐ ॥ २१ ॥ कारणे विनष्टे कार्यमुत्पद्यते चेत्तत्कार्यमिति प्रतिज्ञाहानिः । तत्काले कारणमस्ति चेद्विनाशकारणाभावाद्यौगपद्यं सर्वकार्याणाम् ॥ २१ ॥ ॥ॐ **प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्** ॐ ॥ २२ ॥ कारणे सति कार्यं भवत्येवेति नियमान्निस्सन्तानः ससन्तानश्च विनाशो न युज्यते ॥२२॥ ॐ **उभयथा च दोषात्** ॐ ॥ २३ ॥ कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः । अनियमे कार्यानुत्पत्ति ॥ २३ ॥ ॥ ॐ **आकाशे चाविशेषात्** ॐ ॥ २४ ॥ दीपादिषु विशेषदर्शनात्क्षणिकत्वेनान्यत्र क्षणिकत्वमनुमीयते चेदाकाशादिष्वविशेषदर्शनादन्यत्रापि तदनुमीयेत ॥ २४ ॥ ॐ **अनुस्मृतेश्च** ॐ ॥२५॥ तदेवेदमिति प्रत्यभिज्ञानाच्च । प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् ॥ २५ ॥ समुदायाधिकरणम् ॥ ७ ॥

शून्यवादमपाकरोति— ॥ॐ **नासतोऽदृष्टत्वात्** ॐ॥ ॥ २६ ॥ अदृष्टत्वादसतः कारणत्वं न युज्यते ॥२६॥ ॐ **उदासीनानामपि चैवं सिद्धिः** ॐ ॥ २७ ॥ असतः कारणत्वे उदासीनानां हेयोपादेयबुद्धिवर्जितानां मपुष्पादीनामपि सर्वाशान्कार्य

सिद्धिः । चशब्दान्न चेदन्यत्रापि न स्यादविशेषात् ॥ २७ ॥
॥ ॐ नाभाव उपलब्धेः ॐ ॥ २८ ॥ न च जगदेव शून्यमिति वाच्यम् । दृष्टत्वात् ॥ २८ ॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥ २९ ॥ न च दृष्टस्यापि स्वप्नादिवदभावः । तस्योत्तरकाले स्वप्नोऽयं नाऽयं सर्प इत्याद्यनुभवात् । न चात्र तादृशं प्रमाणमस्ति ॥ २९ ॥ असदधिकरणम् ॥ ८ ॥

विज्ञानवादमपाकरोति— ॥ ॐ न भावोऽनुपलब्धेः ॐ ॥ ३० ॥ न विज्ञानमात्रं जगत् । तथाऽनुभवाभावात् ॥३०॥ ॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥ ज्ञानं क्षणिकम् । अर्थानां च स्थायित्वमुक्तम् । अतश्च नैक्यम् ॥ ३१ ॥ ॐ सर्वथाऽनुपपत्तेश्च ॐ ॥३२॥ प्रमाणाभावात्सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्च नैते पक्षा ग्राह्याः ॥ ३२ ॥ अनुपलब्ध्यधिकरणम् ॥ ९ ॥

स्याद्वादिमतं दूषयति— ॥ ॐ नैकस्मिन्नसम्भवात् ॐ ॥ ३३ ॥ सत्स्यादसत्स्यात्सदसत्स्यात्ततोऽन्यच्च स्यादित्येतन्नैकस्मिन्युज्यते । अदृष्टत्वेनासम्भवात् ॥ ३३ ॥ ॐ एवञ्चाऽऽत्माकात्स्न्र्यम् ॐ ॥ ३४ ॥ जीवस्य शरीरपरिमितत्वाङ्गीकारेऽन्यादिशरीरस्थस्य हस्त्यादिशरीरेऽकात्स्न्र्यं स्यात् ॥ ३४ ॥ ॥ ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥ ॥ ३५ ॥ तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यम्[1] । विकारित्वादनित्यत्वप्रसक्तेः ॥३५॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ ३६ ॥ परिमाणाभावे स्वरूपा-

[1] वाच्यम्. पा.

भावप्राप्त्याऽन्त्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभयनित्यत्वादविशेषेण सर्वशरीरनित्यत्वं स्यात् ॥३६॥ नैकस्मिन्नधिकरणम्[1]॥१०॥

पाशुपतपक्षमपाकरोति — ॥ **ॐ पत्युरसामञ्जस्यात् ॐ** ॥ ३७ ॥ 'यं कामये तं तमुग्रं कृणोमि । तं ब्रह्माणं तमृषिं तं सुमेधाम्'[2] । 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ'[3] । 'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृते हविर्भिः । विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्'[4] । 'एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमावि'[5]त्यादि श्रुतेः पारतन्त्र्येणासमञ्जसत्वान्न पशुपतिरीश्वरो[6] जगत्कर्ता ॥ ३७ ॥ **ॐ सम्बन्धानुपपत्तेश्च ॐ** ॥ ३८ ॥ अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत् ॥३८॥ **ॐ अधिष्ठानानुपपत्तेश्च ॐ**॥३९॥ पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति । न चास्य तदस्ति ॥ ३९ ॥ **ॐ करणवच्चेन्न भोगादिभ्यः ॐ** ॥ ४० ॥ इदमेव जगत्तस्यकरणवदधिष्ठानादिरूपम् । नित्यस्यापि कस्यचिज्ज्ञानाद्युज्यत इति चेन्न भोगादिप्राप्तेः । उत्पत्तिविनाशौ सुखदुःखभोगश्च प्राप्यन्ते तद्वताः ॥ ४० ॥ ॥ **ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ** ॥ ४१ ॥ देहवत्वेऽन्तरत्वम् । अन्यथा ज्ञानाभावः । शरीरिण एव हि ज्ञानोत्पत्तिर्दृष्टा । विष्णोस्तु श्रुत्यैव विरोधाः परिहृताः—यदात्मको भगवांस्तदात्मिकी (का) व्यक्तिः । किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः

[1] स्याद्वाद्यधिकरणम् पा [2] १० १२५-५, ऋ सं [3] १०-१२५-६ ऋ सं [4] ७-४०-५ ऋ सं [5] १ म ना उ [6] पतिरीश्वरनामा पा

शक्त्यात्मक' इति । 'बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भागवतो लक्षयामहे । बुद्धिमान्मनोवानङ्गप्रत्यङ्गवानि'ति । 'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञान. सुखसुखः स विष्णुः परमोऽक्षर'[1] इत्यादिकया ॥ ४१ ॥ पत्युरधिकरणम्[2] ॥ ११ ॥

शक्तिपक्षं दूषयति—॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥ ॥ ४२ ॥ न हि पुरुषानुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ॥ ४२ ॥ ॥ ॐ न च कर्तुः करणम् ॐ ॥ ४३ ॥ यदि पुरुषोऽङ्गीक्रियते तस्यापि करणाभावादनुपपत्तिः ॥४३॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ४४ ॥ यदि विज्ञानादिकरण तस्याङ्गीक्रियते तदा तत एव सृष्ट्यानुपपत्तेरीश्वरवादान्तर्भावः ॥४४॥ ॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४५ ॥ सकलश्रुत्यादिविरुद्धत्वाचानमङ्गमम् ॥ ४५ ॥ उत्पत्त्य (शक्त्य) विकरणम् ॥ १२ ॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्पर विरोधमपाकरोत्यनेन पादेन ॥ ॐ न वियदश्रुतेः ॐ ॥१॥ न वियदनुत्पत्तिमत् । तथाऽश्रुते' ॥ १ ॥ ॐ अस्ति तु ॐ ॥ २ ॥ अस्त्येव चोत्पत्ति श्रुतिः—'आत्मन आकाशः सम्भूत'[3] इत्यादि ॥ २ ॥ ॥ ॐ गौण्यसम्भवात् ॐ ॥ ३ ॥ 'अनादिर्वा अयमाकाशः शून्यो'लौकिक' इत्यादिश्रुतिगाणी । अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ॥ ३ ॥ ॐ शब्दाच्च ॐ ॥ ४ ॥ 'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति । अथ यान्यनित्यानि प्राण'

[1] पैङ्गि श्रुति [2] पत्युरध्यधिकरणम् पा [3] २ १ तै उ

श्रद्धा भूतानि भौतिकानीति। यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि। यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि। न ह्येतानि कदाचनोत्पद्यन्ते न लीयन्ते पुरुषः प्रकृतिरात्मा काल इति। अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्त' इति भाल्लवेयश्रुतेः ॥४॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ ॥५॥ स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्यत्वापेक्षया। यथा ब्रह्मशब्दः। 'अथ कस्मादुच्यते पर ब्रह्मेति बृहति बृंहयति च'[1] इति श्रुतेः परे ब्रह्मणि मुख्योऽपि गौणत्वेन विरिञ्च्यादिष्वपि वर्तते। अत एवाब्रह्मत्वं च तेषाम्। एवमन्यत्राप्यनुत्पत्तिमच्छब्दः ॥ ५ ॥ ॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ६ ॥ ब्रह्मणोऽन्यस्य नित्यत्वे 'स इदं सर्वमसृजत'[2]इत्यादि प्रतिज्ञाहानिः। आकाशस्यापि सर्वस्मादव्यतिरेकात्। 'आत्मा वा इदमेक एवाग्र आसीत्'[3] 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'[4] 'इदं वा अग्रे नैव किञ्चनाऽसीदि'[5]त्यादिश्रुतिभ्यः ॥ ६ ॥ ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ ७ ॥ विभक्तत्वाच्च विकारित्वं युक्तम्। विकारिण एव हि विभक्ता लोके दृश्यन्ते ॥ 'एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते। प्रकृतिः पुरुषः कालस्त्रय एते विभागतः ॥ चतुर्थस्तु महान्प्रोक्तः पञ्चमाऽहङ्कृतिर्मता। तद्विभागेन जायन्त आकाशाद्याः पृथक्पृथक् ॥ यो विभागी विकारः स, सोऽविकारः परो हरिः। अविभागात्परानन्दो नित्यो नित्यगुणात्मकः। विभागो ह्यल्पशक्तित्वं न तदस्ति जनार्दने' इति[6](च) बृहत्संहितायाम् ॥ ७ ॥ ॥ वियदधिकरणम् ॥ १ ॥

---

[1] अथर्वशिर [2] २-६ तै उ स इदं सर्वं पा [3] १-१ ऐ उ. [4] ६-२-१ छा उ [5] २-२-९ तै आ [6] न हि तत्परमात्मन पा.

'अथ ह नित्याश्चानित्याश्च तेजोऽब्वान्याकाश इति तान्यनित्यानि वायुर्नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते' 'अथ ह चेतनाश्चाचेतनाश्च तेजोऽब्वान्याकाश इति तान्यचेतनानि वायुर्वा चेतनो वायुना हि सर्वाणि भूतानि विज्ञायन्ते'। 'वृनिदङ्ग नमसा ये इन्द्रा मः पुरा देवा अनवद्याम आमन्। ते वायवे मनवे बाधिता-याऽवासयन्तुपस सूर्येण'[1]। 'सा वा एषा देवतानाढियोऽयं पवत' इति। 'यस्मा नाऽदितो मध्य नान्तो नोदयो न निम्लोच' इत्यादिश्रुतिभ्यो वायोरनुत्पत्तिरित्यतो ब्रवीति—॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ ८ ॥ एतेन मुख्यामुख्या-नुत्पत्तिवचनेन निमित्तत्वाच्च वाय्वनुत्पत्तिश्रुतिरपि व्याख्याता॥ 'नित्यः परमनित्यश्च तथाऽनित्यः परस्तथा। चतुर्थतज्जगत्सर्वं परा-नित्यं तु पार्थिवम्॥ अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः। परस्तु नित्यः पुरुषः प्रकृतिः काल एव च॥ एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः। प्रतिव्यूह्य व्यूह्य चाभावतीत्य च जनार्दनः। धारयत्यनिशं देवो नित्यानन्दैकलक्षणः' इति कौर्मे ॥ ८ ॥ ॥ मातरिश्वाधिकरणम् ॥ २ ॥

॥ ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ९ ॥

'असद्वा इदमग्र आसीत्। ततो वै सदजायत'[2] 'असतः सदजायत'[3]-त्यादि श्रुतिभ्यः सतोऽप्युत्पत्तिरिति चेन्न। अनुत्पत्तिरेव सतः। तुशब्देनोक्तव्यवस्थामपाकरोति॥ न ह्यसतः सदुत्पद्यते। अदृष्टत्वा-दनुपपत्तेः। 'तद्वा एतद्ब्रह्माहुर्बृहति बृंहयति चेति। तद्वा एतदसदाहुः न ह्यामादयति कश्चनेति। तद्वा एतत्परमाहुः परतो हि तदुदीक्ष्यत' इति श्रुतेरसच्छब्दो ब्रह्मवाची। 'देवानां पूर्व्ये युगेऽसतः सदजायतेति

[1] ७-९१-२ ऋ स [2] २-७ तै उ [3] १०-७२ २ ऋ स

ब्रह्म वा असत् सद्वाव प्राणः प्राणं(णो) वाव महान् सह ओजो बल-मित्याचक्षत' इति पैङ्गिश्रुतिः ॥ 'त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः। ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽऽत्मन् करवाम किं त' इति (च) भागवते ॥ 'अजायमानो बहुधा विजायत'[1] इति च। 'प्रत्यक्षत्वं हरेर्जन्म न विकारः कथञ्चन। पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् ॥ विकार एव जननं पुरुषे तद्विशेषणम्। परतन्त्रविशेषो हि विकार इति कीर्तित' इति (च) पाद्मे ॥ 'अविकारोऽपि भगवान् सर्वशक्तिरनहेतुतः। विकार-हेतुकं सर्वं कुरुते निर्विकारवान् ॥ शक्तिशक्तिमतोश्चापि न विभेदः कथञ्चन। अविभिन्नाऽपि सेच्छादिभेदैरपि विभाषत' इति भागवत-तन्त्रे ॥ ९ ॥ असम्भवाधिकरणम् ॥ ३ ॥

॥ ॐ तेजोऽतस्तथा ह्याह ॐ ॥१०॥ 'वायोरग्निः'[2] इत्यादेर्नान्यत उत्पत्तिर्ग्राह्या। अत एव परात्तदपि जायते। 'तत्तेजोऽसृजते'ति ह्याह। कारणत्वेनेत्युक्तेऽप्यमुख्यतयाऽन्येषामपि शब्दोक्तत्वात्पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थम् ॥ १० ॥ तेजोऽधिकरणम् ॥४॥

॥ ॐ आपः ॐ ॥ ११ ॥ 'ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत तदिदं सर्वम्' इति श्रुतेः 'अग्नेरापः'[3] इत्युक्तेऽपि ब्रह्मण एवाबादिसृष्टिः ॥ 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'[4] ॥ इत्यादि च। 'कर्ता सर्वस्य वै विष्णुः एक एव न संशयः। इतरेषां तु सत्ताद्या यत एव तदाज्ञये'ति भविष्यत्पुराणे। वामने च—'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन्। एक एव महाशक्तिः कुरुते सर्वमञ्जसे'ति ॥ धर्मात्स्वेदादिदृष्टेः पुनः प्रतिषेधः[5] ॥ ११ ॥ अबधिकरणम् ॥ ५ ॥

---

[1] ३-१३ तै आ [2] २-१ तै उ [3] २-१ तै उ [4] २-१-३ मुं उ
[5] आप इति पृथग्वचनम् पा

'ता आप ऐक्षन्त वह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त'[1] इत्यद्भ्योऽन्नसृष्टिः श्रूयते 'अद्भ्यः पृथिवी'[2] इति क्वचित्पृथिवीसृष्टिः । अतो विरुद्धत्वादप्रामाण्यमित्यतो वक्ति—

**॥ ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥१२॥**

पृथिवी तत्रान्नशब्देनोच्यते । भूताधिकारत्वात् । कार्ष्ण्यप्रचुरा च पृथिवी । नान्नस्य तथा विशेषः । 'आपश्च पृथिवी चान्नम्'[3] । 'पृथिवी वा अन्नम्'[4] । 'ता आपोऽन्नमसृजन्त पृथिवी वा अन्नम्' इत्यादिशब्दान्तराच्च । आदिशब्दाद्युक्तिः अपौरुषेयत्वेनादोषस्य वाक्यस्य नाप्रामाण्यमित्यादि । कौर्मे च—'विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदिष्यते । यथा विरुद्धता न स्यात्तथार्थः कल्प्य एतयोरि'ति ॥ 'रक्तोऽग्निरुदकं शुक्लं कृष्णेव पृथिवी स्वतः । नाभिपद्माभिसम्बन्धात्पीता सेत्यभिधीयते । क्षत्ररक्ताभिसम्बन्धाद्रक्तोदकबहुत्वतः । शुक्लत्वमेत्येनमेव वर्णान्तरगतिर्भवेत् ॥ विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते । स्वर्णवीर्यो हि भगवाननादिः परमेश्वरः' ॥ इति व्योमसंहितायाम् ॥ १२ ॥ पृथिव्यधिकरणम् ॥ ६ ॥

'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्वे'[5] त्यादिनाऽन्यः संहर्ता प्रतीयत इत्यतो वक्ति—॥ **ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ १३ ॥** 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरि'[6]ति वन्धलयस्य तदभिध्याननिमित्तत्वलिङ्गात्तत्कर्तृत्वं प्रतीयते, किमु सर्वजगतः । इत्येतस्मादेव सर्वसंहारकर्ता विष्णुरिति प्रतीयते, किमु 'यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः' । 'य इदं सर्वं विलापयति

1 ६-२. छां उ 2 ३-१ तै उ 3 २-२-१ ऐ आ 4 ३ ९ तै उ
5 १६ २ म ना उ 6 १-१० श्वे उ

स हरिः परः परमात्मा' इत्यादि श्रुतिभ्य इति एवशब्दः। 'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः। स्रष्टृत्वादिकमन्येषां दारुव्योपाव-दुच्यते॥ एकदेशक्रिया चात्र न तु सर्वात्मनेरितम्। सृष्ट्यादिकं समस्तं तु विष्णोरेव पराद्भवेत्'. इति च स्कान्दे॥ 'निमित्तमात्र-मीशस्य विश्वसर्गनिरोधयोः। हिरण्यगर्भश्शर्वश्च कालाख्यारूपिण-स्तवे'ति च भागवते॥ 'स ब्रह्मणा विसृजति स रुद्रेण विलापयति सोऽनुत्पत्तिरलय एक एव हरिः परः परानन्द' इति च महोपनिषदि॥ ॥ १३ ॥ तदभिध्यानाधिकरणम् ॥ ७ ॥

'अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते नामानुदेति नास्तमेती'ति भाल्लवेयश्रुतौ क्रमाल्लयः प्रतीयते। 'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात्। व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि'॥ इति चतुर्वेदशिखायां व्युत्क्रमाल्लयः प्रतीयते। अत आह—॥ ॐ

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ १४ ॥**

क्रमवचनमपि विपरीतक्रमापेक्षया। 'कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च। यः क्रमाद्व्युत्क्रमाच्चैव स हरिः पर उच्यत'। इत्यत एव भाल्लवेयश्रुतिवचनात्॥ 'अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः। इति क्रमेण भगवान्सृष्टिसंहारकृद्धरिरि'ति च पाद्मे॥ पूर्वेषां पूर्वेषां सामर्थ्याधिक्यादुपपद्यते च॥ वामने च—'पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम्। सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा॥ व्याप्तिश्चाप्यधिका तेषामत एव न संशयः'॥ इति च॥ १४॥ विपर्ययाधिकरणम्॥ ८॥

**॥ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ॥१५॥** 'प्राणात्मनो मनश्च विज्ञानम्'।

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि'[1] इति लिङ्गाद्विज्ञानमनसी अन्तरा विपरीतक्रम इति चेत्—न, विशेषप्रमाणाभावात् ॥१५॥

**॥ ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ ॥ १६ ॥** 'मनसश्च विज्ञानं' इति व्यपदेशश्चराचरेष्वालोचनाद्विज्ञानं भवतीति भागापेक्षया स्यात् । न विज्ञानतत्त्वापेक्षया ॥ स्कान्दे च—'पराद्व्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा । विज्ञानतत्त्वं महतस्समुत्पन्नं चतुर्मुखात् ॥ विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम् । एवं बाह्या परा सृष्टिरन्तस्तद्व्यक्त्यपेक्षया । विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः' ॥ इति ॥ १६ ॥ ॥ अन्तराधिकरणम् ॥ ९ ॥

**॥ ॐ नाऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ ॥१७॥**

'स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विलापयति विख्यापयति प्रख्यापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव' इति श्रुतेः परमात्माऽपि न लीयते । अश्रुतत्वाद्ब्रह्मलयस्य ॥ निलीनशब्देनापिहितत्वमुच्यते । तुच्छेनाऽभ्वपिहितं यदासीत्, इति श्रुतेः । 'स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चन' इति पैङ्गिश्रुतिः । 'नित्यो नित्यानां चेतनश्चेतनानाम्'[2] । 'स नित्यो निर्गुणो विभुः परः परमात्मा' । 'नित्यो विभुः कारणो लोकसाक्षी परो गुणैः सर्वदृक् शाश्वतश्चे'त्यादि श्रुतिभ्यो नित्यत्वाच्च ॥ १७ ॥ आत्माधिकरणम् ॥ १० ॥

'नित्यो नित्यानामि'ति जीवस्यापि नित्यत्वमुक्तम् । 'सर्व एते चिदात्मानो व्युच्चरन्ती'त्युत्पत्तिरुच्यते । अतो विरोध इत्यत

---

[1] ३-१३. कठ. उ. [2] ५-१३. कठ. उ.

आह— ॥ ॐ ज्ञोऽत एव ॐ ॥ १८ ॥ जीवोऽप्यत एव परमेश्वरादुत्पद्यते । शब्दादेव । 'ते वा एते चिदात्मानोऽविनष्टाः परं ज्योतिर्निर्विशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचने'ति च कापायणश्रुतिः ॥ १८ ॥ ॐ युक्तेश्च ॐ ॥ १९ ॥ नित्यस्यापि हि जीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ॥ 'उत्पद्यन्ते चिदात्मानो नित्यानित्याः परात्मनः । उपाध्यपेक्षया तेषामुत्पत्तिरपि गीयत' इति च व्योमसंहितायाम् ॥ १९ ॥ ज्ञाधिकरणम् ॥११॥

'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मनः सर्वरूपा अनन्ता' इति कापायणश्रुतौ व्याप्तत्वं प्रतीयते । 'अणुर्ह्येष आत्मा यं वा एते सिनीतः । पुण्यं पापं चे'ति गौपवन[1]श्रुतावणुत्वमित्यतो विरोध इति । अतो ब्रवीति—॥ ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ॥२०॥ हेतूनां सकाशादणुरेव । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति स गर्भो भवति स प्रसूयते स कर्म कुरुत' इति पौष्यायणश्रुतेः ॥ २० ॥ तत्र स्वातन्त्र्यप्रतीतेः—'एकः प्रसूयते जन्तुरेक एव प्रमीयते । एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतमि'त्यादेश्च स्वयमेवेत्यतो वक्ति—॥ ॐ स्वात्मना-चोत्तरयोः ॐ ॥ २१ ॥ 'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते । तं वा एतमभिवदन्ति स्वात्मे'ति । 'एष ह्यानन्दमादत्त एष ह्येनं जीवमभिजीवयत्येष उद्गमयत्येष गमयत्येष आगमयति'[2] इत्युत्तरयोर्वाक्ययोः परमात्मनैवोत्क्रान्त्यादयः ॥२१॥ ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ॥ २२ ॥ 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्चे'ति व्याप्तिश्रुतेर्नाणुर्जीव इति चेन्न । 'स

[1] गौतम पा [2] पौष्यायण श्रुतिः

आत्मेदं सृजति स द्विधेदं बिभर्ति अन्तर्बहिश्च । बहुधेदमनुप्रविश्याऽत्मनोऽभिनयति । स आत्मा स आत्मानः स ईशः स विष्णुः स परः परोवरीयानि'ति परमात्माधिकारत्वात् ॥ 'एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः । एक एवोच्यते वेदैस्तावता नास्य भिन्नते'ति च भविष्यत्पुराणे । 'तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा—आ तेन यातम्'[1] इत्यादि च ॥ २२ ॥ ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ २३ ॥ 'एषो ह्यात्माऽप्युद्धतो मानशक्तेस्तथाऽप्यसौ प्रमितिं याति वेदैः । पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित्सर्वकर्ते'ति वाक्यशेषे आत्मशब्दोन्मानाभ्यां च । 'आत्माऽमेयः परं ब्रह्म परानन्दादिकाभिधाः । वदन्ति विष्णुमेवैकं नान्यत्राऽसां गतिः क्वचिदि'ति च कौर्मे॥२३॥ ॐ अविरोधश्चन्दनवत् ॐ ॥२४॥ अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते । यथा हरिचन्दनविप्लुष एकदेशपतितायाः सर्वशरीरव्याप्तिः ॥ 'अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति । यथा व्याप्य शरीराणि हरिचन्दनविप्लुष' इति च ब्रह्माण्डपुराणे ॥ २४ ॥ ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ॥ २५ ॥ सम्यगसम्यगवस्थानविशेषाद्युज्यते चन्दनस्येति चेन्न । 'हृदि ह्येष आत्मा'[2] इति जीवस्यापि तथाऽभ्युपगमात् ॥२५॥ ॐ गुणाद्वाऽऽलोकवत् ॐ ॥२६॥ यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिः एवं चिद्गुणेन व्याप्तिर्जीवरूपेणाव्याप्तिरिति वा । स्कान्दे च— 'असम्यक्सम्यगिति च ह्यवस्थाभेदतः सुराः । व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा ॥ चिद्गुणस्य स्वरूपत्वात्तद्व्याप्तिश्चेति युज्यते । शक्तियोगात्सुराणां तु विविधा च व्यवस्थितिरि'ति ॥ २६ ॥ उत्क्रान्त्यधिकरणम् ॥ १२ ॥

[1] २-३-८ ऐ आ [2] ३-६ प्र उ

'स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चाऽवर्तते स विमुच्यते स एकधा न सप्तधा न दशधे'ति गौपवनश्रुता-वेकस्यावहुत्वं प्रतीयते। 'स पञ्चधा स सप्तधा स दशधा भवति स शतधा च सहस्रधा स गच्छति स मुच्यत' इति पाराशर्यायणश्रुतौ बहुरूपत्वं प्रतीयते। अतो विरोधं परिहरति—॥ ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ २७ ॥ यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति। 'अथैक एव सन् गन्धवद्व्यतिरिच्यते। अथैकीभवति। अथ बह्वीभवति। तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयानि'ति शाण्डिल्यश्रुतिः। 'अचिन्त्ययैशशक्त्यैव ह्येकोऽवयववर्जितः। आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदे'ति च पाद्मे ॥२७॥ व्यतिरेकाधि-करणम् ॥ १३ ॥

'तत्त्वमसि'[1] 'अहं ब्रह्मास्मी'[2]त्यादिषु जीवस्य परेणाभेदः प्रतीयते। 'नित्यो नित्यानां चेतनश्चेतनानाम्'[3]। 'द्वासुपर्णा'[4] इत्यादिषु भेदः। अत उच्यते-॥ ॐ पृथगुपदेशात् ॐ ॥२८॥ 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छे'दिति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीवः॥२८॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ २९ ॥ ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारः स्वरूपमतोऽभेदव्यपदेशः। यथा सर्वगुणात्मकत्वा-त्सर्वात्मत्वं ब्रह्मण उच्यते 'सर्वं खल्विदं ब्रह्मे'ति। भविष्यत्पर्वणि च—'भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्म-रूपेण वेदवादेषु सर्वश' इति॥२९॥ पृथगुपदेशाधिकरणम् ॥ १४ ॥

---

[1] ६-८-७ छां उ. [2] १-४-१० बृ.उ. [3] ६-१३. श्वे.उ. [4] ४-६. श्वे.उ.

जीवस्याप्युत्पत्तिरुक्ता। अतस्तस्य 'सोऽनादिना पुण्येन पापेन चानुबद्धः। परेण निर्मुक्त आनन्त्याय कल्प्यत' इत्यनादिकर्मसम्बन्ध आनन्त्याप्तिश्च न युज्यत इत्यत आह—॥ ॐ **यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ** ॥३०॥ यावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपि। 'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवः। अत उत्पद्यते च म्रियते च विमुच्यते चे'ति च आग्निवेश्यश्रुतिः। 'आत्मा नित्यः सुखदुःखे त्वनित्ये, जीवो नित्यो धातुरस्य त्वनित्य' इति च भारते ॥३०॥ यावदधिकरणम् ॥१५॥

'विज्ञानात्मा सह देवैश्च सर्वैः'[1]। 'स आनन्दः स बलः स ओजः स परेणाधुं लोकं नीयते स विमुच्यत इति जीवस्य ज्ञानानन्दादिरूपत्वमुच्यते। 'स दुःखाद्विमुक्त आनन्दी भवति। सोऽज्ञानाद्विमुक्तो ज्ञानी भवति। सोऽबलाद्विमुक्तो बली भवति। स नित्यो निरातङ्कोऽवतिष्ठत' इति पैङ्गिश्रुतावनानन्दादिरूपत्वं प्रतीयते। अत आह—॥ ॐ **पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ** ॥ ३१ ॥ यथा बालस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यत एवं सतामेवानन्दादीनां व्यक्त्यपेक्षया तदुक्तिः। 'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्। स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्धिभोरि'ति च गौपवनश्रुतिः ॥ ३१ ॥ ॐ **नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ** ॥ ३२ ॥ व्यक्त्यनङ्गीकारे देवानां नित्योपलब्धिरानन्दादीनामसुराणां नित्यानुपलब्धिर्मनुष्याणां च नित्योपलब्ध्यनुपलब्धी च प्रसज्ज्यन्ते ॥ 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं च मनुष्या' इति ह्याग्निवेश्यश्रुतिः॥ भविष्यत्पर्वणि च—'नित्यानन्दज्ञानबला देवा नैवं

[1] ४-११. प्र उ.

तु दानवाः। दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः॥ तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम्। विज्ञानेनाऽत्मयोगेन निजरूपे व्यवस्थितिः॥ सम्यज्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम्। विपरीतं च दैत्यानां ज्ञानस्यैवं व्यवस्थितिरि'ति॥३२॥ पुंस्त्वाधिकरणम्॥१६॥

ईश्वरस्यैव कर्तृत्वमुक्तम्। 'यत्कर्म कुरुते तदभिसम्पद्यत'[1] इति जीवस्योपलभ्यते। अत आह—॥ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ॥३३॥ जीवस्य कर्तृत्वाभावे शास्त्रस्याप्रयोजकत्वप्राप्तेर्जीवोऽपि कर्ता॥३३॥ ॐ विहारोपदेशात् ॐ॥३४॥ 'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वे'[2]त्यादि मोक्षेऽपि॥३४॥ ॥ॐ उपादानात् ॐ॥३५॥ साधनाद्युपादानप्रतीतेश्च॥३५॥ ॥ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ॥ ॥३६॥ 'आत्मानमेव लोकमुपासीत'[3] इति क्रियायां व्यपदेशाच्च। अन्यथाऽऽत्मैव लोकमिति निर्देशः स्यात्॥३६॥ तर्हि कथमीश्वरस्यैव कर्तृत्वमित्यतो वक्ति—॥ॐ उपलब्धिवदनियमः ॐ॥ ॥३७॥ यथा ज्ञान इदं ज्ञास्यामीत्यनियमः प्रतीयत एवं कर्मण्यपि जीवस्य। 'य आत्मानमन्तरो यमयती'[4]ति च श्रुतिः॥३७॥ कुतः?— ॥ ॐ शक्तिविपर्ययात् ॐ॥३८॥ अल्पशक्तित्वाज्जीवस्य॥३८॥ ॐ समाध्यभावाच्च ॐ॥३९॥ समाध्यभावाच्चास्वातन्त्र्यं प्रतीयते॥३९॥ अतः—॥ ॐ यथा च तक्षोभयथा ॐ॥४०॥ यथा तक्ष्णः कारयितृनियतत्वं

---

[1] ६-४-५. बृ.उ. [2] ८-१२-३. छां.उ. [3] ३-४-१५. बृ.उ.
[4] माध्यन्दिन पाठः.

कर्तृत्वं च नियते एवं जीवस्यापि ॥ ४० ॥ **ॐ परात्तु तच्छ्रुतेः ॐ ॥ ४१ ॥** सा च कर्तृत्वशक्तिः परादेव ॥ 'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षये'ति हि पैङ्गिश्रुतिः ॥ ४१ ॥ **ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ ४२ ॥** ततोऽप्रयोजकत्व शास्त्रस्य नाऽपद्यते । कृतप्रयत्नापेक्षत्वाच्चप्रेरकत्वस्य ॥ आदिशब्देनावैषम्यादि ॥ 'पूर्वकर्म प्रयत्नं च संस्कारं चाप्यपेक्ष्य तु । ईश्वरः कारयेत्सर्वं तच्चेश्वरकृतं स्वयम् । अनादित्वाददोषश्च पूर्णशक्तिरतो हरेरि'ति भविष्यत्पर्वणि ॥ 'एतदेवं नचाप्येवमेतदस्ति च नास्ति चे'ति च मोक्षधर्मे ॥ ४२ ॥ कर्तृत्वाधिकरणम् ॥ १७ ॥

'अंशा एव हीमे जीवा अंशी हि परमेश्वरः । स्वयमशेषरिदं सर्वं कारयत्यचलो हरि'रिति गौपवनश्रुतौ अंशत्वं जीवस्योपलभ्यते ॥ 'नैनाशो न सम्बन्धो नापेक्ष्यो जीवः परस्य । तथाऽपि तु यथायोगं फलदः प्रभुरेकराट् । न नियम्यः स कस्यापि स सर्वस्य नियामक' इति च माध्यंदिनायनश्रुतौ ॥ अतो ब्रवीति—॥ **ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ ४३ ॥** 'मां रक्षतु नित्यनित्यं पुत्रोऽहं परमात्मनः' । 'अतः परेण पितरं यो अस्यानुवेद पर एनावरेण'[1] । 'यस्तद्वेद स पितुष्पिताऽसत्'[2] । 'यस्ता विजानात्स पितुष्पिताऽसत्'[3] । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्यो अभिचाकशीती'[4]त्यादिना नानाव्यपदेशादंशो जीवः ॥ तथा च पाराशर्यायणश्रुतिः—'अंशो ह्येष परस्य योऽ

[1] १ १६४ १८ ऋ स  [2] १-१४ म ना उ  [3] १ १६४ १६ ऋ स
[4] ३ १-१ मु उ

पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च सखेति चे'ति ॥ 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कश्चने'त्यन्यथा च कापायणश्रुतिः ॥ 'ब्रह्म दाशा ब्रह्म कितवाः, ब्रह्मैवेमे दाशा' इत्यभेदेनाप्येकेऽधीयते । तथा चाग्निवेश्यश्रुतिः—'अंशो ह्येष परस्य भिन्नं ह्येनमधीयिरेऽभिन्नं ह्येनमधीयिर' इति । वाराहे च—'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः । बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु । यतो भेदेन तस्यायमभेदेन च गीयते । अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यत' इति ॥४३॥ ॐ मन्त्रवर्णात् ॐ ॥४४॥ 'पादोऽस्य विश्वा भूतानी'ति[1] ॥ ४४ ॥ ॐ अपि स्मर्यते ॐ ॥ ४५ ॥ 'ममैवांशो जीवलोके जीवभूतः सनातन'[2] इति ॥ ४५ ॥ अनंशत्वश्रुतेर्गतिं चाऽह—॥ ॐ प्रकाशादिवन्नैवं परः ॐ ॥ ४६ ॥ अंशत्वेऽपि न मत्स्यादिरूपी पर एवं विधः । यथा तेजोंऽशस्यैव कालाग्नेः खद्योतस्य च नैकप्रकारता । यथा जलांशस्यामृतसमुद्रस्य मूत्रादेश्च । यथा च पृथिव्यंशस्य मेरोर्विष्टादेश्च । अभिमानिदेवतापेक्षयैतत् ॥ ४६ ॥ ॐ स्मरन्ति च ॐ ॥ ४७ ॥ 'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्'[3] । 'अतः परं यदव्यक्तमव्यूढगुणबृंहितम् । अदृष्टाश्रुतवस्तुत्वात्स जीवो यः पुनर्भवः'[3] ॥ 'स्वांशश्चाथो विभिन्नांश इति द्वेधांऽश इष्यते । अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः ॥ तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् । विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्साद्दश्यमात्रयुक्' ॥ इति वाराहे । 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य'[4] इत्यादि ॥४७॥ ॥ ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ॥ ४८ ॥ परानुज्ञया प्रवृत्तिः, परतो बन्धनिवृत्तिश्च जीवस्य

---

[1] १०-९०-३. ऋ.सं. [2] १५-७. भ.गी. [3] भागवत. [4] ११-४३. भ.गी.

प्रतीयते, अंशत्वेऽपि देहसम्बन्धात् ।-'य आत्मानमन्तरो यमयति'[1] । 'तमेवं विद्वानि'[2]त्यादिना । न तु परस्य । 'वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाऽहममितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परानन्दा' इति हि चतुर्वेदशिखायाम् ॥ युज्यते च ज्योतिरादिवत् यथाऽऽदित्यो नियतस्तत्प्रकाशश्चैकप्रकारः । 'शुक्लं कृष्णं कनीनिके'[3]ति तदंशस्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिः । तदनुग्राह्यत्वं तेनैवाऽऽवृतिपरिहारश्च । यथा वाह्यामृतजलस्यामृतसमुद्रस्य चैकत्वं तदंशस्यापि श्लेष्मणस्तदनुग्राह्यत्वं तेनैव तिरोधिनिवृत्तिश्च । मोक्षधर्मे च—'यत्किञ्चिदिह लोकेऽस्मिन्देहबद्धं विशांपते । सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ ईश्वरो हि महद्भूतं प्रभुर्नारायणो विराट् । भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च । भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तमे'ति । वाराहे च—'अंशाश्च देहयोग्यत्वाज्जीवा बन्धादिसंयुताः । अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिको हरिः ॥ अदेहबन्धयोग्यत्वाद्यथाग्र्यं प्रभाऽक्षिणी । यथाऽमृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता । अनुग्राह्यत्वमन्यस्य तेनैवाऽऽवृतिरोधनमि'ति ॥ ४८ ॥ ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ ४९ ॥ अपूर्णशक्तित्वाच्च जीवस्य न मत्स्यादिसाम्यम् । तथा च चतुर्वेदशिखायाम्—'तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य ह वा एतस्य परमस्य पञ्चरूपाणि दशरूपाणि शतरूपाणि सहस्ररूपाण्यमितरूपाणि तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि । अथावराः सर्व एवापूर्णाः सर्व एव बध्यन्तेऽथ मुच्यन्ते च

[1] माध्यन्दिन पाठ [2] ३-१२ तै आ [3] २-१-५ ऐ आ

केचने'ति ॥ ४९ ॥ ॐ आभास एव च ॐ ॥ ५० ॥ 'रूपं रूपं प्रतिरूपो बभूवे'[1]ति प्रतिबिम्बत्वाच न साम्यम् । वाराहे च—'द्विरूपांशकौ तस्य परमस्य हरेर्विभोः । प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ॥ प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः । प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि त्वि'ति ॥ 'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेरि'ति पैङ्गिश्रुतिः ॥ 'यथैषा पुरुषच्छाया एतस्मिन्नेतदाततमि'[2]ति च श्रुतिः ॥ ५० ॥ अंशाधिकरणम् ॥ १८ ॥

प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाह—॥ ॐ अदृष्टानियमात् ॐ ॥ ५१ ॥ अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् ॥ ॥५१॥ ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥५२॥ इच्छाद्वेषसुखदुःखादिवैचित्र्यं चादृष्टादेव । चशब्देन प्रतिक्षणवैचित्र्यं च ॥ ५२ ॥ ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ॥५३॥ न स्वर्गभूम्यादिप्रदेशविशेषाद्वैचित्र्यम् । तत्प्राप्तेरप्यदृष्टापेक्षत्वात् । एकदेशस्थितानामेव वैचित्र्यदर्शनाच ॥५३॥ अदृष्टाधिकरणम् ॥१९॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोत्यनेन पादेन । 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे । भूतेभ्योऽण्डमण्डस्यान्तस्त्विमे लोकाः । अथ प्राणा एवानादयः प्राणा नित्या' इति कापायणश्रुतौ प्राणानामनुत्पत्तिः प्रतीयते ॥ 'नोपादानं हीन्द्रियाणामतोऽनुत्पत्तिरिष्यते । उपादानकृता सृष्टिः सर्वलोकेषु दृश्यत' इति भविष्यत्पर्वणि ॥ 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'[3]ति च । अत उच्यते—

---

[1] ६-४७-१८. ऋ सं. [2] ३-२. प्र.उ. [3] २-१-३. मुं.उ.

॥ ॐ **तथा प्राणाः** ॐ ॥ १ ॥ यथाऽऽकाशादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि ॥ १ ॥ ॐ **गौण्यसम्भवात्** ॐ ॥ २ ॥ अनादित्वश्रुतिर्गौणानादित्वापेक्षया। मुख्यासम्भवात्॥ 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः। तेषां भूतैरुपचयः सृष्टिकाले विधीयते। परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यते'ति हि भविष्यत्पर्वणि ॥२॥ ॐ **प्रतिज्ञानुपरोधाच्च** ॐ ॥ ॥ ३ ॥ स इदं सर्वमसृजते'[1]ति ॥ ३ ॥ प्राणाधिकरणम्[2] ॥ १ ॥

'द्विधा ह्येवेन्द्रियाणि नित्यानि चानित्यानि च। तत्र नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानी'ति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते। अत आह— ॥ ॐ **तत्प्राक्श्रुतेश्च** ॐ ॥ ४ ॥ 'मनः सर्वेन्द्रियाणि चे'[3]ति पूर्वोक्तत्वान्नानुत्पत्तिर्मनसो युज्यते। 'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः। तदनुत्पत्तिवचनमल्पोपचयकारणादि'ति वायुप्रोक्तवचनं चशब्देन गृहीतम् ॥ ४ ॥ मनोधिकरणम्[4] ॥ २ ॥

'नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतमि'ति। 'वाग्वाव नित्या नह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठत' इति सयुक्तिकं पौष्यायणश्रुतौ वाचोऽनुत्पत्तिरुच्यते। अतो ब्रवीति—॥ ॐ **तत्पूर्वकत्वाद्वाचः** ॐ ॥ ५ ॥ 'तस्मान्मन एव पूर्वरूपं वागुत्तररूपमि'[5]ति मनःपूर्वकत्वाद्वाचो नानुत्पत्तिः ॥ 'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता। उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चने'ति वायुप्रोक्ते ॥ ५ ॥ वागाधिकरणम्[6] ॥ ३ ॥

---

1 २-६. तै.उ  2 प्राणोत्पत्त्यधिकरणम्. पा.  3 २-१-३. मुं.उ.
4 तत्प्रागधिकरणम्. पा.  5 ३-१-१. ऐ.आ.  6 तत्पूर्वकत्वाधिकरणम्. पा.

'सप्त प्राणाः प्रभवन्ति तस्मात्'[1] इति श्रुतिः । 'सप्तैव मारुता बाह्ये प्राणाः सप्त तथाऽऽत्मनि । अधिदैवे तथाऽध्यात्मे सङ्ख्यासाम्यं विदो विदुरि'ति च स्कान्दे । 'द्वादश वा एते प्राणा द्वादश मासा द्वादशाऽऽदित्या द्वादशराशयो द्वादश ग्रहा' इति कौण्डिन्यश्रुतौ द्वादशप्राणा दृश्यन्ते । अतो वक्ति—॥ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥ ६ ॥ ज्ञानेन्द्रियापेक्षया सप्तत्वम् । 'गुहाशयां निहिताः सप्तसप्ते'ति विशेषणात् ॥ 'सप्तप्राणास्त्ववगतेः पञ्चप्राणाश्च कर्मणः । एवं प्राणद्वादशकं शरीरे नित्यसंस्थितमि'ति भविष्यत्पर्ववचनं चशब्दात् ॥ ६ ॥ ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ॥ ७ ॥ हस्तादीनां कर्मविषयत्वान्न सहपाठः ॥ 'संसारस्थितिहेतुत्वात्स्थितं कर्म विदो विदुः । तस्मादुद्गतिहेतुत्वाज्ज्ञानं गतिरिहोच्यत' इति (च) वायुप्रोक्ते ॥ ७ ॥ सप्तगत्यधिकरणम् ॥ ४ ॥

'दिवीव चक्षुराततमि'[2]ति व्याप्तिः प्रतीयते । दूरश्रवणदर्शनादियुक्तिश्च ॥ अणुभिः पश्यत्यणुभिः शृणोति प्राणा वा अणवः प्राणैर्ह्येवङ्गवती'ति च कौण्डिन्यश्रुतिः ॥ अतो वक्ति—॥ ॐ अणवश्च ॐ ॥ ८ ॥ 'तद्यथा ह्यणुनश्चक्षुसः प्रकाशो व्याततः एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येष पुरुषो भवती'ति शाण्डिल्यश्रुतिः ॥ ८ ॥ अण्व(णुत्वा)धिकरणम् ॥ ५ ॥

'नैष प्राण उदेति नास्तमेत्येकल एव मध्ये स्थाता । अथैनमाहुर्मध्यम इती'ति मुख्यप्राणस्यानुत्पत्तिः श्रूयते । 'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा । तस्योत्पत्तिर्मृतिर्श्चैव कथं प्राणस्य युज्यत' इति युक्तिर्वायुप्रोक्ते ॥ 'आत्मन एष प्राणो जायत'[3] इति च । अत आह—॥ ॐ श्रेष्ठश्च ॐ ॥ ९ ॥ 'सौक्ष्म्येण ह् वा एषोऽवतिष्ठते

[1] २-१-८. मुं.उ. [2] १-२२-२०. ऋ सं. [3] ३-३. प्र.उ.

स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिरिती'ति गौपवनश्रुतेः ॥ ९ ॥ ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ १० ॥ 'चेष्टाया वायवायौ च मुख्यप्राणे च गीयते । प्राणशब्दस्त्रिपु ह्येषु मुखे मुख्यः प्रकीर्तित' इति वायुक्रिययोरपि व्यपदेशादुत्पत्तिश्रुतिस्तयोर्न स्यात् । 'स प्राणमसृजत ... खं वायुर्ज्योतिरापः ... तपो मन्त्राः कर्मे'[1]ति पृथगुपदेशात् । 'भूतानि चेष्टा मन्त्राश्च मुख्यप्राणादिदं जगत् । मुख्यप्राणः परस्माच्च न परः कारणान्वित' इति (च) वायुप्रोक्तेः ॥ १० ॥ ॥ मुख्यप्राणाधिकरणम्[2] ॥ ६ ॥

'प्राणादिदमासीत्प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किञ्चिदाश्रित' इत्याग्निवेश्यश्रुतौ ॥ 'यदाश्रयादस्य चेष्टा सोऽन्य कथमुपाश्रयेत् । यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेदि'ति च युक्तिर्भारते ॥ 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः । न परः क(कि)ञ्चिदाश्रित्य वर्तते परमो यत' इति पैङ्गिश्रुतिः ॥ अत आह—

॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ ११ ॥ चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव 'सर्वं ह्येवैतत्परमेऽनतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्यक एवैतान्नयत्युन्नयति वशीकरोती'ति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात् ॥ 'सर्वकर्तापि सम्प्राण परमावरतः स्थितः । कथमेवान्यथा स स्याद्यतो नैवेश्वरद्वयम् ॥ अनान्तरेश्वरत्वेन तस्येश्वरवचो भवत् । अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः ॥ अनन्येश्वरता प्राणे तदन्येश्वरवर्जनम् । यतो विशेषवास्त्येन ह्रियत समतावचः' ॥ 'नान्योऽतोऽस्ति द्रष्टा'[3] 'नान्यदतोऽस्ति द्रष्टृ'[4]त्यादिवचनयुक्तयश्चादिशब्दोक्ताः ॥ ११ ॥

[1] ६. ४ प्र उ [2] श्रेष्ठाधिकरणम् पा [3] ३. ७. २३ बृ उ
[4] ३. ८. ११ बृ उ

॥ ॐ अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॐ ॥ ॥ १२ ॥ इतरेषां प्राणानां करणत्वान्मुख्यस्याकरणत्वात्तस्यान्येभ्य उत्तमत्वं युज्यते । माण्डव्यश्रुतिश्च—'तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्याचक्षत' इति ॥ १२ ॥ चक्षुराद्यधिकरणम् ॥ ७ ॥

'सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः समान इति । अथ प्राणो वाव सम्राडिति' कौण्डिन्यश्रुतिः । 'प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् । अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वत' इति युक्तिवायुप्रोक्ते ॥ 'मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च-वायवः । स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशमि'ति च गौपवन-श्रुतिः ॥ अतो वक्ति—॥ ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ १३ ॥ 'अथ पञ्चवृत्त्यैतत्प्रवर्तते प्राणो वाव पञ्चवृत्तिः प्राणोऽपानो व्यान उदानः समान इति । तेभ्यो वा एतेभ्यः पञ्च-दासाः प्रजायन्ते । प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदाना-दुदानः समानादेव समानो यथा ह वै मनः पञ्चधा व्यपदिश्यते मनोबुद्धिरहङ्कारश्चित्तं चेतनेति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । मनसो वाव मनो बुद्धेर्बुद्धिरहङ्कारादहङ्कारश्चित्ताच्चित्तं चेतनाया एव चेतनेवमिती'ति ॥ १३ ॥ पञ्चवृत्त्यधिकरणम् ॥ ८ ॥

'प्राण एवाधस्तात्प्राण उपरिष्टात्प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वमि'ति प्राणस्य व्याप्तिः प्रतीयते ॥ 'यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु । अनो धृतं जगत्सर्वमन्यथा केन धार्यत' इति च युक्तिवायुप्रोक्ते ॥ 'अणुर्नैतत्सृज्यतेऽणुर्नैतद्धार्यते अणौ लयमभ्युपैति प्राणो वा अणुः प्राणो ह्येनद्वशी'ति च मैत्रायण-श्रुतिः ॥ अत आह—॥ ॐ अणुश्च ॐ ॥ १४ ॥ स वा

एष प्राणोऽणुर्महान्नामाऽन्तर्नाऽणुर्बहिर्महान्प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च परमे'ति हि कौण्डिन्यश्रुतिः ॥ प्राणाणुत्वाधिकरणम् ॥ ९ ॥

करणत्वं प्राणानामुक्तम् । 'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वगः । यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिष्वि'ति सौत्रायणश्रुतौ सयुक्तिकं जीवकरणत्वं प्रतीयते ॥ 'ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति तद्धेतैः कारयती'ति च कापायणश्रुतौ ॥ अत आह—॥ ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ॥१५॥ यज्ज्योतिराद्यधिष्ठानं ब्रह्म तदेतैः करणैः प्रवर्तयति । 'यः प्राणे तिष्ठन्नि'[1]त्यादि तदामननात् ॥ १५ ॥ कथं जीवकरणत्वश्रुतिरित्यतो वक्ति—॥ ॐ प्राणवता शब्दात् ॐ ॥ १६ ॥ जीवेनैव (स्व)करणैः कारयति परमात्मा । अतो न विरोधः । एष ह्येनेनाऽऽत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मानयति बुद्ध्या बोधयति तस्मादेतावाहुः सूतिरसूतिरिती'ति भाल्लवेयश्रुतेः ॥ 'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् । श्रोत्रादिभिः कारयति करणानीत्यतो विदुः ॥ न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः । केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितमि'ति च नारदे ॥१६॥ ॥ ॐ तस्य च नित्यत्वात् ॐ ॥१७॥ अनादिनित्यत्वाच्च जीवकरणसम्बन्धस्य युज्यते तत्करणत्वश्रुतिः । 'अथावियोगीनि । करणैरात्र न नियुज्यते देहेनैव नियुज्यत इत्येतद्वार करणानां करणत्वं यद्वान्न नियुज्यत' इति गौपवनश्रुतिः । चशब्दः करणसम्बन्धग्राही ॥ १७ ॥ ज्योतिराद्यधिकरणम् ॥ १० ॥

---

[1] ५-७ १६ बृ उ

'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ती'ति सयुक्तिका पौत्रायणश्रुतिः सामान्येन प्राणानामिन्द्रियत्वं वक्ति। 'द्वादशैवेन्द्रिण्याहुर्मनोबुद्धी तु द्वादशे' इति च कापायणश्रुतिः। अतः कस्येन्द्रियत्वं निवार्यत इत्यतो वक्ति—॥ **ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ १८ ॥** मुख्यप्राणमृते त एवेन्द्रियाणि। 'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम्। द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराडि'ति पौत्रायणश्रुतिः ॥ 'श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम्। मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ॥ विषयद्रवणात्तेषामिन्द्रियत्वमुदाहृतम्। तेषां नियामकः प्राणः स्थित एवाखिलप्रभुरि'ति बृहत्संहितायाम् ॥ १८ ॥ ॥ **ॐ भेदश्रुतेः ॐ ॥ १९ ॥** 'स्थित एव हीदं मुख्यप्राणः करोति कारयति वलति वालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न वलन्ति न वालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानी'ति पौत्रायणश्रुतेः ॥१९॥ **ॐ वैलक्षण्याच्च ॐ ॥२०॥** पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते न मुख्यस्य। 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रती'[1]ति च श्रुतिः ॥ २० ॥ इन्द्रियाधिकरणम् ॥११॥

'निरिञ्चो वा इदं सर्वं निरेचयति विदधाति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी' इति गौपवनश्रुतिः ॥ 'यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते। एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुख' इति च युक्तिर्ब्राह्मे। 'अथ कस्मादुच्यते परम इति परस्माद्धेते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति। अथ कस्मादुच्यते ब्रह्मेति बृहत्त्वाद्बृंहणाच्चे'त्याग्निवेश्यश्रुतिः। अत आह—

[1] ४-३ प्र उ

**॥ ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥**

॥ २१ ॥ नामरूपक्लृप्तिः परादेव । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्य(दा) आस्ते'[1] इति श्रुतेः । त्रिवृत्कुर्वत इति हेतुगर्भः । त्रिवृत्करणापेक्षत्वान्नामरूपयोः ॥ 'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः । एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तरा' इति च पाद्मे ॥ 'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया । रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ॥ अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् । हरिरेव यतः कर्ता पिताऽतो भगवान्प्रभुरि'ति च ब्रह्माण्डे ॥ २१ ॥ संज्ञाधिकरणम् ॥ १२ ॥

'अद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च भवन्त्यापः शरीरमाप एवेदं सर्वमि'ति कौण्डिन्यश्रुतिः । 'अम्मयं तु यतो मांसमतस्तन्मिश्र मांसत' इति च भारते । 'पृथिवी शरीरमाकाशमात्मे'[2]ति च अतो ब्रवीति—॥ ॐ **मांसादि भौमं यथाशब्दमितरयोश्च** ॐ ॥ २२ ॥ 'यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेज' इति श्रुतेर्मांसाद्येव भौमं न सर्वशरीरम् । अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम् ॥ 'यद्वानाथो विमिश्रं मिश्राद्येतद्भवति मिश्राणि हि भूतानि तस्मादेवैवमाचक्षते भूतानीती'ति हि शापायणश्रुतिः । 'पञ्चभूतात्मकं सर्वं तथाऽप्येकविवक्षया । एकभूतात्मकत्वेन व्यवहारस्तु वैदिके । भौममित्येव काठिन्याच्छौक्ल्यादौदकमित्यपि । तेजिष्टत्वात्तैजसं च यथाऽस्त्रां वचनं श्रुतावि'ति वायुप्रोक्ते ॥ २२ ॥ कथं तर्हि विशेषवचनमित्यत आह—॥ ॐ **वैशेष्यात्तु तद्वादस्तद्वादः** ॐ ॥ २३ ॥ भूतानां विशेषसंयोगादेव विशेषव्यवहारः । 'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता ।

[1] ३-१२ तै आ [2] ५२१३ बृ उ

इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः । इति सामान्यतो ज्ञेयं भेदं च प्रतिपूरुषम् । स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतमि'ति च बृहत्संहितायाम् ॥ सर्वाध्यायार्थावधारणार्थाऽध्यायान्ते द्विरुक्तिः । गारुडे च—'अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा । विचारो यत्र सज्ज्येत पूर्वोक्तस्यावधारणे ॥ अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् । विनिन्द्य चेतरान्मार्गान्सम्पूर्णफलता तथे'ति ॥ २३ ॥ मांसा(द्य)धिकरणम् ॥ १३ ॥ इति श्रीमत्कृष्ण-द्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥ द्वितीयोऽविरोधाध्यायस्समाप्तः ॥

॥ अथ तृतीयाध्यायः ॥

साधनविचारोऽयमध्यायः । वैराग्याय गत्यादिनिरूपणा प्रथमपादे । भूतबन्धो हि बन्धः । 'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो निर्मोचनमि'ति च वाराहे । तच्च मरणे भवति । 'भूतानां निनिवृत्तिस्तु मरणं समुदाहृतम् । भूतानां सम्प्रयोगश्च जनिरित्येव पण्डितैरि'ति च भारते । अतः किं साधनैरित्यत आह—॥ ॐ **तदन्तरप्रतिपत्तौ रंहतिसम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्** ॐ ॥ १ ॥ शरीरान्तरप्रतिपत्तौ भूतपरिष्वक्त एव गच्छति । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'[1]ति प्रश्नपरिहाराभ्याम् ॥१॥ ॥ तदन्तराधिकरणम् ॥ १ ॥

॥ ॐ **त्र्यात्मकत्वात्तु भूयस्त्वात्** ॐ ॥ २ ॥ अप्छब्दस्तु त्र्यात्मकत्वादुच्यते । भूयस्त्वाच्चापाम् । 'तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमा' इति च भागवते ॥ २ ॥ त्र्यात्मकत्वाधिकरणम् ॥ २ ॥

॥ ॐ **प्राणगतेश्च** ॐ ॥ ३ ॥ 'यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि करणानि च । नैतानि कदाचिद्वियुज्यन्ते न च विलीयन्त' इति भाल्लवेयश्रुतेः प्राणगतेर्भूतान्यपि सह गच्छन्ती'[2]ति सिद्धम् ॥ ३ ॥ प्राणगत्यधिकरणम् ॥ ३ ॥

॥ ॐ **अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** ॐ ॥ ४ ॥ 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण'[3]

---

[1] ५ ३, ९ छा उ [2] सन्तीति पा [3] ५ २ १३ बृ उ

इत्यादिश्रुतेर्न प्राणानां जीवेन सह गतिरिति चेन्न—भागतोऽग्न्यादिप्राप्तेः ॥ 'पुरुषस्य मृतौ ब्रह्मन्प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् ॥ पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति चे'ति ब्राह्मे ॥ ब्रह्माण्डे च—'मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च । भागतो भागतस्त्वेनमनुगच्छन्ति सर्वश' इति ॥ ४ ॥ अग्न्याद्यधिकरणम् ॥ ४ ॥

॥ ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥ ५ ॥ 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती[1]'ति प्रथमाऽग्नौ श्रूयते न भूतानि जुह्वतीति । अतो नेति चेन्न । ता एव प्रस्तुता आपः श्रद्धारूपेण हूयन्ते । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'[2]त्युपसंहारोपपत्तेः ॥ ५ ॥ प्रथमश्रवणाधिकरणम् ॥ ५ ॥

॥ ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ ६ ॥ अग्न्यादिगतिः प्रत्यक्षतः श्रूयते । अतः प्रत्यक्षश्रवणान्न युक्तमिति चेन्न । 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरती'ति कौण्ठरव्यश्रुतौ प्रतीतेः ॥ ६ ॥ अश्रुतत्वाधिकरणम् ॥ ६ ॥

'अपाम सोमममृता अभूमे'[3]त्यादि श्रुतिविरोध इत्यतो वक्ति—

॥ ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ॥ ॥ ७ ॥ भागतस्तदमृतत्वम् । 'नान्यः पन्था अयनाय विद्यत'[4] इति श्रुतेरात्मविद एव हि मुख्यम् । वाशब्दात्पारम्पर्येणाऽत्मविदपेक्षया वा । तथा हि श्रुतिः —'स एनमविदितो न भुनक्ति यथा वेदो वाऽननुक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽत्मानमेव लोकमुपासीत स य

[1] ५-४-२ छा उ [2] ५-९-१ छा उ [3] ८-४८-३ ऋ सं. [4] ३-१२ तै आ.

आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत्कामयते तत्तत्सृजते'[1] ॥ 'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः' । 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि यत एनममृतं नयन्ती'ति च ॥७॥ भाक्ताधिकरणम् ॥ ७ ॥

कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरित्यत आह— ॥ ॐ **कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ** ॥ ८ ॥ 'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छती'ति श्रुतेः — 'भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः । कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः ॥ आचतुर्दशमाद्दूर्ध्वकर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्ययम् । अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यती'त्यादिस्मृतेश्च शेषवानेवाऽयाति ॥ ८ ॥ ॥ कृतात्ययाधिकरणम् ॥ ८ ॥

'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तत' इति गतिप्रकारेणाऽगतिः प्रतीयते । अतो ब्रूते— ॥ ॐ **यथेतमनेवं च ॐ** ॥९॥ 'धूमादभ्रमभ्रादाकाशमाकाशाचन्द्रलोकं यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती'ति काषायणश्रुतेर्यथागतमन्यथा च ॥ ९ ॥ यथेताधिकरणम् ॥ ९ ॥

॥ ॐ **चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ** ॥ १० ॥ 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयामि'[2]ति श्रुतेश्चरणफलमेव गमना-

[1] ३-४-१५. बृ.उ. [2] ५-१०-७. छां.उ.

गमने न यज्ञादिकृतः । 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः । अशुद्धिदस्त्वनाचारश्चरणं तूभयं मतमि'ति स्मृतेरिति चेन्न । यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति कार्ष्णाजिनिर्मन्यते ॥ १० ॥

॥ ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ॥ ११ ॥

तर्हि रमणीयाः कपूया इत्येव स्यात् । चरणशब्दस्यानर्थक्यमिति चेन्न । चरणापेक्षत्वाद्रमणीयत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः ॥ ११ ॥

॥ ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ॥ १२ ॥

'धर्मं चरत माऽधर्ममि'त्यादिप्रयोगात्सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते । तुशब्दात्स्वसिद्धान्तोऽपि स एवेति सूचयति । 'तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे' इति च नाममहोदधौ ॥ १२ ॥ चरणाधिकरणम् ॥ १० ॥

पुण्यकृतामेव गमनागमने नेतरेषामित्यत आह— ॥ ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥ १३ ॥ 'तत्र इह शुभाकृतो ये वाऽशुभकृतस्तेऽशुभमनुभूयाऽवर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ती'ति भाल्लवेयश्रुतौ ॥१३॥ ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ॥१४॥

संयमनमनुभूय केषाञ्चिदारोहः केषाञ्चिदवरोहः । तुशब्दोऽवधारणे । 'सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवेत उत्तिष्टन्तेऽपि कर्हिचिदथ वा एतद्द्विषाहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ती'ति कौण्ठरव्यश्रुतेः ॥ १४ ॥ ॐ स्मरन्ति च ॐ ॥ १५ ॥

'गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः । तत्र भुक्त्वा पतन्त्येव

ये द्विषन्ति जनार्दनम् ॥ महातमसि मग्नानां न तेषामुत्थितिः क्वचित् । इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । इति सर्वत्र नियमः पञ्चकष्टे तु तत्सदे'-त्यादि ॥ १५ ॥ अनिष्टादिकार्यधिकरणम् ॥ ११ ॥

॥ ॐ अपि सप्त ॐ ॥ १६ ॥ 'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ॥ तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ ॥ इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् । एतानि क्रमशो गत्वैवाऽरोहोऽथावरोहणमि'ति च भारते ॥ १६ ॥ सप्ताधिकरणम् ॥ १२ ॥

ईश्वरस्य नरकायुक्तेः 'सर्वं विसृजति' सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्ट' इति कौपारव-श्रुतिविरोध इत्यतो वक्ति—॥ ॐ तत्रापि च तद्व्यापारा-दविरोधः ॐ ॥ १७ ॥ चशब्दाद्दुःखानुभवेन । 'स स्वर्गे स भूमौ स नरके सोऽन्धे तमसि प्रश्वसित्कृदेक एवानुविष्टो नासौ दुःखभुगीश्वरः प्रभुत्वात्सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग्य एवं वेदेति' पौत्रायणश्रुतेरविरोधः ॥ 'नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते । नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते । नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वत' इति भागवततन्त्रे ॥ १७ ॥ ॥ तद्व्यापाराधिकरणम् ॥ १३ ॥

'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्रमिश्राण्यसकृदा-वर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमि'[2]ति गति-स्वातन्त्र्यं भूतानां प्रतीयत इत्यत आह—॥ ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ १८ ॥ विद्याकर्मापेक्षयैतद्वचनम् । तयोरपि

[1] सृजति. पा. [2] ५-१०-८. छां.उ. (नैकतरेण गच्छन्ति) पा.

प्रकृतत्वात् ॥ 'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ । तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तम' इति च भारते ॥ १८ ॥ ॥ विद्याकर्माधिकरणम् ॥ १४ ॥

'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते । अपि नीचगतौ किञ्चित्स्मु मानुषदेहिन' इति वचनान्महातमस्यपि सुखप्राप्तिरित्यत आह—॥ ॐ न तृतीये तथोपलब्धेः ॐ ॥ १९ ॥ 'अथाविद्वानकर्मोऽप्यागच्छति त्रिधा ह वाऽस्यागम(च्छ)तिस्तिर्यग्यातना तम इति द्वे वाव सुखानुवृत्ते, न तमः सुखानुवृत्तं केवल ह्येनाव दुःखं भवती'ति श्रुतेर्न तृतीयायाग्गतौ सुखम् ॥१९॥ ॐ स्मर्यतेऽपि च लोके ॐ ॥ २० ॥ 'तिर्यक्षु नरके चैव सुखलेशो विधीयते । नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चने'ति भविष्यत्पर्वणि ॥ लोकसिद्धं चैतत् । चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह ॥ 'अतिप्रिये यथा राजा न दुःखं महते क्वचित् । अत्यप्रिये सुखमपि तथैव परमेश्वर' इति हि ब्राह्मे ॥ २० ॥ ॐ दर्शनाच्च ॐ ॥२१॥ 'नारायणप्रसादेन समिद्धज्ञानचक्षुषा । अत्यन्तदुःखसंश्लीनान्निःशेषसुखवर्जितान् ॥ नित्यमेव तथाभूतान्विमिश्रांश्च गणान्बहून् । निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः । अपश्यत्त्रिविधान्ब्रह्मा साक्षादेव चतुर्मुख' इति दर्शनवचनाच्च पाद्मे ॥२१॥ ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ ॥ २२ ॥ तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिः ॥२२॥ ॐ स्मरणाच्च ॐ ॥ २३ ॥ 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् । श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् । तस्मान्न विस्तरेणैतत्कथ्यते राजसत्तमे'ति कौर्मे ॥ २३ ॥ महातमोऽधिकरणम्[1] ॥ १५ ॥

[1] न तृतीयाधिकरणम् पा.

'धूमो भूत्वाऽभ्रं भवती'[1]त्यादावन्यभावः श्रूयते । स कथमित्यतो वक्तीति—॥ ॐ **तत्स्वाभाव्यापत्तिरुपपत्तेः** ॐ ॥ २४ ॥ 'धूमादिषु प्रविश्य तद्वतौ गतिः स्थितौ स्थितिरित्यादिना तद्भावापत्तिः। न ह्यन्यस्यान्यभावो युज्यते । न च तत्पदप्राप्तिः । गारुडे च— 'धूमादिभावप्राप्तिश्च तद्वतौ गतिरेव तु । स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च ॥ न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते । विप्रागम्य पदं यस्मात् तत्प्राप्यं हि कर्मणा ॥ एकदेशस्वभावेन वाग्भेदोऽपि युज्यते । यथा जीवः परं ब्रह्म ब्रह्मेद जगदित्यपीति ॥२४॥
॥ तत्स्वाभाव्याधिकरणम् ॥ १६ ॥

बहुस्थानगमनात्कल्पान्तमप्येवं स्यादित्यत आह — ॥ ॐ **नातिचिरेण विशेषात्** ॐ ॥ २५ ॥ 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्त' इति विशेषान्नातिचिरेण ॥ 'स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात्पूर्वमेव तु । मातुः शरीरमाप्नोति पर्यटन्यत्र तत्र चे'ति च नारदीये ॥ २५ ॥ नातिचिरेणाधिकरणम्[2] ॥ १७ ॥

'त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्त'[3] इति श्रवणादनर्थफलत्वं यज्ञादेरित्यतो वक्ति—॥ ॐ **अन्याधिष्ठिते पूर्ववदभिलापात्** ॐ ॥ २६ ॥ अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः । न तु भोगोऽस्य । 'धूमो भूत्वाऽभ्रं भवती'[4]त्यादिपूर्वोक्ति-(क्त)वत् ॥ 'सोऽवागतः स्थावरान्त्रविद्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्ते' इत्यभिलापात्कौपारवश्रुतौ ॥ 'स्वर्गादवागतो देही व्रीह्यादीतरदेहगः । अभुञ्जंस्तु क्रमेणैव

1 ५ १० ५ छा उ 2 अचिरप्राप्त्यधिकरणम् पा 3 ५ १० ६ छा उ 4 ५ १० ५ छा उ

देहमाप्नोति कालत' इति वाराहे ॥ २६ ॥ ॐ अशुद्धमिति चेन्न शब्दात् ॐ ॥२७॥ हिंसाशापत्त्वात्पापस्यापि सम्भवाद्दुःखं च भवत्विति चेन्न । शब्दविहितत्वात् ॥ 'हिंसा त्ववैदिका या तु तयाऽनर्थो ध्रुवं भवेत् । वेदोक्तया हिंसया तु नैवानर्थः कथञ्चने'ति वाराहे ॥ २७ ॥ अन्या(धिष्ठिता)धिकरणम् ॥ १८ ॥

'स्वर्गादवाग्गतश्चापि मातुरेवोदरं व्रजेदि'ति वचना'द्य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुविशती'ति श्रुतिः कथमित्यत आह— ॥ ॐ रेतः सिग्योगोऽथ ॐ ॥ २८ ॥ 'ततो रेतस्सिचमेवानुप्रविशत्यथ मातरमथ प्रसूयते स कर्म कुरुत' इति कौण्ठरव्यश्रुतेः पितरमेव प्रथमतो प्रविशति । मातृप्राप्तेः पश्चादपि भाव्यत्वात् ॥ २८ ॥ रेतोऽधिकरणम् ॥ १९ ॥

'देहं गर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गत' इति वचनात्पश्चादेव प्रविशतीत्यत आह—॥ ॐ योनेः शरीरम् ॐ ॥ २९ ॥ पितृशरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरमाप्नोति ॥ 'दिवः स्थास्नून्गच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायत इति सम्मितम् । अथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भे वा बहिर्वे'ति पौष्यायणश्रुतेः ॥ 'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् । पुरुषात्स्त्रियमापन्नस्ततो देहं यथाक्रमम् ॥ देहेन जायते जन्तुरिति सामान्यतो जनिः । विशेषजननं चापि प्रोच्यमानं निबोध मे ॥ स्थास्नुभ्यश्चापि पुरुषे प्रमदायामथापि वा । गर्भे वा बहिरेवाथ जनित्वाथानन्तरेषु चे'ति ब्राह्मे॥२९॥योन्यधिकरणम्॥२०॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥

भक्तिरस्मिन्पाद उच्यते। भक्तयर्थं भगवन्महिमोक्तिः॥
॥ ॐ सन्ध्ये सृष्टिराह हि ॐ॥ १॥ न स्वप्नोऽपि तं विना प्रतीयते। 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजत'[1] इत्यादि श्रुतेः॥१॥ ॐ निर्मातारं चैके पुत्रादयश्च ॐ॥ २॥ 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण'[2] इति च। 'एतस्माद्ध्येव पुत्रो जायत एतस्माद्भ्रातैतस्माद्भार्या यदेनं पुरुषमेष स्वप्नेनाभिहन्ति' इति गौपवन-श्रुतिश्च॥ २॥ केन साधनेन?—॥ ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ॥ ३॥ अनादि-मनोगतान्संस्कारान्स्वेच्छामात्रेण प्रदर्शयति नान्येन साधनेन, सम्य-गनभिव्यक्तत्वात्॥ ब्रह्माण्डे च—'मनोगतांस्तु संस्कारान्स्वेच्छया परमेश्वरः। प्रदर्शयति जीवाय स स्वप्न इति गीयते॥ यदन्यथात्वं जाग्रत्त्वं मा भ्रान्तिस्तत्र तत्कृता। अनभिव्यक्तरूपत्वान्नान्यसाधन-जन्मवेदि'ति॥ ३॥ ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ॥ ४॥ साधनान्तराभावेऽपि भावाभावसूचकत्वेन चेश्वरो दर्शयति॥ 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति। समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने'[3] इत्यादिश्रुतेः॥ हिशब्दा-द्दर्शनाच्च॥ 'यद्वाऽपि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा। स्वप्नस्थ-मथवा राजा तत्तथैव भविष्यती'त्याद्याचक्षते च स्वप्नविदो व्यासादयः॥ ४॥ सन्ध्याधिकरणम्॥ १॥

॥ ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ॥ ५॥ बन्धमोक्षप्रदत्वात्स एव स्वप्न-

1 ६-३-१० बृ उ. 2 ५-८. कठ उ. 3 ५-२-९ छा उ

तिरस्कर्ता। 'स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च। तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ'इति कौर्मे ॥ ५ ॥ पराभिध्यानाधिकरणम् ॥ २ ॥

॥ ॐ देहयोगाद्वासोऽपि ॐ ॥ ६ ॥ देहयोगेन वासो जाग्रदपि तत एव ॥ 'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुरापाट् स एको बहुधा भवती'ति कौण्ठरव्यश्रुतेः ॥ ६ ॥ ॥ देहयोगाधिकरणम् ॥ ३ ॥

॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि हि ॐ ॥७ जाग्रत्स्वप्नाभावः सुप्तिः नाडीस्थे परमात्मनि । 'आसु तदा नाडीषु सुप्तो भवति'[1] । 'सता सौम्य तदा सम्पन्नो भवती'[2]ति श्रुतेः ॥७॥ ॥ तदभावाधिकरणम् ॥ ४ ॥

॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥८॥ यतस्तस्मिन्सुप्तिः ॥ 'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परम' इति (हि) कौण्डिन्यश्रुतिः ॥ ८ ॥ प्रबोधाधिकरणम् ॥ ५ ॥

॥ ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ ९ ॥ न च केषाञ्चित्स्वप्नादिकर्ता न तु सर्वेषामिति । 'एष ह्येव साधु कर्म कारयती'[3]ति कर्मण्यवधारणात् ॥ 'प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चने'त्यनुमारिस्मृतेश्च ॥ 'एष स्वप्नान्दर्शयत्येष प्रबोधयत्यथैष एव परम आनन्द' इति च श्रुतिः ॥ 'आत्मानमेव लोकमुपासीते'[4]ति च विधिः ॥ ९ ॥ कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥

---

[1] ८-६-३ छा उ  [2] ६-८-१ छां उ  [3] ३-८. कौ उ.
[4] ३-४-१५. बृ उ.

**॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ १०॥** मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य ॥ 'हृदयस्थात्पराङ्गीनो दूरस्थो जाग्रदेष्यति । समीपस्थस्तथा स्वप्नं स्वापित्याम्लिष्टं व्रजन् ॥ यत एवं त्रयोऽन्यत्र मोहस्तु परिशेषतः । अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेरि'ति वाराहे ॥ सोऽपि तत एवेति सिद्धम् ॥ 'मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते । स ईशः परमो ज्ञेयः परमानन्दलक्षण इति (हि) कौर्मे ॥ १० ॥ मुग्धप्राप्त्यधिकरणम्[1] ॥ ७ ॥

स्थानापेक्षया परमात्मनो(ऽपि) भेदादनुग्राह्यानुग्राहकभाव इत्यत आह—**॥ ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ ११ ॥** स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् ॥ 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत'[2] इति श्रुतिः ॥ 'एकरूपः परो विष्णुः सर्वत्रापि न संशयः । ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयत' इति (हि) मात्स्ये ॥ 'प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोह' इति च भागवते ॥ ११ ॥ **ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ १२ ॥** 'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यत'[3] इति भेदवचनान्नेति चेन्न । 'एष त आत्माऽन्तर्याम्यमृतः'[4] । 'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्'[5] । 'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि च । तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनमि'[6]ति प्रत्येकमभेदवचनात् ॥ १२ ॥ **ॐ अपि चैवमेके ॐ ॥ १३ ॥** एवमभेदेनैव । चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ति ।

---

[1] सम्पत्त्यधिकरणम् मा [2] ३-२-३. ऐ आ [3] २-१६ मा उ
[4] ७-३ बृ उ [5] ४५-१ बृ उ [6] ४-५ १९ बृ उ

'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः। ओङ्कारो विदितो येन स मुनिर्नेतरो जन'[1] इति। अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यते॥ ब्रह्मतर्के च—'वह्नो वन्यादिसाक्षित्वाङ्गिनो भिन्नेषु संस्थिनेः। निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वर' इति॥१३॥ ॥ स्थान(तोऽप्य)भेदाधिकरणम्॥ ८॥

रूपवत्त्वादनित्यत्वमित्यतो वक्ति—॥ **ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ** ॥ १४ ॥ प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वान्नैव रूपवद्ब्रह्म। हिशब्दा'दस्थूलमनण्वि'[2]त्यादि श्रुतेश्च॥ 'भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः। अरूपवानतः प्रोक्तः क तदव्यक्ततः पर' इति मात्स्ये॥ १४॥ **ॐ प्रकाशवच्चावैयर्थ्यम् ॐ** ॥१५॥ 'यदा पश्यः पश्यते रुक्मवर्णम्'[3]। 'श्यामाच्छबलं प्रपद्ये'[4]। 'सुवर्णज्योति'[5]रित्यादिश्रुतीनां च न वैयर्थ्यम्। विलक्षणरूपवत्त्वात्। यथा चक्षुरादिप्रकाशे विद्यमाने वैलक्षण्यादप्रकाशादिव्यवहारः॥१५॥ **ॐ आह च तन्मात्रम् ॐ** ॥ १६ ॥ वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्व-'मैकात्म्यप्रत्ययमारमि'[6]ति॥ 'आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषामि'ति चतुर्वेदशिखायाम्॥ १६॥ **ॐ दर्शयति चाथो अपि स्मर्यते ॐ** ॥ १७॥ दर्शयति चानन्दस्य रूपत्वं 'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाती'[7]ति॥

[1] ४-७ मा.उ.　[2] ५-८-८ बृ.उ　[3] ३-१-३ मुं उ.
[4] ८-१३-१ छां उ　[5] ३-१० नै उ.　[6] २-७ मा उ.
[7] २-२-८. मुं उ

'शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् । चिन्तयीत यतिर्नान्यं ज्ञानरूपाद्दने हरेरि'ति च मात्स्ये ॥ १७ ॥ अरूपाधिकरणम् ॥ ९ ॥

॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥१८॥

यस्मादेवं परमेश्वररूपाणां मिथो न कश्चिद्भेदोऽत एव सादृश्याज्जीवस्यापि तथा स्यादिति तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति ॥ 'रूपं रूपं प्रतिरूपो बभूव'[1] । 'बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले । एवमेवाऽऽत्मका लोके परात्मसदृशा मता' इत्यादि ॥ अत एव भिन्नत्वतदधीनत्वसादृश्यैरेव सूर्यकाद्युपमा, नोपाध्यधीनत्वादिना ॥ १८ ॥ उपमाधिकरणम् ॥ १० ॥

नित्यसिद्धत्वात्सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्तिज्ञानादिप्रयोजनमित्यतो ब्रवीति— ॥ ॐ अम्बुवद्ग्रहणात्तु न तथात्वम् ॐ ॥ १९ ॥ अम्बुवत्स्नेहेन । ग्रहणं ज्ञानम् । भक्तिं विना न तत्सादृश्यं सम्यगभिव्यज्यते ॥ 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामि'[2]ति हि श्रुतिः । महत्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते । तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकमि'ति पाद्मे ॥ १९ ॥ अम्बुवदधिकरणम् ॥ ११ ॥

॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ २० ॥ तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते । ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् । एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान्प्रति च सामञ्जस्यं भवति ॥ 'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः । ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुता' इति च ब्राह्मे ॥ २० ॥ कुतः ?—

[1] ४-५-१९. बृ.उ. [2] २-२३. कठ उ.

॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥ 'अथात आनन्दस्य मीमांसा भवती'[1]त्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् ॥ चशब्दात्स्मृतिः— 'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदन' इति ॥ २१ ॥ वृद्धिह्रासाधिकरणम् ॥ १२ ॥

सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वं स्वतः सिद्धेरित्यत आह—॥ ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ २२ ॥ उक्तं सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति । 'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी विभर्ती'[2]ति । चशब्दात्स्मृतिश्च । 'सृष्टिं च पालनं चैव संहारं नियमं तथा । एक एव करोतीशः सर्वस्य जगतो हरिरि'ति ब्रह्माण्डे ॥ २२ ॥ पालकत्वाधिकरणम्[3] ॥ १३ ॥

परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते—॥ ॐ तदव्यक्तमाह हि ॐ ॥२३॥ अव्यक्तमेव तद्ब्रह्म स्वतः । 'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् । यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाव्य(क्ष)यो भवेदि'ति हि कौण्ठरव्यश्रुतिः ॥२३॥ ॥ ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ॥२४॥ आराधनेऽप्यव्यक्तमेव । ज्ञानि(नां)प्रत्यक्षेणेतरेषामतिसूक्ष्मत्वलिङ्गादनुमानेन ॥ 'न तमाराधयित्वाऽपि कश्चिद्व्यक्तीकरिष्यति । नित्याव्यक्तो यतो देवः परमात्मा सनातन' इति ब्रह्मवैवर्ते ॥ २४ ॥ नित्याव्यक्तेन रूपेण तथैव तिष्ठति । व्यक्तं किञ्चिद्रूपं गृहीत्वा दृश्यते । यथाऽग्न्यादयस्तन्मात्रारूपेणादृश्या अपि स्थूलरूपेण दृश्यन्त एवमिति चेन्न ॥ ॐ प्रकाशवच्चावैशेष्यम् ॐ ॥ २५ ॥

[1] २-८. तै.उ. [2] १०-३१-८. ऋ.सं. [3] प्रकृत्यधिकरणम्. पा.

अग्न्यादिवत् स्थूलसूक्ष्मत्वविशेषाभावात् ॥ 'नासौ सूक्ष्मो न स्थूलः पर एव स भवति तस्मादाहुः परम' इतीति माण्डव्यश्रुतेः । 'स्थूलसूक्ष्मविशेषोऽत्र न कचित्परमेश्वरे । सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यत' इति च गारुडे ॥ 'अव्यक्तव्यक्तभावौ च न कचित्परमेश्वरे । सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दन' इति कौर्मे ॥ २५ ॥ तर्हि किं यत्नेनेत्यत आह—॥ ॐ **प्रकाशश्च कर्मण्यभ्यासात्** ॐ ॥ ॥ २६ ॥ विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात्प्रकाशश्च भवति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'[1] इति श्रुतेः ॥ २६ ॥ नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते—॥ ॐ **अतोऽनन्तेन तथा हि लिङ्गम्** ॐ ॥ २७ ॥ उभयत्र प्रमाणभावात्तत्प्रसादादेव प्रकाशो भवति । 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरि'[2]ति लिङ्गात् ॥ युज्यते च तस्यानन्तशक्तित्वात् । 'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः । तमृते परमात्मानं कः पश्येतामितं प्रभुमि'ति नारायणाध्यात्मे ॥२७॥ ॥ अव्यक्ताधिकरणम् ॥ १४ ॥

स्वरूपेणाऽनन्दादिना कथमानन्दित्वादिरित्यत्रोच्यते—॥ ॐ **उभयव्यपदेशात्त्वहिकुण्डलवत्** ॐ ॥ २८ ॥ 'आनन्दं ब्रह्मणो विद्वान्'[3] । 'अथैष एव परम आनन्द'[4] इत्युभयव्यपदेशादहिकुण्डलवदेव युज्यते । यथाऽहिः कुण्डली कुण्डलं च । तुशब्दात्केवलश्रुतिगम्यत्वं दर्शयति ॥ २८ ॥ ॐ **प्रकाशाश्रयवद्वा तेजस्त्वात्** ॐ ॥ २९ ॥ यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं

---

[1] ४-४-५. बृ.उ. [2] १-१०. श्वे.उ. [3] २-४. तै.उ.
[4] ६-३-३३. बृ.उ.

च, एवं वा दृष्टान्तः। तेजोरूपत्वाद्ब्रह्मणः ॥२९॥ ॐ पूर्ववद्वा ॐ ॥ ३० ॥ यथैक एव कालः पूर्वं इत्यवच्छेदकोऽवच्छेद्यश्च भवति ॥ अतिसूक्ष्मत्वापेक्षयैष दृष्टान्तः। स्थूलमतीनां च प्रदर्शनार्थमहिकुण्डलदृष्टान्तः ॥ 'प्रकाशवत्कालवद्वा यथाऽङ्गे शयनादिकम्। ब्रह्मणश्चैव मुक्तानामानन्दोऽभिन्न एव त्विति नारायणाध्यात्मे। 'आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत्। कालवद्वा यथा कालः स्वावच्छेदकतां व्रजेदि'ति पाद्मे ॥३०॥ ॐ प्रतिषेधाच्च ॐ ॥ ॥३१॥ 'एकमेवाद्वितीयम्'[1] 'नेह नानाऽस्ति किञ्चने'[2]ति भेदस्य॥३१॥ ॥ उभयव्यपदेशाधिकरणम्[3] ॥ १५ ॥

॥ ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ ३२ ॥ नचाऽनन्दादित्वाल्लोकानन्दादिवत्। 'एष सेतुर्विधृतिः'[4] 'य एष आनन्दः परस्य' 'एष नित्यो महिमा ब्रह्मणस्ये'[5]ति सेतुत्वं ह्युच्यते। 'यतो वाचो निवर्तन्ते'[6] इत्युन्मानत्वम्। 'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'[7]ति सम्बन्धः। 'अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च। नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयत' इति भेदः ॥ अतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकम् ॥ ३२ ॥ ॐ दर्शनात्तु ॐ ॥ ३३ ॥ दर्शनादेव चान्यानन्दादीनाम् ॥ 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षते तस्माद्ब्रह्मेत्याचक्षत' इति कौण्डिन्यश्रुतिः ॥ ३३ ॥ अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति—॥ ॐ बुद्ध्यर्थः पादवत् ॐ ॥ ३४ ॥ जीवेश्वर-

---

1 ६-२-१. छां.उ 2 २-४-११. कठ.उ. 3 अहिकुण्डलाधिकरणम्. पा. 4 ८-४-१. छां.उ. 5 ६-४-२३ बृ.उ. 6 २-४. तै.उ. 7 ६-३-३२ बृ.उ.

सम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथा पादशब्देन व्यपदिश्यते 'पादोऽस्य विश्वा भूतानी'[1]ति तथा। 'अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते। ज्ञापनार्थाय लोकस्य यथा राजेव देवराडि'ति (च) पाद्मे ॥ ३४ ॥ परानन्दा(परमता)धिकरणम् ॥ १६ ॥

परानन्दमात्रत्वे कथं ब्रह्माद्यानन्दानां विशेष इत्यत उच्यते ॥

॥ ॐ **स्थानविशेषात्प्रकाशादिवत्** ॐ ॥ ३५ ॥ यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात्प्रतिबिम्बविशेष एवमानन्दादेरपि ॥ 'ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च। प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषत' इति वाराहे ॥३५॥ ॐ **उपपत्तेश्च** ॐ ॥ ॥ ३६ ॥ 'ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः। ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रते'ति पाद्मे ॥ ३६ ॥ स्थानविशेषाधिकरणम् ॥ १७ ॥

ध्यानकाले यच्चित्ते प्रदृश्यते तदेव हि ब्रह्मरूपम्। अतः कथमन्यक्तेत्यत आह—॥ ॐ **तथाऽन्यत्प्रतिषेधात्** ॐ ॥ ॥ ३७ ॥ यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासाकृतादपि। 'यन्मनसा न मनुते येनाऽहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत'[2] इति प्रतिषेधात् ॥ 'पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम्। ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ॥ तदुपासनं च भवति प्रतिमोपासनं यथा। दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम्। उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादत' इति ब्रह्मतर्के ॥ ३७ ॥ ॥ प्रतिषेधाधिकरणम्[3] ॥ १८ ॥

देशकालान्तरेऽन्यतोऽपि सृष्ट्यादिर्युक्तेत्यतो ब्रूते—॥ ॐ **अनेन सर्वगतत्वमायामयशब्दादिभ्यः** ॐ ॥ ३८ ॥

[1] १०-९०-३. ऋ.सं. [2] १-६. के.उ. [3] तथान्यत्वाधिकरणम्. पा.

सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते ॥ 'एष सर्व एष सर्वगत एष सर्वेश्वर एषोऽचिन्त्य एष परम' इति माल्लवेयश्रुतिः ॥ 'सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु । स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः । अतो मायामयं विष्णुं प्रवदन्ति सनातनमि'ति चतुर्वेदशिखायाम् ॥ आदिशब्दादन्यत्र प्रमाणाभावाच्च ॥ ३८ ॥ सर्वगतत्वाधिकरणम् ॥ १९ ॥

कर्मापेक्षत्वात्फलदानस्य तदेव ददातीति न वाच्यम् । कुतः ?— ॥ ॐ **फलमत उपपत्तेः** ॐ ॥ ३९ ॥ अत एवेश्वरात्फलं भवति । नह्यचेतनस्य स्वतः प्रवृत्तिर्युज्यते ॥ ३९ ॥ ॥ ॐ **श्रुतत्वाच्च** ॐ ॥ ४० ॥ 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणमि'[1]ति ॥ ४० ॥ ॐ **धर्मं जैमिनिरत एव** ॐ ॥ ४१ ॥ यत फलं तदेव कर्मेश्वराद्भवति । 'एष ह्येव साधुकर्म कारयती'[2]ति श्रुतेरिति जैमिनिः ॥ ४१ ॥ ॐ **पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॐ ॥ ४२ ॥ परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म परप्रवर्तकम् । पर एव कर्मणः प्रवर्तकः । 'पुण्येन पुण्यं लोकं नयति पापेन पापमि'[3]ति हेतुव्यपदेशात् । 'द्रव्यं कर्म च कालश्चे'ति च ॥ ४२ ॥ ॥ फलदानाधिकरणम् ॥ २० ॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

उपासनाऽस्मिन्पाद उच्यते । सर्वपरिज्ञानं प्रथमत उच्यते— ॥ ॐ **सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॐ ॥ १ ॥

---

1 ५-९-२७ बृउ　2 ३८ कौउ　3 ३२ प्रउ

अन्तो निर्णयः। 'उभयोरपि दृष्टोऽन्त'[1] इति वचनात्॥ सर्ववेदविनिर्णयोत्पाद्यज्ञानं ब्रह्म। 'आत्मेत्येवोपासीते'[2]त्यादिविधीना तदुक्तयुक्तीनां चाविशिष्टत्वात्॥ १॥ ॐ **भेदान्नेति चेदेकस्यामपि** ॐ॥ २॥ 'विज्ञानमानन्दं ब्रह्म'[3]। 'सत्यं ज्ञानमनन्तं ब्रह्मे'[4]त्यादि प्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वशाखा इति चेन्न। एकस्यामपि शाखायां 'आत्मेत्येवोपासीत'[5] 'कं ब्रह्म खं ब्रह्मे'[6]त्यादिभेददर्शनात्॥ २॥ ॐ **स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च** ॐ॥ ३॥ 'स्वाध्यायोऽध्येतव्य'[7] इति सामान्यविधेः। हिशब्दा'द्वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मने'ति स्मृतेः॥ 'सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः। आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः॥ सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः। शाखाभेदं कर्मभेदं व्यासस्तस्मादचीकॢप दि'ति समाचारे सर्वेषामधिकाराच्च॥ ३॥ ॐ **सलिलवच्च तन्नियमः** ॐ॥ ४॥ यथा सर्वं सलिलं समुद्रं गच्छत्येवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः। आग्नेये च—'यथा नदीनां सलिलं शक्ये सागरगं भवेत्। एवं शक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तय' इति॥४॥ ॐ **दर्शयति च** ॐ॥५॥ 'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्चेत्। तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुरि'ति चतुर्वेदशिखायाम्॥ 'सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान्। सपञ्चरात्रान्विज्ञाय विष्णुर्ज्ञेयो न चान्यथे'ति ब्रह्मतर्के॥ ५॥ सर्ववेदा(न्तप्रत्यया)धिकरणम्॥ १॥

[1] ७ १६ भगी [2] ३ ४ ७ बृउ [3] ५ ९ २८ बृउ [4] २ १ तैउ
[5] ३ ४ ७ बृउ [6] ४ १० ५ छाउ [7] २ १५ तैआ

सर्ववेदोक्तो नोपास्योऽशक्यत्वादित्यत आह— ॥ ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥६॥ सर्ववेदोक्तान्गुणान्दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः ॥ 'उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः । सपञ्चरात्रैः सपुराणैश्च देवः सर्वगुणैस्तत्र तत्र प्रतीतैरिति (हि) भाल्लवेयश्रुतिः ॥ आग्नेये च— विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि । यथा कार्याणि सर्वश्च मर्माण्येवाविशेषतः ॥ एवं सर्वगुणान्सर्वदोषाभावांश्च यत्नतः । योजयित्वैव भगवानुपास्यो नान्यथा क्वचिदि'ति ॥ समानविषये चोपसंहारः । न तु 'सोऽरोदीदि'[1]त्यादीनाम् । 'गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन । गुणैरपि नतूपास्यो ये पूर्णत्वविरोधिन' इति बृहत्तन्त्रे ॥ ६ ॥ ॐ अन्यथात्वं (च) शब्दादिति चेन्नाविशेषात् ॐ ॥ ७ ॥ 'आत्मेत्येवोपासीते'[2]तिशब्दादुपसंहारस्यान्यथात्वमिति चेन्न । एते गुणा नोपास्या इति विशेषवचनाभावात् ॥ 'सर्वगुणैरेक एवेशिताऽस्मादुपासितव्यो न तु दोषैः कदाचिदि'ति विशेषवचनाच्च । आत्मेत्यवधारणमनात्मत्वनिवृत्त्यर्थम् ॥ ७ ॥

॥ ॐ नवा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ॥८॥ प्रकरणभेदान्न वोपसंहारः कार्यः । परोवरीयस्त्वादिषु तावदेव ह्युक्तम् ॥८॥ ॐ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ॥९॥ सर्वविद्या उक्त्वा 'सोऽहं नामविदेवास्मि नाऽऽत्मविदि'[3]ति वचनात्सर्वस्य ब्रह्मनामत्वात्तदुपसंहारः कार्यः । 'नामत्वात्सर्वविद्यानां गुणानामुपसंहृतिः । कर्तव्या सर्वेषां नाम चाप्येवं विचारणे'ति च ब्रह्मतर्के इति चेत्सत्यम् । उक्तो ह्युपसंहारः । तत्प्रमाणमप्यस्त्येव । 'नाम

---

[1] १-५-१. तै सं　[2] १-४-७. बृ उ　[3] ७-१-३ छां उ

वा एता ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्य' इति कौण्डिन्यश्रुतौ ॥ ९ ॥ उपसंहाराधिकरणम् ॥ २ ॥

॥ ॐ प्राप्तेश्च समञ्जसम् ॐ ॥ १० ॥ युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् । 'गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः । अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु'इति भविष्यत्पर्वणि ॥ १० ॥ प्राप्त्यधिकरणम् ॥ ३ ॥

॥ ॐ सर्वाभेदादन्यत्रेमे ॐ ॥ ११ ॥ सर्वगुणयुक्तत्वेनोपासनादन्यत्रैव फले ब्रह्मादयो भवन्ति । 'सम्पूर्णोपासनाद्ब्रह्मा सम्पूर्णानन्दभाग्भवेत् । इतरे तु यथायोगं सम्यङ्मुक्तौ भवन्ति ही'ति पाद्मे ॥ ११ ॥ सर्वाभेदाधिकरणम् ॥ ४ ॥

सर्वेषां मुमुक्षूणा कियन्नियमेनोपास्यमित्याह — ॥ ॐ आनन्दादयः प्रधानस्य ॐ ॥ १२ ॥ प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्युपास्य एव ॥ 'सच्चिदानन्द आत्मेति ब्रह्मोपासा निनिश्चिता । सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिते'ति ब्रह्मतर्के ॥ १२ ॥ आनन्दाद्यधिकरणम् ॥ ५ ॥

॥ ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ॥ १३ ॥ फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासाप्राप्तिः ॥ 'नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः । विरिञ्चस्यैव यन्मुक्तानानन्दस्य सुपूर्णते'ति (हि) याराहे ॥ १३ ॥ प्रियशिरस्त्वाधिकरणम् ॥ ६ ॥

॥ ॐ इतरे त्वर्थसामान्यात् ॐ ॥ १४ ॥ इतरे गुणाः फलसाम्यापेक्षयोपसंहर्तव्याः ॥१४॥ फलसाम्याधिकरणम् ॥७॥

उपसंहारानुपसंहारप्रमाणमाह — ॥ ॐ आध्यानाय प्रयोजनाभावात् ॐ ॥ १५ ॥ आध्यानार्थं हि सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात् ॥ 'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा । ज्ञातव्याश्चैव ध्यातव्या गुणास्सर्वेऽप्यतो हरेः ॥ नान्य-त्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि । श्रवणाचाथ पाठाद्वा विद्याभिः किञ्चिदिष्यत' इति परमसंहितायाम् ॥ 'गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः । नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ॥ ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलम् । मुख्यं भवेन्न-चान्येन फलं मुख्यं क्वचिद्भवेदि'ति बृहत्तन्त्रे ॥१५॥ ॐ आत्म-शब्दाच्च ॐ ॥ १६ ॥ 'आत्मेत्येवोपासीते'[1]त्यनुपसंहार-प्रमाणम् ॥ १६ ॥ आध्यानाधिकरणम् ॥ ८ ॥

॥ ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ १७ ॥

न 'चानन्दादयः प्रधानस्ये'त्युक्तिविरोधः । यतः 'सत्यं ज्ञानमनन्तं ब्रह्म'[2] 'विज्ञानमानन्दं ब्रह्मे'[3]तिवदेवाऽऽत्मशब्दगृहीतिः । 'अत्र ह्येते सर्व एकं भवन्ती'[4]त्युत्तरात् ॥ 'आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते । नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वर' इति (हि) बृहत्तन्त्रे ॥ १७ ॥ आत्मगृहीत्यधिकरणम् ॥ ९ ॥

॥ ॐ अन्वयादिति चेत्स्यादवधारणात् ॐ ॥

॥ १८ ॥ सर्वगुणानामन्वय आत्मशब्दे भवति । 'आप्तव्याप्ते-रात्मशब्दः परमस्य प्रयुज्यत' इति वचनादिति चेत्सत्यम् । स्याचैवम् । आत्मेत्येवेत्यवधारणात् । अन्यथा सर्वोपसंहारवचनविरोधात् ॥१८॥ ॥ अन्वयाधिकरणम् ॥ १० ॥

[1] ३-४-७. बृ उ. [2] २-१. त.उ. [3] ५-९-२८. बृ.उ. [4] ३-४-७. बृ.उ.

॥ ॐ **कार्याख्यानादपूर्वम् ॐ** ॥१९॥ 'अलौकिका-स्तस्य गुणा ह्युपास्या अलौकिकं मुक्तिकार्यं यतोऽस्ये'ति कार्याख्याना-दन्यत्रादृष्टा एव गुणा उपास्याः ॥१९॥ कार्याख्यानाधिकरणम् ॥११॥

॥ ॐ **समान एवञ्चाभेदात् ॐ** ॥ २० ॥ अपूर्वत्वेऽपि समानानामेवोपसंहारः । न तु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेन । नित्यविक्रान्त्यादिष्वन्तर्भावात् ॥ २० ॥ ॥ ॐ **सम्बन्धादेवमन्यत्रापि ॐ** ॥ २१ ॥ परमात्मसम्बन्धित्वेन नित्यत्वान् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यते ॥ 'गुणास्त्रैविक्रमाद्याश्च (तु) संहर्तव्या न संशयः । गिरिशस्यैव नान्येषां स हि सर्वगुणाधिक' इति (हि) बृहत्तन्त्रे ॥ २१ ॥ समानाधिकरणम् ॥ १२ ॥

॥ ॐ **न वा विशेषात् ॐ** ॥ २२ ॥ न वाऽऽत्मशब्देन सर्वगुणगृहीतिः । अधिकारिविशेषात् ॥२२॥ ॐ **दर्शयति च ॐ** ॥ २३ ॥ 'सर्वान्गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां नचैवे'ति (च) भाल्लवेयश्रुतिः ॥ २३ ॥ विशेषाधिकरणम् ॥ १३ ॥

॥ ॐ **सम्भृतिद्युव्याप्त्यपि चातः ॐ** ॥ २४ ॥ सम्भृतिद्युव्याप्ती अपि देवादीनामुपसंहर्तव्ये नान्येषाम् । अत एव योग्यताविशेषात् ॥ 'देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः । आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेदि'ति (च) ब्रह्मतर्के ॥ २४ ॥ ॥ सम्भृत्यधिकरणम् ॥ १४ ॥

यस्यां विद्यायां महागुणा उच्यन्ते मोचमानामितराऽन्येषामिति चेन्न ॥ ॐ **पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ** ॥

॥ २५ ॥ पुरुषसूक्तोक्तविद्यायामपि केषाञ्चिद्गुणानामनाम्नानात् ॥ 'सर्वतः पौरुषे सूक्ते गुणाः विष्णोरुदीरिताः । तत्रापि नैव सर्वेऽपि तस्मात्कार्योपसंहृतिरि'ति ब्रह्मतर्के ॥ २५ ॥ पुरुषविद्याधिकरणम् ॥ १५ ॥

॥ ॐ वेधाद्यर्थभेदात् ॐ ॥ २६ ॥ 'भिन्धि विद्धि शृणीहीति फलभेदेन सर्वशः । यत्यादीनां तेष्वयोगान्नाधिकार्यैकता भवेत् । अयोग्योपासनादीयुरनर्थं चार्थनाशनमि'ति बृहत्तन्त्रे ॥२६॥ ॥ वेधाद्यधिकरणम् ॥ १६ ॥

मुक्तस्योपासना कर्तव्या न वेत्यतो ब्रवीति—॥ ॐ हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॐ ॥ २७ ॥ नियतस्वाध्यायानन्तरं स्वेच्छया कुशाग्रहणस्तुत्युपगानवदेव मोक्ष उपासनादिः । 'ब्रह्मविदाप्नोति परमि'[1]ति मोक्षवाक्यशेषत्वादितरेषाम् ॥ तच्चोक्तम्—'एतत्सामगायन्नास्त'[2] इत्यादि । ब्रह्मतर्के च 'मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः । नियमानन्तरं विप्राः कुशाद्यैरप्यधीयत' इति ॥ 'कृष्णो मुक्तैरिज्यते वीतमोहैरि'ति च भारते ॥ २७ ॥ ॐ साम्पराये तर्तव्याभावात्तथाह्यन्ये ॐ ॥२८॥ स्वेच्छयै[2]त्यङ्गीकर्तव्यम् । मुक्तस्य तीर्णत्वात् । 'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवती'[3]ति ह्यन्ये पठन्ति । वायुप्रोक्ते च—'स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परमात्मनः । ब्रह्मलोकं गतास्सर्वे ब्रह्मणा च परं गताः । तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परमि'ति ॥ २८ ॥ मुक्तोपासनाधिकरणम्[4] ॥१७॥

---

[1] ३-१० तै.उ. [2] 'एव' इत्यधिकः पाठः [3] ६-३-२२. बृ.उ.
[4] हान्यधिकरणम्- पा.

कर्माणि कुर्वन्ति न वेत्यत आह—॥ ॐ छन्दत उभयाविरोधात् ॐ ॥ २९ ॥ स्वेच्छया कुर्वन्ति न वा । बन्धप्रत्यवाययोरभावात् ॥ २९ ॥ ॐ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ ॥ ३० ॥ बन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वम् । अन्यथा मोक्षत्वमेव न स्यात् ॥ 'कदाचित्कर्म कुर्वन्ति कदाचिन्नैव कुर्वते । नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम् ॥ तीर्णतर्तव्यभागा ये प्राप्तानन्दाः परात्मनः । प्रत्यवायस्य बन्धस्याप्यभावात्स्वेच्छया भवेदि'ति हि ब्रह्माण्डे ॥ ३० ॥ ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ॥ ३१ ॥ उपपन्नश्चैवम्भावः । प्राप्तत्वात्तल्लक्षणस्य फलस्य । यथा लोके विध्यर्थत्वेन विष्णुक्रमणादिकं कृत्वा समाप्तकर्मेच्छया करोति न करोति च ॥३१॥ ॥ छन्दाधिकरणम् ॥ १८ ॥

॥ ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥ ३२ ॥ प्राप्तज्ञानानामपि केषाञ्चिन्मुक्तिप्राप्तिः केषाञ्चिन्न, यथोपसंहारनियम इति न मन्तव्यम् ॥ 'सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वमनुष्यै'रित्युपसंहारविरोधादन्यत्राविरोधात् । 'न कश्चिद्ब्रह्मविस्मृतिमनुभवति मुक्तो ह्येव भवति तस्मादाहुः स्मृतिर्हेती'ति कौण्डिन्यश्रुतेश्च । यथा केषाञ्चिन्मोक्ष एवमन्येषामित्यनुमानाच्च ॥ ३२ ॥ अनियमाधिकरणम् ॥ १९ ॥

॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ ३३ ॥ यथा यथाऽधिकारो निश्चिप्यते एवं मुक्तावानन्दो निश्चिप्यते । 'मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणामृषिभ्यो

देवानां देवेभ्य इन्द्रस्य इन्द्राद्रुद्रस्य रुद्राद्ब्रह्मणः एष ह्येव शतानन्द' इति चतुर्वेदशिखायाम् ॥ अध्यात्मे च—'ज्ञानं चोपासनं चैव मुक्तावानन्द एव च । यथाधिकारं देवानां भवन्त्येवोत्तरोत्तरमि'ति ॥३३॥

॥ ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ॥ ३४ ॥ न चाममत्वेन विरोधो भवति । ब्रह्मधीत्वा[1]दोषाभावसाम्यादुत्तमेभ्योऽन्येषां भावाच्च । औपसदवच्छिष्यवत् । उक्तं च तुरश्रुतौ—'नानाविधा जीवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः । दोषाभावाद्गुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां विमुक्तेरि'ति ॥३४॥ यावदधिकाराधिकरणम् ॥२०॥

॥ ॐ इयदामननात् ॐ ॥ ३५ ॥ नामाद्यारभ्य प्राणान्तमुत्तरोत्तरमुत्तमत्वमुक्तम् । न प्राणात्किञ्चिदूर्ध्व उक्तम् । तथाऽपि पूर्ववत्स्यादि(दपी)ति न वाच्यम् । 'प्राणो वाव सर्वेभ्यो भूयान्नहि प्राणाद्भूयान्प्राणो ह्येव भूयांस्तस्माद्भूयान्नामे'ति कौण्ठरव्यश्रुतेः ॥ ३५ ॥ ॐ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॐ ॥ ३६ ॥ यथा भूतग्राम एकस्मादेक उत्तमोऽस्त्येव, एवं प्राणादपि परमात्मानमन्तरा विद्यत इति चेन्न । प्राणादुत्तमाभावे प्रमाणमुक्तम् । अन्यत्रोत्तमाभावे न प्रमाणम् । दृश्यते चान्यत्रोत्तमत्वम् ॥ ३६ ॥ ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॐ ॥ ३७ ॥ प्राणस्य सर्वोत्तमत्वे परमात्मना भेदानुपपत्तिरिति चेन्न । श्रुत्युपदिष्टत्वदुपपत्तेः । अन्येभ्यः प्राणस्योत्तमत्वं तस्मात्परमात्मनो ह्युपदिष्टम् ॥ ३७ ॥ इयदामननाधिकरणम् ॥ २१ ॥

[1] ब्रह्माधीनत्वात् पा-

नेति चेन्न– ॥ **ॐ व्यतिहारो विंशिपन्ति हीतरवत् ॐ** ॥ ३८ ॥ उक्तं प्राणात्परमात्मन उत्तमत्वं पूर्वोक्ताध्याहारेण 'एष तु वा अतिवदती'[1]ति विंशिपन्ति हि । यथेतरेषु विशेषणम् ॥ 'उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् । तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेरि'ति (च) बृहत्तन्त्रे ॥ ३८ ॥ व्यतिहाराधिकरणम् ॥ २२ ॥

कृतिर्निष्ठा विज्ञानमित्यादीनां भेदाङ्गत्व उत्तमा इति चेन्न— ॥ **ॐ सैव हि सत्यादयः ॐ** ॥ ३९ ॥ सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः ॥ ब्रह्मतर्के च—'नामादिप्राणपर्यान्ताद्योहि सत्यादिरूपवान् । तस्मै नमो भगवते विष्णवे सर्वजिष्णव' इति ॥ 'सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिताः । तस्मै नमो भगवते यस्मादेव विमुच्यत' इति चाध्यात्मे ॥ ३९ ॥ सत्याद्यधिकरणम् ॥ २३ ॥

प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्वपाठ इत्यत्रोच्यते— ॥ **ॐ कामादितरत्र तत्र चाऽयतनादिभ्यः ॐ** ॥ ४० ॥ स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्रावतारान्करोतीश्वरेच्छानुसारेण । 'सर्वायतना सर्वकाला सर्वेच्छा न बद्धा बन्धिका सैषा प्रकृतिरविकृतिरि'ति वत्सश्रुतेः ॥ 'नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च । उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ॥ 'श्रुतौ तथा जीवपरावुच्येते किञ्चनेतरत् । नोच्यते च तदा तत्त्वद्वयं च समुदाहृतमि'ति ब्रह्मतर्के ॥४०॥ **ॐ आदरादलोपः ॐ** ॥ ॥ ४१ ॥ अबद्धत्वेऽपि भक्तिविशेषादेवोपासनाद्यलोपस्तस्या भवति ॥

[1] ७-१६. छा.उ.

'यथा श्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा। उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेदिति बृहत्तन्त्रे ॥ ४१ ॥ **ॐ उपस्थितेऽतस्तद्वचनात् ॐ ॥ ४२ ॥** अनादिकाले भगवत्सम्बन्धित्वादुच्यते च नित्यमुक्तत्वं तस्याः। 'द्वावेतावनादिनित्यावनादियुक्तौ नित्यमुक्तावनादिकृतौ नित्यकृतौ योऽयं परमो या च प्रकृती रमते ह्यस्यां परमो रमते ह्यस्मिन्प्रकृतिः स्वस्मिन्हि रमते परमो न त्वस्मिन्प्रकृतिरत एनमाहुः परम इती'ति गौपवनश्रुतिवचनात् ॥४२॥

॥ कामाधिकरणम् ॥ २४ ॥

दर्शनार्थं ह्युपासनम्। तच्च श्रवणादेरेव भवति। अतः किमर्थमित्यतोऽन्यते ॥ **ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॐ ॥ ४३ ॥** तत्त्वनिश्चयो यदार्थनियमश्च ब्रह्मदृष्टेः पृथगेव। हिशब्देन 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'[1] इति श्रुतिं सूचयति। श्रवणादिफलं चाज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिः। ब्रह्मतर्के च—'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ। संशयं च पराणुद्य लभते ब्रह्मदर्शनमि'ति ॥४३॥ निर्धारणाधिकरणम् ॥२५॥

॥ **ॐ प्रदानवदेव हि तदुक्तम् ॐ ॥४४॥** न च श्रवणादिमात्रेण ब्रह्मदृष्टिर्भवति, किन्तु सेवितिर्दत्तव्येन। यथा गुरुदत्तं तदेव भवति। 'आचार्यवान्पुरुषो वेदे'[2]ति ह्युक्तम् ॥ ४४ ॥

॥ प्रदानाधिकरणम् ॥ २६ ॥

गुरुप्रसाद॰ स्वप्रयत्नो वा बलवानिति निगद्यते—॥ **ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥ ४५ ॥** रूपमादिभ्यो विद्या ब्रह्मणाऽपि सत्यकामेन 'भगवांस्त्वेव मे कामं ब्रूयात्'[3]

1 बृ॰ ४-५-६ 2 छा॰ ६-१४-२ 3 छा॰ ४-९-३

'श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्धेव विद्या विदिता साधिष्ठं प्रापयती'[1]ति वचनात्, 'अत्र ह न किञ्चन वीयाये'त्यनुज्ञानादुपकोसल-वचनाच्च लिङ्गभूयस्त्वाद्गुरुप्रसाद एव बलवान्। तर्हि तावताऽलमिति न मन्तव्यम्। 'श्रोतव्यो मन्तव्य'[2] इत्यादेस्तदपि कर्तव्यम्॥ वाराहे च—'गुरुप्रसादो बलवान्न तस्माद्बलवत्तरम्। तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धय' इति॥ ४५॥ गुरुप्रसादाधि-करणम्[3] ॥ २७॥

॥ ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ॥ ४६॥ न च पूर्वप्राप्त एव गुरुरिति नियमः। समप्रानुग्रहं चेत्पश्चात्तनः करोति स्वयमेव तदा विकल्पः स्यात्। मानसक्रियावत्, यथोभयोर्ध्यानयोः समयोः। 'पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि। गृह्णीयादविचारेण विकल्पः समयोर्भवेत्॥ समग्रानुग्रहाभावात्सत्यकामः स्वकं गुरुम्। ऋषभाद्यनुज्ञया चैव आप तस्माद्धि युज्यत' इति बृहत्तन्त्रे॥ 'समग्रानुग्रहं कश्चित्स्वयमेव समो यदि। कुर्यात्पुनश्च गृह्णीयादनिरोधेन कामतः॥ ध्यानयोः समयो-र्यद्वद्विकल्पः कामतो भवेत्। एवं गुरोर्द्वितीयस्य विकल्पो ग्रहणेऽपि चे'ति महासंहितायाम्॥ ४६॥ ॐ अतिदेशाच्च ॐ॥४७॥ 'ब्रह्मोपास्स्व ब्रह्मोपचरस्व तच्छृणुहि तत्त्वामवतु। यथा ब्रह्मोपचरे-र्यथा मामुपचरेर्ये चान्येऽस्मद्विधाः श्रेयसश्च तानुपास्स्व तानुपचरस्व तेभ्यः शृणुहि ते त्वामवन्त्वि'ति पौष्यायणश्रुतावतिदेशाच्च॥ ४७॥ ॥ पूर्वविकल्पाधिकरणम्॥ २८॥

न च 'कर्मणैव हि संसिद्धिमास्थिता जनकादय'[4] इत्यादिनाऽन्य-न्मोक्षसाधनम्—॥ ॐ विद्यैव तु निर्धारणात् ॐ॥ ४८॥

[1] ४ ९-३ छां उ [2] ४ ४ ५ बृ उ [3] लिङ्गभूयस्त्वाधिकरणम् पा
[4] ३ २० भ गी

'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाये''ति निर्धारणाद्विद्ययैव मोक्षः ॥ ४८ ॥ **ॐ दर्शनाच्च ॐ ॥४९॥** न केवलविद्यया किन्त्वपरोक्षज्ञानेनैव च । 'सर्वान्परो माययाऽयं सिनीते दृष्टेन तं मुच्यते नापरेणे'ति कौशिकश्रुतेः ॥ ४९ ॥ ॥ विद्याधिकरणम् ॥ २९ ॥

**॥ ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ॥५०॥** सावधारणा बलवती श्रुतिः । 'इन्द्रोऽश्वमेधांश्शतमिष्ट्वाऽपि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः । न कर्मभिर्न धनैर्नैव चान्यैः । पश्येत्सुख तेन तत्त्वं ब्रवीही'ति बलवल्लिङ्गम् ॥ 'नास्त्यकृतः कृतेने'[2]त्युपपत्तिश्च । 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन' इति युक्तिमद्भगवद्वचनम् ॥ अतो न प्रमाणान्तरबाधः । 'कर्मणैवे'[3]त्ययोगव्यवच्छेदः ॥५०॥ अबाधाधिकरणम्[4] ॥ ३० ॥

**॥ ॐ अनुबन्धादिभ्यश्च ॐ ॥ ५१ ॥** न केवलं श्रवणादिभिर्गुरुप्रसादेन च ब्रह्मदर्शनम् । किन्तु भक्त्यादिभिश्च ॥ 'सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः । यद्गुरुः सुप्रसन्नः सन्दद्याज्ज्ञान्यथा भवेत् ॥ तथाऽप्यनादिसंसिद्धो भक्त्यादिगुणपूगतः । लमेद्गुरुप्रसादं च तस्मादेव च तद्भवेदि'ति ॥ 'भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् । दयाच्छमदमादि च तेन चैते गुणाः पुनः । तैस्सर्वदर्शनं विष्णोः श्रवणादिकृतं भवेदि'ति च नारायणतन्त्रे ॥५१॥ ॥ अनुबन्धाद्यधिकरणम् ॥ ३१ ॥

**॥ ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥ ॥ ५२ ॥** उपासनाभेदव(च्च)दर्शनभेदः । तथोक्तं कमठश्रुतौ—

---

[1] ३-८ श्वे उ [2] १ २ १२ मु उ [3] ३ २० भ गी [4] श्रुत्यधिकरणम् पा

'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टय इति । देवा वाव सर्वदृष्टयस्तेषु चोत्तरोत्तरमाब्रह्मणोऽन्येषु (तु) यथायोगं यथा ह्याचार्या आचक्षत' इति ॥ अध्यात्मे च—'दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा । दर्शनेनाऽन्तरेणान्ये देवास्सर्वत्र दर्शनात् । तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गत' इति ॥ ५२ ॥ दर्शनभेदाधिकरणम्[1] ॥ ३२ ॥

॥ ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ॥५३॥ न सामान्यदर्शनमात्रेण मुक्तिः । यथा मृत्युमात्रात् । न हि लोकापत्तिमात्रं मुक्तिः ॥ 'सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादि'ति हि नारायणतन्त्रे ॥ 'मुच्यते नात्र संदेहो दृष्ट्या तु स्वात्मयोग्यये'ति च ॥ 'दर्शनेनाऽत्मयोग्येन मुक्तिर्नान्येन केनचिदि'ति चाध्यात्मे ॥ ५३ ॥ न सामान्याधिकरणम् ॥ ३३ ॥

'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी'ति माठरश्रुतेर्न परमात्मना दर्शनमिति चेन्न । 'तस्यैष आत्मा विशते ब्रह्मधामे'[2]ति श्रुतेः । कथं तर्ह्येषा श्रुतिः—

॥ ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ ५४ ॥ परमात्मैवं(व) भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यते ॥ मायावैभवे च—'भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् । तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥ स्नेहानुबन्धो यस्तस्मिन्बहुमानपुरस्सरः । भक्तिरित्युच्यते सैव करणं परमी(मे)शितुरि'ति ॥ सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ॥५४॥ ॥ ताद्विध्याधिकरणम्[3] ॥ ३४ ॥

[1] प्रभान्तराधिकरणम्. पा. [2] ३-२-४ मुं.उ. [3] परेणाधिकरणम्. पा.

जीवांशानां पृथगुत्पत्तेर्नानादियोग्यताऽपेक्षेति न मन्तव्यम्। कुतः ?— ॥ ॐ एक आत्मनश्शरीरे भावात् ॐ ॥ ॥५५॥ अंशांशिनोरेकत्वमेव। अंशिकर्म(वि)निर्मितशरीर एवांशस्य भावात् ॥५५॥ ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ॥५६॥ ज्ञानादिभावे[1] विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव। तदुपासनादिभोगादंशस्य। परमसंहितायां च— 'अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा। पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणे'ति ॥ ५६ ॥ एकाधिकरणम् ॥ ३५ ॥

॥ ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ ५७ ॥ ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते। हिशब्दात्—'समत्वाद्वोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम्। उपसंहार्यमित्याहुर्वेदसिद्धान्तवेदिन' इति ब्रह्मतर्कवचनात् ॥ ५७ ॥ ॐ मन्त्रादिवद्वाऽविरोधः ॐ ॥५८॥ सर्वदेवतामन्त्रा यथाऽधीयन्त एवमविरोधो वा। 'उपासनाङ्गदेवानां परमाङ्गतया भवेत्। उपसंहृतिर्विशेषे तु फलानामन्यथा न तु ॥ पुरुषाणां विशेषाद्वा यथायोगं भविष्यती'ति बृहत्तन्त्रे ॥ ५८ ॥ ॥ अङ्गावबद्धाधिकरणम् ॥ ३६ ॥

॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ ५९ ॥ सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत्सर्वत्र सहभावात्[2] ॥ 'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते। तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्ट' इति च गौपवनश्रुतिः ॥ ५९ ॥ भूमाधिकरणम् ॥ ३७ ॥

---

1 भेदे. पा. 2 दीक्षाप्रायणीयोदयनीय सवनत्रयावभृथात्मकः क्रतुः इत्यधिकः पाठः क्वचित्।

॥ ॐ नाना शब्दादिभेदात् ॐ ॥६०॥ 'शब्दोऽनुमा तथैवाक्षो योग्यताभेदतस्सदा। ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥ अतः पूर्णत्वमीशस्य नानैवैषां प्रदश्यते। अतः फलस्य नानात्वं नानैवोपासनं(ना) यत' इति ब्रह्मतर्के। अतो भूमत्वमपि नानैवोपास्यते ॥६०॥ नाना(शब्दा)धिकरणम् ॥ ३८ ॥

॥ ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ ६१ ॥ स्वयोग्योपासनानन्तरं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवति विशिष्टफलापेक्षया ॥ 'मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम्। नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये। उपास्यते यथायोगं न वा फलविभेदत' इति (च) ब्रह्मतर्के ॥६१॥ विकल्पाधिकरणम् ॥ ३९ ॥

॥ ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ ६२ ॥ 'यस्य यस्य हि यः कामस्तस्य तस्य ह्युपासनम्। तादृशानां गुणानां च समाहारं प्रकल्पयेत् ॥ अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम्। तुष्ट्यर्थमीश्वरस्यैव नैवोपासा विदुष्यती'ति बृहत्तन्त्रे ॥ ६२ ॥ काम्याधिकरणम् ॥ ४० ॥

॥ ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ ६३ ॥ अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वं 'चक्षोः सूर्यो अजायत'[1] इत्यादि तथा भावना कर्तव्या ॥ ६३ ॥ ॐ शिष्टेश्च ॐ ॥६४॥ 'यस्मिन्यस्मिन्यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैवे'ति पौत्रायणश्रुतेः ॥ ६४ ॥ ॐ समाहारात् ॐ ॥ ६५ ॥ 'अङ्गैः परस्य हि देवा विसृष्टास्तत्तद्गुणान्परमे संहरेत। तांश्चापि तत्रैव

[1] १०.९०.१३. ऋ सं.

विचिन्त्य देवान्स्थानं मुमुक्षुः परमं व्रजेते'ति कापायणश्रुतौ समाहारवचनाच्च ॥ ६५ ॥ **ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥६६॥** 'साधारण्यात्सर्वगुणाः परस्य समाहार्यास्तत्त्ववदो मुमुक्षोरि'ति माण्डव्यश्रुतेश्च ॥ ६६ ॥ यथाश्रयभावाधिकरणम्[1] ॥ ४१ ॥

**॥ ॐ न वाऽतत्सहभावश्रुतेः ॐ ॥६७॥** न वाऽङ्गदेवतोपसंहारः कार्यः । उपसंहारस्य सहाश्रवणात् ॥ ६७ ॥ **॥ ॐ दर्शनाच्च ॐ ॥ ६८ ॥** 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किञ्चित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासत' इति कमठश्रुतौ॥६८॥ नवाधिकरणम् ॥४२॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

ज्ञानसामर्थ्यमस्मिन्पाद उच्यते ॥ **ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ॥ १ ॥** यद्दर्शनार्थमुपासनोक्ता तस्माद्दर्शनात्सर्वपुरुषार्थप्राप्तिरिति बादरायणो मन्यते । 'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम'[2] इति शब्दात् ॥१॥ **॥ ॐ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ ॥ २ ॥** अस्त्येव मोक्षसाधनत्वं ज्ञानस्य । स्वर्गादिषु तत्साधनकर्मशेषत्वेन ॥ 'स्वर्गं धनादेहतो वै गृहाच्च प्राप्स्यन्ति धीरा नत्वधीराः कुताश्चिदि'ति वदति जैमिनिः ॥२॥ **ॐ आचारदर्शनात् ॐ ॥ ॥३॥** ज्ञानिनामेव देवादीनामाचारदर्शनात् ॥३॥ **ॐ तच्छ्रुतेः ॐ ॥ ४ ॥** 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं

[1] अङ्गाधिकरणम्. पा.　[2] ३-१-१०. मुं-उ.

भवती''ति शेषत्वश्रुतेः ॥ ४ ॥ **ॐ समन्वारम्भणात् ॐ ॥** ॥ ५ ॥ 'कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः । भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यदि'ति माठरश्रुतेश्च । संशब्दः प्राधान्यं दर्शयति ॥५॥ **ॐ तद्वतो विधानात् ॐ** ॥ ६ ॥ 'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेते'ति कमठश्रुतौ ज्ञानवतोऽपि विधानात् ॥६॥ **ॐ नियमाच्च ॐ** ॥ ७ ॥ 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर'[2] इति ॥ ७ ॥ ॥ **ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ** ॥ ८ ॥ 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव कामाः सम्पद्यन्ते । अथापि यथा यथा कर्म कुरुते तथा तथाऽधिको भवती'ति कौण्ठरव्यश्रुतेः ॥ युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनाच्चेति बादरायण(स)मतम् ॥८॥ **ॐ तुल्यं तु दर्शनम् ॐ** ॥ ९ ॥ राजसूयादिकृतावकृतौ च सममेव तेषां विज्ञानम् । 'विज्ञातमेतत्सर्वेषां मुनीनां ब्रह्मदर्शनात् । स्मादेव मोक्षो नान्यस्मादिति तत्रापि चित्रता ॥ स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः । ज्ञानेनाऽधिक्यमित्याहुर्जैमिन्याद्यास्तु केचन ॥ अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते । इति केचिद्विदः प्राहुर्व्यासशिष्या इमेऽखिलाः ॥ यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम् । यथाऽऽकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा । प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु ॥ स्वयं तु भगवान्व्यासो व्याप्तज्ञानमहांशुमान् । अनन्ताकाशवत्पश्य-

[1] १-१-१०. छां.उ. [2] २. ई.उ.

न्खिलं पुरुषोत्तमः ॥ ज्ञानेनैवाऽप्यते सर्वं कर्मणा त्वधिकं भवेत् । इति प्राह महायोगी पुमर्थानां विनिर्णयमि'ति भविष्यत्पर्वणि । 'ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत् । चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति कर्मणी'ति ब्रह्मतर्के ॥९॥ पुरुषार्थाधिकरणम् ॥ १ ॥

सर्वेषां पुरुषार्थापेक्षित्वाज्ज्ञानाधिकारित्वेत्यत आह— ॥ ॐ **असार्वत्रिकी** ॐ ॥ १० ॥ न सर्वेषामधिकारः ॥ १० ॥ ॥ ॐ **विभागश्शतवत्** ॐ ॥ ११ ॥ 'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु । सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ॥ यथा तथैवासङ्ख्येयाः प्रजास्तासु क्रियाज्ञनः । ज्ञानाधिकारी सम्प्रोक्तो विष्णुपादैकसंश्रय' इति वचनात्सुखापेक्षासाम्येऽपि विभाग इष्यतेऽधिकारार्थम् ॥११॥ कस्याधिकारः ?— ॥ ॐ **अध्ययनमात्रवतः** ॐ ॥ १२ ॥ 'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते । गुरुभक्तिविहीनस्य शमादिरहितस्य च । न च वर्णावरस्यापि तस्मादध्ययनान्वितः । ब्रह्मज्ञाने तु वेदोक्तेऽप्य(ह्य)धिकारी सतां मत' इति ब्रह्मतर्के ॥ 'पठेद्वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देदि'ति कौषारवश्रुतिः ॥ १२ ॥ अधिकाराधिकरणम्[1] ॥ २ ॥

॥ ॐ **नाविशेषात्** ॐ ॥१३॥ न सामान्येनाधिकारो देवादीनाम् । 'अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् । तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरमि'ति कौण्डिन्यश्रुतिः ॥ १३ ॥ अधिकारविशेषाधिकरणम्[2] ॥ ३ ॥

'अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवे'[3]ति ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत

[1] असार्वत्रिकाधिकरणम्. पा. [2] अविशेषाधिकरणम्. पा.

[3] ५-५ १. बृ.उ.

आह—॥ ॐ **स्तुतयेनुमतिर्वा** ॐ ॥ १४ ॥ न विधिः। ज्ञानिनः स्तुतये अनुमतिमात्रं वा। युज्यते च ॥१४॥ ॐ **कामकारेण चैके** ॐ ॥ १५ ॥ 'कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमत्सृज्याथ परात्परमीयुरनारम्भणमि'[1]ति चैके पठन्ति ॥ ॥ १५ ॥ ॐ **उपमर्दं च** ॐ ॥ १६ ॥ 'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ती'ति च तुरश्रुतौ ॥ १६ ॥ ॐ **ऊर्ध्वरेतस्सु च शब्दे हि** ॐ ॥ १७ ॥ न तावता कामचाराणां ज्ञानेऽधिकारः। 'य इमं परमं गुह्यमूर्ध्वरेतस्सु मापयेत्। न तथा नियते भूयान्यं प्राप्यान्येऽपि भूयस' इति माठरश्रुतेः ॥ १७ ॥ ॐ **परामर्शं जैमिनिरचोदना चापवदति हि** ॐ ॥ १८ ॥ 'प्रातरुत्थायाथ सन्ध्यामुपासीत यत्सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवानमेजुहुयाद्वेदानावर्तयीत नान्यत्किञ्चिदाचरेन्न सुरां पिबेन्न पलाण्डुं भक्षयीत न भृशं वदेन्न निस्सरेदात्मनं सोमं पिबेद्धुतशेषेण वर्तयेदि'त्युक्ताचारपरामर्शेन निषिद्धवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते ॥ न च निषिद्धं कर्म कर्तव्यमेवेति चोदना ॥ 'ब्राह्मणो न हन्तव्यः' इत्याद्यपवादश्च ॥ १८ ॥ ॥ ॐ **अनुष्ठेयं बादरायणः साम्यश्रुतेः** ॐ ॥ १९ ॥ अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते। 'केन स्याद्येन स्याचेनेदृश एवे'[2]ति साम्यश्रुतेः ॥ 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न

---

[1] सामशाखा.
[2] ५-५ १. पृ उ

विधत' इति भगवद्वचनाच्च ॥ १९ ॥ ॐ **विधिर्वा धारणवत् ॐ ॥ २० ॥** 'केन स्याद्येन स्यादि'ति विधिर्वा । यथा वेद-धारणं त्रैवर्णिकानां विहितं नान्येषाम् । एवं स्वमतानुसारिणी प्रवृत्ति-र्ज्ञानिनां विहिता । न तत्राधर्मशङ्का कार्या । नान्येषामिति वा । 'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता । नाऽऽशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना । इतरेषां न विहिता स्वेच्छावृत्तिः कथञ्चने'ति हि ब्राह्मे ॥ २० ॥ ॐ **स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ ॥ २१ ॥** स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः । तैरपि सामान्यविधिस्वीकारादिति चेन्न । अपूर्वत्वात्—परवशत्वात् ॥ सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण एव हि ॥ विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ । परस्य ब्रह्मणो ह्येव सर्वविध्यति-दूरते'ति ब्रह्मतर्के ॥ २१ ॥ ॐ **भावशब्दाच्च ॐ ॥ २२ ॥** 'यथाविधानमपरे विधिभावि प्रजापतेः । ब्रह्मणः परमस्यैव सर्वविध्यति-दूरते'ति च तुरश्रुतौ ॥ २२ ॥ ॐ **पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ॥ २३ ॥** 'केन स्याद्येन स्यादि'त्यादयः स्थिरत्वनिवृत्त्यर्था इति चेन्न । 'त्रेधा हि ज्ञानिनो ह यान भवन्ति विधिनियता अनियताः स्वेच्छानियता इति । विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियत' इति गौपवनश्रुतौ विशेषित-त्वात् ॥२३॥ ॐ **तथाचैकवाक्योपबन्धात् ॐ ॥२४॥** एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां च सम्बन्धो भवति॥२४॥

॥ ॐ **अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ॥ २५ ॥**

अत एव ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा । ब्रह्मतर्के च—'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः । इन्धनाग्निहोत्रादिकं

विपरीतैर्विपर्ययः ॥ स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा । देवानामपि सर्वेषां विशेषादुत्तरोत्तरमि'ति ॥२५॥ **ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ॥ २६ ॥** सर्वधर्मापेक्षा च ज्ञानस्योत्पत्तौ । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'[1]ति श्रुतेः ॥ यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते न विनिष्पन्नगते-र्ग्रामादिप्राप्तौ ॥ २६ ॥ **ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ ॥ ॥ २७ ॥** यद्यपि ज्ञानेनैव मोक्षो नियतस्तथाऽपि ज्ञानी शम-दमाद्युपेतः स्यात् । 'आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यञ्छान्तो भवेद्दान्तो भवेदनुद्गलो भवेदाचार्यं परिचरेत्परिचरेदाचार्यमि'ति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः ॥ 'ब्राह्मीं वाव त उपनिषदमब्रूमेति तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामुपनिषदमेवं वेदे'[2]ति ज्ञानाङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ 'यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा । तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः । अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेदि'ति आग्नेये ॥ तुशब्दः पूर्णफलार्थत्वं सूचयति ॥ २७ ॥ **ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ॥ २८ ॥** 'यदि ह वा अप्येवंविन्निरिखिलं भक्षयीतैवमेव स भवती'ति सर्वान्नानुमतिः प्राणात्ययविषया । 'न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमि'[3]ति दर्शनात् ॥ २८ ॥ **ॐ अबाधाच्च ॐ ॥ २९ ॥** 'अन्याय्यचरणाभावे न हि ज्ञानस्य बाधनम् । अतो विद्वानपि न्याय्यं धर्मेनोत्कर्षसिद्धय' इति ब्रह्मतर्के ॥ २९ ॥

[1] ६-४-२२. बृ.उ. [2] ४-७, ९. के.उ. [3] १-१०-४ छां.उ.

॥ ॐ अपि स्मर्यते ॐ ॥३०॥ 'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः। एतादृशोऽपि नाऽऽचारं श्रौतं स्मार्तं परित्यजेदि'ति हरिवंशेषु ॥ ३० ॥ ॐ शब्दश्चातोऽकामकारे ॐ ॥ ॥ ३१ ॥ 'स य एतदेवं विदेवं मन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेते'ति कौण्डिन्यश्रुतौ ॥ अत इत्यल्पफलत्वं सूचयति । 'न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छये'ति पाद्मे ॥ ३१ ॥ ॐ विहितत्वाच्चाऽऽश्रमकर्मापि ॐ ॥ ॥ ३२ ॥ न केवलं निषिद्धाकरणेन पूर्यते। कर्तव्यं च वर्णाश्रमविहितं कर्म ॥ 'पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन्। यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयादि'ति कौषारवश्रुतौ विहितत्वाच्च ॥ अपि शब्दो वर्णधर्मसमुच्चयार्थः ॥३२॥ ॐ सहकारित्वेन च ॐ ॥ ॥ ३३ ॥ 'यथा राज्ञः सहकार्येव मन्त्री तथाऽप्यृते तं क्षितिपः कार्यमृच्छेत्। एवं ज्ञानं कर्म विनाऽपि कार्ये सहायभूतं न विचारः कुतश्चिदि'ति कमठश्रुतौ सहकारित्वोक्तेश्च ॥ 'ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु। आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा च वर्धते' इति (च) ब्रह्माण्डे ॥ 'सर्वदुःखनिवृत्तिश्च ज्ञानिनो निश्चितैव हि। उपासया कर्मभिश्च भक्त्या चाऽऽनन्दचित्रते'ति बृहत्तन्त्रे ॥ 'धर्मस्वरूपचित्रत्वाद्यो यो देवमनोगतः। स एव धर्मो विज्ञेयो न ह्येते लोकसम्मिता' इति च पाद्मे ॥३३॥ कामचाराधिकरणम्[1] ॥ ८ ॥

॥ ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥

॥ ३४ ॥ सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं प्राप्नुवन्ति नान्ये। 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघ-

[1] स्तुत्यधिकरणम्. पा.

त्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य'[1] इति श्रुत्याऽऽचार्योपदेशसाम्येऽपि विरोचनो विपरीतज्ञानमापेन्द्रः सम्यग्ज्ञानमित्युभयविवलिङ्गात् ॥ ३४ ॥ ॐ अनभिभवं च दर्शयति ॐ ॥ ३५ ॥ 'दैवीमेव सम्पचिं देवा अभिगच्छन्त्यासुरीमेव चासुरा नैतयोरभिभवः कदाचित्स्वभाव एव ह्यवतिष्ठत' इति स्वभावानभिभवं च दर्शयति ॥ ३५ ॥ ॐ अन्तरा चापि तु तद्दृष्टेः ॐ ॥ ३६ ॥ सम्यग्ज्ञानविपरीतज्ञानयोरन्तरा स्थितानामपि देवासुरभावयोर्दार्ढ्यदृष्टेः ॥ ३६ ॥ ॐ अपि स्मर्यते ॐ ॥ ३७ ॥ 'असुरा आसुरेणैव स्वभावेन च कर्मणा। ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ॥ देवा दैवस्वभावेन कर्मणा चाप्यसंशयम्। सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ॥ नानयोरन्यथाभावः कदाचित्क्वापि विद्यते। मानुषा मिश्रमतयो विमिश्रगतयोऽपि चे'ति स्कान्दे ॥३७॥ ॐ विशेषानुग्रहं च ॐ ॥३८॥ 'श्रुण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमति नेनीयमानः। एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यानि'[2]ति विशेषानुग्रहं च दर्शयति देवेषु परमेश्वरस्य ॥ 'असुरान्दमयन्विष्णुः स्वपदं च सुरान्नयन्। पुनः पुनर्मानुषांस्तु सृतावावर्तयत्यसावि'ति मत्रिप्यत्पर्वणि ॥३८॥ ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ ॥ ३९ ॥ देवभागादसुरभाग एव बहुलः। 'तस्मान्न जनतामियादि'[3]ति लिङ्गात् ॥ चशब्दा'त्ततः कनीयसा एव देवा ज्यायसा असुरा'[4] इति श्रुतेश्च ॥ 'असुरा बहुला यस्मात्तस्मान्न जनतामियादि'ति

[1] ८-७-३. छां.उ. [2] ६-४७-१६. ऋ.सं. [3] ३-३-१०. बृ.उ. [4] १-३-१. बृ.उ.

च भाव्ये ॥ ३९ ॥ **ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॐ ॥ ४० ॥** असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव। 'नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरात्मीयामेव जाति-मनुभवन्ती'ति नियमश्रुतेः ॥ 'नासुराणां दैवं रूपं न देवानामासुरं नचोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवती'त्य-तद्रूपत्वश्रुतेः॥ 'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्ये-तर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुरि'[1]ति देवासुराणां भावाभावश्रुतेश्च ॥ 'देवानां भूतिरित्येव मनो विष्णौ स्वभावतः। असुराणामभूतिस्त्वेनैतन्नेयमतोऽन्यथा ॥ देवाः शापाभि-भूतत्वात्प्रह्लादाद्या बभूविरे। अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेदि'ति चाध्यात्मे ॥ ४० ॥ उभयलिङ्गाधिकरणम् ॥ ५ ॥

**॥ ॐ न चाऽधिकारिकमपि पतनानुमानात्तद्-योगात् ॐ ॥ ४१ ॥** न च परमात्मैश्वर्यादिकमाकाङ्क्ष्यम्। ब्रह्मादीनामपि नाऽकाङ्क्ष्यं, किमु परस्येति सूचयितुमपिशब्दः । चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्यस्माद्वान्तरसूचकः। अयोग्यमारोढुं प्रयतन् प्रपतन्हि दृश्यते ॥ एवमयोग्यस्य परमात्मैश्वर्यस्य ब्रह्मादि-पदस्य चाकाङ्क्षायां पतनमनुमीयते ॥ 'न देवपदमन्विच्छेत्तुत्व एव हरेर्गुणान्। इच्छन्पतति पूर्वस्मादधस्ताद्यत्र नोत्थितिरि'ति ब्रह्माण्डे ॥ 'स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि। एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकमि'त्याद्यनुमानरूपवाक्याच्च ॥ 'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः। अव दस्यूँरधूनुथा'[2] इति श्रुतिः ॥ ४१ ॥

**॥ ॐ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॐ ॥४२॥**

---
[1] २-१-८. ऐ.आ. [2] ८-१४-१४. ऋ.सं.

उपदेवपदं च नापेक्ष्यमित्येके । भावशमनवद्दपिपदवदेव । तच्चोक्त-मिन्द्रद्युम्नश्रुतौ—'अथ यथर्षीन्प्रजापतीनाकाङ्क्षेदेवं न गन्धर्वान्-विद्याधरान्न सिद्धानि'ति । बृहत्संहितायां च — 'न देवानभि-काङ्क्षेत्त कुत एव हरेर्गुणान् । प्राजापत्यांच चाऽप्यांश्च गान्धर्वादी-नपि क्वचित् । ऋष्यादिषु विशेषे तु दोषो नैवाविशेषि(ष)त' इति विशेष-दर्शनार्थमेक इत्युक्तम् ॥४२॥ ॐ बहिस्तूभयथाऽपि स्मृते-राचाराच्च ॐ ॥ ४३ ॥ देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभ-विषय आकाङ्क्षायामनाकाङ्क्षायां च न पतनम् । देवर्षिगन्धर्वाणां पदाकाङ्क्षी पतेद्ध्रुवम् । अन्यत्र शुभमाकाङ्क्षन्न पतेदविरोधत इति स्मृतेः ॥ 'नानात्वमेव कामानां नाकामः क्व च दृश्यते । अतोऽ-निरुद्धकामः स्यादकामस्तेन भण्यत' इत्याचाराच्च ॥४३॥ आधिकारि-काधिकरणम् ॥ ६ ॥

॥ ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥४४॥

'ब्रह्मविदाप्नोति पर'[1]मित्यादिफलं स्वामिनां देवानामेव भवति । 'यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किं चेमाः प्रजा विजानते देवा एव तद्विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाण' इति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते ॥ ४४ ॥ ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ॥ ४५ ॥ मनुष्यागेष्वृत्विजामपि फलदर्शनादल्पं फलं प्रजानामपि भवतीत्यौडुलोमिर्मन्यते । तदर्थं देवैः क्रियमाण-त्वात् ॥ ४५ ॥ ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥४६॥ तृतीयः स्वपक्षः । देवानां

[1] २-१ तै उ

ज्ञानादिकर्मणि सहकार्यन्तरत्वेन प्रजा विधीयन्ते । यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते । यथा चाऽऽचार्यस्य शिष्याः ॥ वाराहे च—'ज्ञानादिदानं देवानां विष्णुना साधु चोदितम् । वेदे च तेषां विहितं तत्राऽऽचार्यो महत्तरः ॥ विहितस्सहकारित्वे सहकार्यन्तरं प्रजाः । पातृत्वेन यथा राज्ञो यथा शिष्या गुरोरपि ॥ तस्माच्छ्रुतं फलं तासामाचार्याणां महत्तरम् । ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरमि'ति ॥ ४६ ॥ फलश्रुत्यधिकरणम् ॥ ७ ॥

॥ ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ॥४७॥

'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदि'त्युक्त्वा 'न च पुनरावर्तते न च पुनरावर्तत'[1] इति गृहिणोपसंहारः क्रियते तस्माद्गृहस्थस्यैवोत्तरमिति न वाच्यम् । यतः कृत्स्नगृहस्थान्देवानपेक्ष्यैवोपसंहारः क्रियते ॥ 'कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयोऽत्र एतेषां न पुत्रा दायमुपयन्ति न चैते गृहान्विसृजन्त्यरागा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तार' इति पौत्रायणश्रुतिः ॥ ४७ ॥

॥ ॐ मौनवदितरेषामप्युपदेशात् ॐ॥४८॥ न चाश्रमद्वयमेव देवानाम् । 'देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वे ह्येते कर्म कुर्वन्ती'ति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेनान्येषामप्युपदेशात् ॥ ४८ ॥ ॥ कृत्स्नभावाधिकरणम् ॥ ८ ॥

॥ ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ ४९ ॥ 'एतां विद्यामधीत्य ब्रह्मदर्शी वाव भवति । स एतां मनुष्येषु विब्रूयात् । यथा यथा ह वै ब्रूयात्तथा तथाऽधिको भवती'ति माठरश्रुतौ विद्यादानं श्रूयते । तत्र बहूनां स्वीकरणार्थमाविष्कारेणेति न

[1] ८-१५-१. छां.उ.

मन्तव्यम् । अन्यथाद्युक्तेः ॥ आविष्कारेऽयोग्यानामपि स्वीकारप्राप्तिः । तच्च निषिद्धम्—'मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । (येषां नैतन्नापर किं च नैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित्' ॥ 'अयो(य)शमेनोपरता मनुष्याः ये धर्मिणो ब्रूहि तेभ्यः सदा नः) । आदेवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुरि'[1]ति ॥ 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि । अनार्यकायानृजवे शठाय मास्म[2] ब्रूया ऋजवे ब्रूहि नित्यमि'ति च ॥४९॥ अनाविष्काराधिकरणम्[3] ॥ ९ ॥

॥ ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥

॥ ५० ॥ 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'[4] इति दर्शनार्थं श्रवणादि विधीयते । तच्च दर्शनमैहिकमेव प्रारब्धप्रतिबन्धाभावे । 'श्रुत्वाऽऽम्नानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत् । यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्ये'ति सौपर्णश्रुतौ तद्दर्शनात्॥ 'अनादिजन्मसम्बद्धं निर्भेत्तुं पापपञ्जरम् । यावत्या सेवया शक्यं तावत्कार्यं न संशयः ॥ यावद्दूरे स्थितो गम्यात्तावद्गन्तव्यमेव हि । इह जन्मान्तरे वाऽपि तावत्येव तु दर्शनम् ॥ श्रवणं मननं चैव निदिध्यासनमेव च । परे गुरौ च या भक्तिः परिचर्यादिकं हरेः । एषा सेवेति सम्प्रोक्ता यया तद्दर्शनं भवेदि'ति बृहत्संहितायाम् ॥५०॥ ऐहिकाधिकरणम् ॥१०॥

॥ ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ ५१ ॥ एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः, तद्भावे जन्मान्तराणीत्यनियमः । 'धर्मी

[1] ७-२३-१६ ऋ स [2] न मा पा [3] अन्यथाधिकरणम् पा
[4] ४-५-५ बृ उ

स्वर्गं विधर्मी निरयमेत्येव ब्रह्मसंस्थोऽमृतमेत्येव ब्रह्मसंस्थोमृतमेत्येवे'ति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणात् ॥ 'विद्वानमृतमाप्नोति नात्र कार्या-विचारणा । अप्रसन्नं यदारब्धं कर्म तत्रैव गच्छति । नचेद्बहूनि जन्मानि प्राप्यैवान्ते न संशय' इति नारायणाध्यात्मे ॥ ५१ ॥

॥ मुक्तिफलाधिकरणम् ॥११॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्र-भाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥ तृतीयस्साधनाध्यायस्समाप्तः ॥

॥ अथ चतुर्थाध्यायः ॥

फलं निगद्यतेऽस्मिन्नध्याये । कर्मनाशाख्यं फलमस्मिन्पादे । नित्यशः कार्यं सर्वथा भाव्यं साधनं प्रथमत उच्यते ।, प्रायिकत्वाच्चाध्यायानां पादानां च न विरोधः ॥ ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ १ ॥ 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'[1] इत्यादीनां नाग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः । किन्त्वावृत्तिः कर्तव्या। 'स य एषोऽणिमैतदात्म्यमिदं सर्वमि'[2]त्याद्यसकृदुपदेशात् ॥ १ ॥ ॐ लिङ्गाच्च ॐ ॥ २ ॥ 'स तपोऽतप्यत...पुनरेव वरुणं पितरमुपससारे'[3]त्याद्यावर्तनलिङ्गाच्च ॥ 'नित्यशः श्रवणं चैव मननं ध्यानमेव च । कर्तव्यमेव पुरुषैर्ब्रह्मदर्शनमिच्छुभिरि'ति बृहत्तन्त्रे ॥ २ ॥ आवृत्त्यधिकरणम् ॥ १ ॥

॥ ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ॥ ३ ॥ आत्मेत्युपदेश उपासनं च मोक्षार्थिभिः सर्वथा कार्यमेव । 'नान्यं विचिन्तय आत्मानमेवाहं विजानीयामात्मानमुपास आत्मा हि ममैष भवती'ति ह्युपगच्छन्ति ॥ 'आत्मेत्येवोपास्व आत्मेत्येव विजानीहि नान्यं किञ्चन विजानथ आत्मा ह्येष भवती'ति ग्राहयन्ति च ॥ 'आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः । नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेदि'ति भविष्यत्पर्वणि ॥ 'आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः । सर्वेषां च मुमुक्षूणामुपदेशश्च तादृशः । कर्तव्यो नास्य हानेन कस्यचिन्मोक्ष इष्यत' इति ब्राह्मे ॥३॥ ॥ आत्मोपगमाधिकरणम् ॥ २ ॥

॥ ॐ न प्रतीके न हि सः ॐ ॥ ४ ॥ 'नाम ब्रह्मेत्युपासीत'[4] इत्यादिना ग्रन्थभ्रान्त्या न प्रतीके ब्रह्मदृष्टिः कार्या ।

[1] ४-४-५. बृ.उ. [2] ६-८-७. छां.उ. [3] ३ १, २ तै.उ. [4] ७-१-५. छां.उ.

किन्तु तत्स्थत्वेनैवोपासनं कार्यम् ॥ ब्रह्मतर्के च—'नामादिप्राणपर्यन्त उभयोः प्रथमात्मतः । ऐक्यदृष्टिरिति भ्रान्तिरबद्धानां भविष्यति ॥ नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते । सर्वार्था प्रथमा यस्मा-त्सप्तम्यर्था ततो मते'ति ॥ ४ ॥ प्रतीकाधिकरणम् ॥ ३ ॥

**॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ५ ॥** ब्रह्मदृष्टिश्च सर्वथा [1]कार्यैव परमेश्वरे । उत्कृष्टत्वात् ॥ 'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् । महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि । सर्वतः प्रीतिजनकमतस्तत्सर्वथा भवेत् ॥ आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता । कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेदि'ति ब्रह्मतर्के ॥ ५ ॥ ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

**॥ ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ॥६॥**

'चक्षोः सूर्यो अजायते'[1]त्याद्युपासनं च देवानां कार्यमेव । स्वोत्पत्तिस्थानत्वात्स्वाश्रयत्वान्मुक्तौ तत्र लयस्यापेक्षितत्वाच्चोपपन्नं तथोपासनं ॥ नारायणतन्त्रे च— 'आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु । गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु ॥ स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेत् । अत्र सर्वगुणानां च यतोन्तर्भाव इष्यते ॥ स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु । तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः । तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषत' इति ॥ ६ ॥ आदित्यादिमत्यधिकरणम् ॥ ५ ॥

**॥ ॐ आसीनस्सम्भवात् ॐ ॥ ७ ॥** सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यात् । तदा विक्षेपाल्पत्वेन सम्भवात् ॥७॥

**॥ ॐ ध्यानाच्च ॐ ॥ ८ ॥** 'स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा । स्मरणं सर्वदा योग्यं ध्यानोपासनमामने ॥ नैरन्तर्य

[1] १०-९०-१३. ऋ.सं.

मनोवृत्तेर्ध्यानमित्युच्यते बुधैः । आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ॥ स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् । स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशय' इति नारायणतन्त्रे ॥ अतो ध्यानत्वाच्च ॥ ८ ॥ ॐ अचलत्वं चापेक्ष्य ॐ ॥९॥ 'अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् । चलने तु शरीरस्य चञ्चलं तु मनो भवेदि'ति ब्रह्माण्डे ॥ ९ ॥ ॐ स्मरन्ति च ॐ ॥१०॥ 'समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्नि'त्यादि ॥ १० ॥ ॐ यत्रैकाग्रता तत्राविशेषात् ॐ ॥ ११ ॥ देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यम् ॥ 'तमेव देशं सेवेत तं कालं तामवस्थितिम् । तानेव भोगान्भुञ्जीत मनो यत्र प्रसीदति ॥ न हि देशादिभिः कश्चिद्विशेषः समुदीरितः । मनः प्रसादनार्थं हि देशकालादिचिन्तने'ति वाराहे ॥ ११ ॥ आसनाधिकरणम् ॥ ६ ॥

॥ ॐ आ प्रायणात्तत्रापि हि दृष्टम् ॐ ॥१२॥ यावन्मोक्षस्तावदुपासनादि कार्यम् । 'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीते'[1]ति हि श्रुतिः ॥ 'सर्वदैनमुपासीत यावद्विमुक्तिर्मुक्ता अपि ह्येनमुपासत' इति सौपर्णश्रुतिः ॥ 'श्रुणुयाद्यावदज्ञानं मतिर्यावदयुक्तता । ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते ॥ दृष्टतत्वस्य च ध्यानं यदा दृष्टिर्न विद्यते । भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा । आ विमुक्तेर्विधिर्नित्यं स्वत एव ततः परमि'ति ब्रह्माण्डे ॥ १२ ॥ प्रायणाधिकरणम् ॥ ७ ॥

॥ ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ॥ १३ ॥ ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वस्य

1 प्र-१. प्र उ.

विनाशश्च। 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते'[1]। 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्त'[2] इति तद्व्यपदेशात्॥ १३॥ ॐ **इतरस्याप्येवमसंश्लेषः पाते तु ॐ॥ १४॥** पुण्यस्याप्येवमसंश्लेषः पाते। तु शब्दोऽनुत्थानवाची॥ 'यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः। एवं सुकर्मणश्चापि पततस्तमसि ध्रुवमि'ति चाऽग्नेये॥१४॥ ॐ **अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ॥ १५॥** अनारब्धकार्ये एव पूर्वे पुण्यपापे विनश्यतः। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत'[3] इति तदवधेः॥ तु शब्दः स्मृतिद्योतकः॥ 'यदनारब्धपापं स्यात्तद्विनश्यति निश्चयात्। पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः। द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः॥ तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित्। आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोरि'ति नारायणतन्त्रे॥ १५॥ ॐ **अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ॥ १६॥** अग्निहोत्राद्यपि मोक्षेऽनुभावायैव। तुशब्दाद्ब्रह्मदर्शनवतः। 'स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम्। यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽऽत्मनो यद्यत्कामयते तत्तत्सृजत'[4] इति तद्दर्शनात्॥१६॥ ॐ **अतोऽन्यदपीत्येकेषामुभयोः ॐ॥ १७॥** मुक्तावनुभवकारणाद्यदन्यत् तत्पुण्यमपि विनश्यति, अप्रारब्धमनभीष्टं च। तथा ह्येकेषां

---

[1] ४-१४-३. छां.उ. [2] ५-२४-३. छां.उ. [3] ६-१४-२. छां.उ.
[4] ३-४-१५. बृ उ.

पाठ उभयोस्त्यागेन—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि'[1]ति ॥ 'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति। किमु पापं परब्रह्मज्ञानिनो नात्र संशय' इति पाद्मे ॥ १७ ॥

॥ ॐ यदेव विद्ययेति हि ॐ ॥ १८ ॥ ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'[2]ति श्रुतेः ॥ 'न ह्यस्य कर्म क्षीयत'[3] इति च ॥ 'अल्पमात्रः कृतो धर्मो भवेज्ज्ञानवतो महान्। महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेदि'ति च भारते ॥ १८ ॥

॥ ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ ॥ ॥१९॥ आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पत्स्यते। अथेति नियमसूचकः ॥ 'आरब्धपुण्यपापस्य भोगेन क्षपणादनु। प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ॥ ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः। नियमेन भवेन्नात्र कार्या काचिद्विचारणे'ति च नारायणतन्त्रे ॥१९॥ तदधिगमाधिकरणम् ॥८॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद उच्यते ॥ ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥१॥ वागभिमानिन्युमा मनोऽभिमानिनि रुद्रे विलीयते। वाचो मनोवशत्वदर्शनात् ॥ 'तस्य यावन्न वाङ्मनसि सम्पद्यत'[4] इति शब्दाच्च ॥ 'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः। तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्विहीयत' इति स्कान्दे ॥१॥

॥ ॐ अत एव च सर्वाण्यनु ॐ ॥ २ ॥ अत एव च

---

[1] शाट्यायनशाखा. [2] १-१-१०. छां.उ [3] ३-४-१५. बृ.उ.
[4] ६-१५-१. छां उ

शब्दात्सर्वाणि दैवतानि यथानुकूलं विलीयन्ते । 'अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्रे इन्द्र उमायामुमा रुद्रे विलीयते एवमन्यानि दैवतानि यथाऽनुकूलमि'ति हि गौपवनश्रुतिः ॥ २ ॥ वाङ्मनसाधिकरणम् ॥ १ ॥

॥ ॐ तन्मनः प्राण उत्तरात् ॐ ॥ ३ ॥ 'मनः प्राणः'[1] इत्युत्तराद्वचनान्मनोऽभिमानी रुद्रः प्राणे वायौ विलीयते । 'वायोर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रेष्ठ' इति च कौण्डिन्यश्रुतिः ॥ ३ ॥ मनोऽधिकरणम् ॥ २ ॥

॥ ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ॥ ४ ॥ स प्राणः परमात्मनि विलीयते । 'सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति प्राणं देवा अनुप्राणन्ति प्राणः परमनुप्राणिति तस्मादाहुः प्राणस्य प्राण इति' 'प्राणः परस्यां देवतायाम्' । 'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते । अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु । आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् ॥ नह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन । किमु विष्णोः परानन्दो न ते विष्णाविति श्रुतेः ॥ प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम् । सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथमि'त्यादि श्रुतिस्मृतिभ्यः ॥४॥ ॥ अध्यक्षाधिकरणम् ॥ ३ ॥

॥ ॐ भूतेषु तच्छ्रुतेः ॐ ॥ ५ ॥ भूतेष्वन्येषां देवानां लयः । 'भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाते'ति बृहच्छ्रुतेः ॥५॥ भूताधिकरणम् ॥४॥

॥ ॐ नैकस्मिन्दर्शयतो हि ॐ ॥६॥ नैकस्मिन्भूते सर्वेषां देवानां लयः । 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्ना-

[1] ६-१५-१. छां.उ.

वमयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते । मृत्यवः पृथिव्यां वरुण आपोऽग्नयस्तेजसि मरुतो मारुत आकाशे विनायका विलीयन्त' इति महोपनिषच्चतुर्वेदशिखा च दर्शयतः । अतोऽग्नौ देवा विलीयन्त इति तत्र निर्दिष्टानामेव ॥ ६ ॥ ॥ अनेकलयाधिकरणम्[1] ॥ ५ ॥

॥ ॐ **समना चासृत्युपक्रमादमृतत्वं चानुपोष्य** ॐ ॥ ७ ॥ देशतः कालतश्च व्याप्त्या समो ना परमपुरुषो यस्याः सा समना । संसारानुपक्रमात्स्वत एवामृतत्वं तस्याः ॥ बृहच्छ्रुतिश्च — 'द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चेतौ ज्ञात्वा विमुच्यत' इति ॥ नैतावता साम्यम् ॥ ७ ॥ ॐ **तदपीतेः संसारव्यपदेशात्** ॐ ॥ ८ ॥ 'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तावसमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतत्वमेती'ति सौपर्णश्रुतेः ॥ ८ ॥ ॐ **सूक्ष्मं प्रमाणतश्च तथोपलब्धेः** ॐ ॥ ९ ॥ सूक्ष्मत्वं चाधिकं ब्रह्मणः प्रकृतेः । ज्ञानानन्दैश्वर्यादिप्रमाणाधिक्यं च ॥ 'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः । ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोरि'ति च तुरश्रुतिः ॥९॥ ॐ **नोपमर्देनातः** ॐ ॥१०॥ अनन्तस्य ये विशेषगुणास्तेषामनुपमर्देनैव साम्यम् ॥ 'देशतः कालतश्चैव समा प्रकृतिरीश्वरे । उभयोरप्यबद्धत्वं तदबन्धः परात्मनः । स्वत एव परेशस्य सा चोपास्ते सदा हरिम् ॥ प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु निर्गुणाः । नियता नैव केनापि नियता हि हरेर्गुणा'

---

[1] नैवम्मिश्रधिकरणम् - पा.

इति भविष्यत्पर्वणि॥ १० ॥ **ॐ अस्यैव चोपपत्तेरूष्मा ॐ ॥ ११ ॥** 'द्विधा हीदमवदृश्यते ऊष्मावदनूष्मावच्च । तत्रोष्मावत्परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्ति। अथानूष्मावत्प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति च यन्न पश्यन्ति पश्यन्ति च यन्न शृण्वन्ति शृण्वन्ति च यन्न जानन्ति जानन्ति चे'ति सौपर्णश्रुतेः किञ्चित्साम्योपपत्तेः ॥ ११ ॥ **ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ॥ १२ ॥** 'असमो वा एष परो न हि कश्चिदेवं दृश्यते सर्वे ह्येतेऽणवो जायन्ते च म्रियन्ते च छिद्रा ह्येते भवन्ति । अथ परो न जायते न म्रियते पूर्णश्चैव भवती'ति चतुर्वेदशिखायां साम्यप्रतिषेधान्नेति चेन्न । शारीराद्धि साम्यं प्रतिषिध्यते ॥१२॥ कुतः ?—॥ **ॐ स्पष्टो ह्येकेषाम् ॐ ॥ १३ ॥** 'अथातः समासमाश्चाभिधीयन्ते समासमाश्चाय समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येवैतद्भवत्यथासमा ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्ये के च देवा गन्धर्वा मनुष्याः पितरोऽसुरा यत्किञ्चेदं चरमचरं चाथ समाऽसमा प्रकृतिर्वाव समाऽसमा सैषा हि नित्याऽजरा तद्वशा चे'ति स्पष्टो हि माध्यन्दिनायनानां समादिवादः ॥१३॥ **ॐ स्मर्यते च ॐ ॥ ॥ १४ ॥** 'मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः । ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमे'ति वाराहे ॥ १४ ॥ समनाधिकरणम् ॥ ६ ॥

***॥ ॐ तानि परे तथा ह्याह ॐ ॥ १५ ॥***

प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते । 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्य' इति कौषारवश्रुतिः ॥ १५ ॥ पर(लय)ाधिकरणम् ॥ ७ ॥

॥ ॐ अविभागो वचनात् ॐ ॥ १६ ॥ 'एते देवा एतमात्मानमनुविश्य मत्याः सत्यकामाः सत्यसङ्कल्पा यथानिकाममन्तर्बहिः परिचरन्ती'ति गौपवनश्रुतिः । तत्परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम् । 'कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योरि'[1]ति वचनात् । 'मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु । कामानुकूलकामत्वं नान्यथैषां विधीयत' इति ब्राह्मे ॥ १६ ॥
॥ अविभागाधिकरणम् ॥ ८ ॥

॥ ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ॥ १७ ॥ उत्क्रान्तिकाले हृदयस्याग्रे ज्वलनं भवति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतत'[2] इति श्रुतेः ॥ तत्प्रकाशितद्वारो निष्क्रामति । विद्यासामर्थ्यात् । 'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावित'[3] इति स्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च ॥ 'आचार्यस्तु ते गतिं वक्ते'[4]ति हि लिङ्गम् । 'हार्दस्थेनैव हरिणा तस्यैवानुग्रहेण तु । उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो भवेदि'ति चाध्यात्मे ॥ 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'[5]ति च ॥ १७ ॥ ॐ रश्म्यनुसारी ॐ ॥१८॥ निष्क्रामति । 'सहस्रं वा आदित्यस्य रश्मय आसु नाडीष्वाततास्तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छती'ति पौत्रायणश्रुतिः ॥१८॥ ॐ निशि नेति चेन्न सम्बन्धात् ॐ ॥ १९ ॥ रश्म्यभावान्निशि

[1] ३-१५-४. तै.आ. [2] ६-४-२. बृ.उ. [3] ८-६. भ.गी. [4] ४-१४-१. छां.उ. [5] २-६-१६. कठ.उ.

ज्ञानिन उत्क्रमणं न युक्तमिति चेन्न । सर्वदा सम्बन्धाद्रश्मीनाम् ॥
॥१९॥ कियत्कालम् ?—॥ **ॐ यावद्देहभावित्वाद्दर्शयति च ॐ ॥ २० ॥** यावद्देहो विद्यते तावद्रश्मिसम्बन्धोऽस्त्येव ।
'संसृष्टा या एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदंशरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तत' इति माध्यन्दिनायनश्रुतिः ॥२०॥
॥ **ॐ अतश्चायनेऽपि हि दक्षिणे ॐ ॥ २१ ॥** 'दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायण' इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते । 'शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः । तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ॥ ते सर्वे देहसम्बद्धा सर्वदा सर्वदेहिनाम् । महर्लोकादिगन्तार उत्तरायणरश्मिभिः । निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः ॥ उत्तरं दक्षिणमिति त एव तु निगद्यते । न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् ॥ ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते । अत्युत्तमानां केषाञ्चिन्नविशेषोऽस्ति कालत' इति (हि) नारायणाध्यात्मे ॥ २१ ॥ हृदयाग्रज्वलनाधिकरणम्[1] ॥ ९ ॥

॥ **ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ ॥ ॥ २२ ॥** न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । किन्तु ज्ञानयोगिनः कर्मयोगिनश्च । 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते'[2] इत्यत्र योगीति विशेषणात्स्मरणनिमित्ते चैते गती ॥ गत्यनुस्मरणाद्ब्रह्मचन्द्रं वा गच्छति ध्रुवम् । अननुस्मरतः

---

[1] तदोकोधिकरणम्. पा. [2] ८-२४, २५. भ.गी.

काले स्मरणं प्राप्य वै गतिरि'त्यध्यात्मे ॥ २२ ॥ प्रतिस्मरणाधिकरणम्[1] ॥१०॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते चतुर्थाध्यायस्य द्वितीयः पादः ॥४॥२॥

मार्गो गम्यं चास्मिन्पाद उच्यते—॥ **ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ १ ॥** 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरन्ह आपूर्यमाणपक्षम्'[2] इत्यर्चिषः प्राथम्यं श्रूयते । 'यदा ह वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छती'[3]ति वायोः । तत्रार्चिषः प्राप्तिरेव प्रथमा । 'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात् ॥ अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः । अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् । एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महानि'ति ब्रह्मतर्के ॥१॥ ॥ अर्चिराद्यधिकरणम् ॥ १ ॥

**॥ ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥ ॥ २ ॥** अर्चिषो वायु गच्छति । 'स वायुमागच्छती'[4]ति सामान्यवचनात् । 'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह आपूर्यमाणपक्षमि'ति विशेषवचनाच्च ॥२॥ वायुगत्यधिकरणम् ॥२॥

**॥ ॐ तटितोऽधि वरुणस्सम्बन्धात् ॐ ॥ ३ ॥** 'मासेभ्यस्संवत्सरं संवत्सराद्वरुणलोकं वरुणलोकात्प्रजापतिलोकमि'ति कौण्डिन्यश्रुतिः । 'संवत्सरात्तटितमागच्छति तटितः प्रजापतिलोकमि'ति च गौपवनश्रुतिः । 'तत्र तटितो वरुणं गच्छति । तटिता ह्युपते वरुणलोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो राजा

---

[1] योग्यधिकरणम्. पा [2] ५-१०-१ छा उ [3] ७-१०-१ बृ उ
[4] ७ १०-१ बृ उ

सत्यानृते विविञ्चती'त्युपरिसम्ब(न्ध)द्धत्वश्रुतेः ॥ ३ ॥ तटिदधिकरणम् ॥ ३ ॥

॥ ॐ आतिवाहिकस्तल्लिङ्गात् ॐ ॥४॥ पूर्वोक्तस्त्वातिवाहिको वायुः । पूर्वगमनलिङ्गात् ॥ ४ ॥ कुतः ?—
॥ ॐ उभयव्यामोहात्तत्सिद्धेः ॐ ॥ ५ ॥ 'स वायुमागच्छती'[1]ति प्रथममुच्यते । 'उत्क्रान्तो विद्वान्परमभिगच्छन्विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छती'त्यन्तेऽपि वायुगमनश्रुतेः पूर्वोक्त आतिवाहिकः परो वेति व्यामोहे उत्तरे दिवस्पतिरिति विशेषणात्पूर्वत्राऽतिवाहिकस्यैव सिद्धेः ॥ ब्रह्मतर्के च—'उत्क्रान्तस्तु शरीरात्स्माद्गच्छत्यर्चिषमेव तु । ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः ॥ ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा । तटितं वरुणं चैव प्राजापं सूर्यमेव च ॥ सौमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा । ततो वायुं परं प्राप्य तेनैति पुरुषोत्तममि'ति ॥ ५ ॥ आतिवाहिकाधिकरणम् ॥ ४ ॥

॥ ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ॥६॥ प्रकारान्तरेण तत्र तत्रोच्यमानत्वाद्वायोरपि परतो ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीति नाशङ्कनीयम् । विद्युत्पतिना वायुनैव 'स एनान्ब्रह्म गमयती'[2]ति ब्रह्मगमनश्रुतेः ॥ 'विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः । कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकमि'ति बृहत्तन्त्रे ॥ ६ ॥ वैद्युताधिकरणम् ॥ ५ ॥

॥ ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ॥ ७ ॥
'स एनान्ब्रह्म गमयती'[3]ति कार्यं ब्रह्म गमयतीति बादरिर्मन्यते ॥ 'ऋते देवान्परं ब्रह्म कः पुमान्प्राप्नुयात्क्वचित् । यद्यपि ब्रह्मदृष्टिः

---
[1] ७-१०-१. बृ.उ. [2] ४-१५-६. छां.उ. [3] ५-१०-२. छां.उ.

स्याद्ब्रह्मलोकमवाप्नुयादि'त्यध्यात्मवचनात्तस्यैव गत्युपपत्तेः ॥ ७ ॥
॥ ॐ **विशेषितत्वाच्च** ॐ ॥ ८ ॥ 'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखमि'ति कौषारवश्रुतौ ॥ ८ ॥ ॐ **सामीप्यात्तु तद्व्यपदेशः** ॐ ॥
॥ ९ ॥ 'ब्रह्मविदाप्नोति परमि'[1]ति तद्व्यपदेशस्तु समीपत एव परमपि प्राप्नोतीत्येतदर्थमेव ॥९॥ कदा ?— ॥ ॐ **कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्** ॐ ॥ १० ॥ 'ते ह ब्रह्माणमभिसम्पद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभिगच्छन्ती'ति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छन्ति ॥ १० ॥
॥ ॐ **स्मृतेश्च** ॐ ॥ ११ ॥ 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते परात्मानः प्रविशन्ति परं पदमि'ति ॥११॥
॥ ॐ **परं जैमिनिर्मुख्यत्वात्** ॐ ॥ १२ ॥ ब्रह्मशब्दस्य तत्रैव मुख्यत्वात्परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते ॥ १२ ॥
॥ ॐ **दर्शनाच्च** ॐ ॥ १३ ॥ दृष्टत्वाच्च परब्रह्मणः ॥ १३ ॥
॥ ॐ **न च कार्ये प्रतिपत्त्यभिसन्धिः** ॐ ॥ १४ ॥ न हि कार्ये प्रतिपत्तिः प्राप्नवानीत्यभिसन्धिश्च । 'यदुपास्ते पुमाञ्जीवन्यत्प्राप्तुमभिवाञ्छति । यच्च पश्यति दृष्टः संस्तत्प्राप्नोति मृतेरन्वि'ति पाद्मे ॥१४॥ ॐ **अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च** ॐ ॥ १५ ॥ 'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् । न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ॥ अप्रतीका देवतास्तु ऋषीणां शतमेव च । राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा ॥ एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये न तु

[1] २-१. तै.उ.

क्वचित् । अयोग्यदर्शने यत्नाच्छंशः पूर्वस्य चापि तु ॥ अप्रतीकाश्रया ये हि ते यान्ति परमेव तु । स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद्ब्रह्मसलोकताम् । ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदमिति गारुडवचनात् उभयत्रोक्तदोषाचाप्रतीकालम्बनान्परं नयति । 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यत'[1] इति श्रुतेश्च ॥ अत्र कर्मोपासनमेव । अन्यान्कार्यं नयतीति भगवन्मतम् ॥ ॥ १५ ॥ **ॐ विशेषं च दर्शयति ॐ** ॥ १६ ॥ 'अन्तःप्रकाशा बहिःप्रकाशा सर्वप्रकाशाः । देवा वाव सर्वप्रकाशाः ऋषयोऽन्तःप्रकाशा मानुषा एव बहिःप्रकाशा इति चतुर्वेदशिखायाम् ॥ १६ ॥ ॥ कार्याधिकरणम् ॥ ६ ॥ इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

भोगमाहास्मिन्पादे ॥ **ॐ सम्पद्याविर्भाय स्वेन शब्दात् ॐ** ॥ १ ॥ 'स य एवं विदेवं मन्वान एवं पश्यन्नात्मानमभिसम्पद्यैतेनात्मना यथा कामं सर्वान्कामाननुभवती'ति सौपर्णश्रुतेः । 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत'[2] इति च । 'एवं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवती'[3]ति च । तत्र तरणं नाम तत्प्राप्त्येऽन्यतरणमेव । 'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदत आनन्दी भवती'ति मौद्गल्यश्रुतेः ॥ १ ॥ सम्पद्याधिकरणम्[4] ॥ १ ॥

॥ **ॐ मुक्तः प्रतिज्ञानात् ॐ** ॥ २ ॥ मुक्त एव चात्रोच्यते । 'अहरहरेनमनुप्रविशत्युपसङ्क्रमे च न तत्र मोदते न

[1] ६-४-५. बृ.उ. [2] ८-३-४. छां.उ. [3] ८-४-२. छां.उ. [4] क्वचिदधिकरणमिति विभागो न कृतः ।

प्रमोदते न कामाननुभवति बद्धो ह्येष भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवती'ति बृहच्छ्रुतौ प्रतिज्ञानात् ॥२॥ ॥ मुक्ताधिकरणम् ॥ २ ॥

॥ ॐ आत्मा प्रकरणात् ॐ ॥ ३ ॥ परञ्ज्योतिः-शब्देन परमात्मैवोच्यते । तत्प्रकरणत्वात् । 'परञ्ज्योतिः परब्रह्म-परमात्मादिका गिरः । सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चने'ति ब्रह्माण्डे ॥ ३ ॥ आत्माधिकरणम्[1] ॥ ३ ॥

॥ ॐ अविभागेन दृष्टत्वात् ॐ ॥ ४ ॥ भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते । 'यानेवाहं शृणोमि यान् पश्यामि याञ्जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्ती'ति दृष्टत्वा-चतुर्वेदशिखायाम् ॥ भविष्यत्पुराणे च—'मुक्ताः प्राप्य परं विष्णुं तद्भोगाँल्लिशतः क्वचित् । बहिष्ठान्भुञ्जते नित्यं नाऽनन्दादीन्कथञ्च-ने'ति ॥ ४ ॥ अविभागाधिकरणम् ॥ ४ ॥

॥ ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ॥ ॥ ५ ॥ सर्वदेहपरित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगान्भुञ्जत इति जैमिनिर्मन्यते । 'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनु-भवती'ति माध्यन्दिनायनश्रुतावुपन्यासात् ॥ 'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति । गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेदि'ति स्मृतेः ॥ 'गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् । इत्यादि पूर्वस्मरणान्मुक्तस्तद्भविष्यती'ति बृहत्तन्त्रोक्तयुक्तेश्च ॥ ५ ॥

॥ ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ ॥ ॥ ६ ॥ चितिमात्रो देहो मुक्तानां पृथग्गियते तेन भुञ्जते । सर्वे

[1] आत्मसम्पत्त्यधिकरणम्- पा-

वा एतदचिरपरित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षत' इत्युद्दालकश्रुतेश्चिदात्मकत्वादित्यौडुलोमिर्मन्यते ॥ ६ ॥ ॐ **एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः** ॐ ॥ ७ ॥ 'स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवत्यथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिरि'ति सौपर्णश्रुतौ चिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्य भावादुभयत्राप्यविरोधं बादरायणो मन्यते ॥ नारायणाध्यात्मे च—'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः । चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् । तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् । कुर्वन्ति भुञ्जते भोगांस्तदन्तर्बहिरेव वा । यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिता' इति ॥ ७ ॥ चितिमात्राधिकरणम्[1] ॥ ५ ॥

॥ ॐ **सङ्कल्पादेव च तच्छ्रुतेः** ॐ ॥ ८ ॥ न तेषां भोगादिषु प्रयत्नापेक्षा । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'[2]त्यादिश्रुतेः ॥ ८ ॥ सङ्कल्पाधिकरणम् ॥ ६ ॥

॥ ॐ **अत एव चानन्याधिपतिः** ॐ ॥ ९ ॥

सत्यसङ्कल्पत्वादेव । 'परमोऽधिपतिस्तेषां विष्णुरेव न संशयः । ब्रह्मादिमानुपान्तानां सर्वेषामविशेषतः ॥ ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् । आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् । एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशय' इति चाराहे ॥ ९ ॥ ॥ अनन्याधिपतित्वाधिकरणम् ॥ ७ ॥

॥ ॐ **अभावं बादरिराह ह्येवम्** ॐ ॥ १० ॥

चिन्मात्रं विनाऽन्यो देहस्तेषां न विद्यत इति बादरिः । 'अशरीरो

---

[1] ब्राह्माधिकरणम्. पा.  [2] ८-२-१. छां.उ.

वान् तदा भवत्यशरीरं वान् सन्तं न प्रियाप्रिये स्पृशतो याम्या ह्येष उन्मथ्यत' इत्येवं कौण्टरव्यश्रुतामाह हि ॥ १० ॥ ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ॥ ११ ॥ 'स वा एष एवं नित्यमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथाऽनन्दी ह्येष भवति नानानन्दं कञ्चिदुपस्पृशती'त्यौद्दालकश्रुतौ विकल्पाम्नानादन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥११॥ ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ॥ १२ ॥ यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति । एवं मुक्तभोगो बाह्यशरीरकृतश्चिन्मात्रकृतश्च भवती'ति बादरायणो मन्यते ॥ १२ ॥ उपपत्तिश्च—॥ ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ ॥ १३ ॥ सन्ध्यं स्वप्नः । 'सन्ध्यं तृतीयं स्वप्नस्थानमि'[1]ति श्रुतेः ॥ १३ ॥ ॐ भावे जाग्रद्वत् ॐ ॥१४॥ ब्रह्मतर्के च—'स्वप्नस्थाना यथा भोगो विना देहेन युज्यते । एवं मुक्तावपि भवेद्विना देहेन भोजनम् ॥ स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचने'ति ॥ १४ ॥ ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ ॥ १५ ॥ शरीरमनुविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति न तु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तथं तैलाद्येव भुङ्क्ते न तु काष्ण्यादि । 'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवती'[2]ति हि दर्शयति ॥ १५ ॥ न च स्वर्गे लोके न भयं किञ्चनास्ती'[3]त्यादिना स्वर्गादिष्वप्येतदिति वाच्यम् । यतः— ॥ ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि

१ ६.३.९-वृ उ  २ ६.३.२२-वृ उ  ३ १.१२-कठ उ

ॐ ॥ १६ ॥ सुप्तौ मोक्षे वा तदुच्यते। 'अत्र पिताऽपिता भवत्यनन्वागतं पुण्येनानन्वागतं पापेने'[1]त्याद्याविष्कृतत्वात् ॥ ब्रह्मवैवर्ते च—'ज्योतिर्मयेषु देहेषु स्वेच्छया विधमोक्षिणः। भुञ्जते सुसुखान्येव न दुःखादीन्कदाचन ॥ तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः। सर्वदोषनिवृत्तास्ते गुणमात्रस्वरूपिण' इति ॥१६॥ ॥ उभयविधभोगाधिकरणम्[2] ॥ ८ ॥

॥ ॐ **जगद्व्यापारवर्जम्** ॐ ॥ १७ ॥ 'सर्वान्कामानाप्त्वाऽमृतः समभवदि'[3]त्युच्यते। तत्र सृष्ट्यादिभ्योऽन्याव्यापारानाप्नोति ॥ १७ ॥ कुतः?— ॥ ॐ **प्रकरणादसन्निहितत्वाच्च** ॐ ॥१८॥ जीवप्रकरणत्वाज्जीवानां तादृक्सामर्थ्यविदूरत्वाच्च। वाराहे च—'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि। मुक्तानां नैव कामः स्यादन्यान्कामांस्तु भुञ्जते। तद्योग्यता नैव तेषां कदाचित्कापि विद्यते। नचायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेदि'ति ॥ १८ ॥ ॐ **प्रत्यक्षोपदेशादिति चेन्नाऽधिकारिकमण्डलस्योक्तेः** ॐ ॥ १९ ॥ 'स यो वेद, स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ती'[4]ति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीति चेन्न। आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते ॥ गारुडे च—'आत्मेत्येव परं देवमुपास्य हरिमव्ययम्। केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ॥ अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन। केचित्स्वर्गे महर्लोके जने तपसि चापरे ॥ केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम्। तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ॥ सालोक्यं च सरूपत्वं सामीप्यं योगमेव च।

---

[1] ६-३-२२. बृ.उ. [2] अभावाधिकरणम्. पा. [3] २-५-४. ऐ.आ.
[4] १ ५ तै.उ.

इमामारभ्य सर्वत्र यास्तु क्षीरसागरे ॥ पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः। मानुषा वर्णभेदेन तथैवाऽऽश्रमभेदतः ॥ क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः। आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः ॥ रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमाः। नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च। सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् ॥ पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः। स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता ॥ सयुजः परमात्मानं प्रविश्य च बहिर्गताः। चिद्रूपान्प्राकृतांश्चापि विना भोगांस्तु काश्चन। भुञ्जते मुक्तिरेवं ते निस्पष्टं समुदाहृते'ति ॥ १९ ॥ ॐ **विकारावर्ति च तथाहि दर्शयति** ॐ ॥ २० ॥ विकारावर्ति व्यापारो मुक्तानां न विद्यते। 'इमं मानवमावर्तं नाऽऽवर्तन्त'[1] इति श्रुतिः॥ वाराहे च—स्वाधिकारेण वर्तन्ते देवा मुक्तानपि स्फुटम्। बलिं हरन्ति मुक्ताय विरिञ्चाय तु पूर्ववत् ॥ सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः। न विकाराधिकारस्तु मुक्तानामन्य एव तु। विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुने'ति ॥ २० ॥ सर्वकामाधिकरणम्[2] ॥ ९ ॥

॥ ॐ **स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने** ॐ ॥ २१ ॥ 'एतत्साम गायन्नास्ते'[3] इत्युच्यते। तत्राऽनन्दादीनां वृद्धिह्रासश्च न विद्यते। किन्त्वेकप्रकारेणैव सर्वदा स्थितिः। 'स एष एतस्मिन्ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शनेन ब्रह्म दर्शनेनाऽऽत्मानं तत्सर्वं दर्श(य)तो नापत्तिर्न विपत्ति'रित्याह जाबालश्रुतौ ॥ 'यत्र गत्वा न म्रियते यत्र गत्वा न जायते। न हीयते यत्र गत्वा यत्र गत्वा न वर्धत' इति मोक्षधर्मे ॥ विद्वत्प्रत्यक्षान्कारणाभावलिङ्गाच्च। ब्रह्मतर्के च—

[1] ४ १५ ६ छा उ [2] जगद्व्यापाराधिकरणम् पा [3] ३-१०. तै उ.

'न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित्। विद्वत्प्रत्यक्षसिद्धत्वात्कारणाभावतोऽनुमा ॥ हरेरुपासना चात्र सदैव सुखरूपिणी। न तु साधनभूता सा सिद्धिरेवात्र सा यत' इति ॥ २१ ॥ **ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ॥ २२ ॥** न च भोगविशेषादिविरोधः। 'एतमानन्दमयमात्मानमनुविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते यथाकाममुपरमत'[1] इति भोगमात्रसाम्यलिङ्गात् ॥ 'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत्। कादाचित्कविशेषस्तु नैव तेषां निषिध्यत' इति कौर्मे ॥ 'प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित्। नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् ॥ कुत एव तु दुःखं स्यात्सुखमेव सदोदितम्। भोगानां तु विशेषे(षु) तु वैचित्र्यं लभ्यते क्वचिदि'ति नारायणतन्त्रे ॥२२॥ (एकरूप)मित्यधिकरणम् ॥१०॥

**॥ ॐ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॐ ॥ ॥ २३ ॥** 'न च पुनरावर्तते न च पुनरावर्तते',[2] 'सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवदि'[3]त्यादिश्रुतिभ्यः ॥२३॥ अनावृत्त्यधिकरणम् ॥ ११ ॥

ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम्।
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ॥
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि[4] ॥

---

[1] २-८ तै.उ. [2] ८-१५-१. छां.उ. [3] २-५-१-१५ ऐ.आ. [4] तृतीयमेतदमुना भाष्यं कृत केशवे ॥ पा. एतदनन्तरं ज्ञानेत्यादि श्लोकः पठितः।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# अनुव्याख्यानम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ नारायणं निखिलपूर्णगुणैकदेहं निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः । अस्योद्भवादिदमशेषविशेष[1]तोऽपि वन्द्यं सदा प्रियतमं मम संनमामि ॥ तमेव शास्त्रप्रभवं प्रणम्य जगद्गुरूणां गुरुमञ्जसैव । विशेषतो मे[2] परमाख्यविद्याव्याख्यां करोम्यन्वपि चाहमेव ॥ प्रादुर्भूतो हरिर्व्यासो विरिञ्चिभवपूर्वकैः । अर्थितः परविद्याख्यं चक्रे शास्त्रमनुत्तमम् ॥ गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः । यतस्तदुदितं मानमजादिभ्यस्तद[3]र्थतः ॥ वक्तृश्रोतृप्रसक्तीनां [4]यदाप्तिरनुकूलता । आप्तवाक्यतया तेन श्रुतिमूलतया तथा ॥ युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत् । दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः ॥ अतो नैतादृशं किञ्चित्प्रमाणतममिष्यते । स्वयंकृताऽपि तद्व्याख्या क्रियते स्पष्ट[5]तार्थतः ॥ तत्र ताराधमूलत्वं सर्वशास्त्रस्य चेष्यते । सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः ॥ **ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥१॥** ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम् । स एव ब्रह्मशब्दार्थो नारायणपदोदितः ॥ स एव भर्गशब्दार्थो व्याहृतीनां च भूमतः[6] । भावनाच्चैव[7] सुखाच्च[8] सोऽयं पुरुष इत्यपि[9] ॥ स एव सर्ववेदार्थो जिज्ञास्योऽयं विधीयते । "ज्ञानी प्रियतमोऽतो मे" "तं विद्वानेव चामृतः" ॥ "वृणुते यं तेन लभ्य" इत्याद्युक्तिबलेन हि । जिज्ञासोत्थज्ञानजातत्प्रसादादेव मुच्यते ॥ "द्रव्यं कर्म च कालश्च स्वभावो जीव

---

[1] वन्द्यत्वप्रयोजकीभूतधर्मेभ्यः [2] गुरुम् [3] मोक्षार्थम्. [4] यद्यनवाक्ये. [5] स्पष्टतारूपप्रयोजनाय. [6] पूर्णत्वात्. [7] उत्पादनात्. [8] सुखरूपत्वात्. [9] उक्तः ।

एव च। यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया" ॥ "नर्ते त्वत्क्रियते किञ्चिदि"त्यादेर्न हरिं विना। ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि कचित्॥ अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः। आनन्ददश्च मुक्तानां स एवैको जनार्दनः॥ इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते। मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः॥ मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेत्। मिथ्यायाः[1] साधकत्वं च न सिद्धं प्रतिवादिनः॥ तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वया। सता चेद्द्वैतसिद्धिःस्यान्न सिद्धं चान्यसाधनम्॥ साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता। स्वीकृतं, ह्यविशेषस्य साध्या[2] साधकता पुनः॥ तत्राविशेषमानेन साध्यमित्यनवस्थितिः। अनङ्गीकुर्वतां विश्वसत्यतां तत्र वादिता॥ तस्माद्व्यवहृतिः सर्वा सत्येत्येव व्यवस्थिता। व्यावहारिकमेतस्मात्सत्यमित्येव चागतम्॥ व्यवहारसतश्चापि साधकत्वं तु पूर्ववत्। सत्त्रैविध्यं च मानेन सिध्येत्केनेति पृच्छ्यते॥ तस्याप्युक्तप्रकारेण नैव सिद्धिः कथञ्चन। वैलक्षण्यं सदसतोरप्येतेन निषिध्यते॥ वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः। असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत्॥ यद्युच्यतेऽपि सत्त्वस्यादिति सद्भेदसंस्थितिः। सन्मात्रत्वं ब्रह्मणोऽपि तस्मात्तदपि नो भवेत्॥ ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः। निज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतम्॥ असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि। तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते॥ अन्यथात्वमसत्तस्माद्भ्रांतावेव प्रतीयते। सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता॥ तस्मानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः। निर्विशेषे

[1] 'नहि गोत्वादिप्रत्ययेनापि मिथ्यया भवितव्यम्' 'इति श्लोकवार्तिककर्तारः शब्दरिकाया आकृतिवादे श्लोक २०'. तथा 'इति मिथ्या चतुर्विधा' इति कात्यायनस्मृतौ (स्मृतिचन्द्रिकाव्यवहारकाण्डे ९८ पत्रे; १८-१९ पङ्क्तौ) प्रयोगदर्शनात्. [2] साध्यैव न न सिद्धा

स्वयंभाते किमज्ञानावृतं भवेत् ॥ मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव ह्यपेक्षते । न चावरणमज्ञानमसत्त्वे तेन चेष्यते ॥ अप्रकाशस्वरूपत्वाज्जडे ज्ञानं न मन्यते ॥ अज्ञानाभावतश्शास्त्रं सर्वं व्यर्थं भविष्यति । अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पने ॥ अनवस्थितिस्तथा च स्यादन्योऽन्याश्रयताऽथवा । स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत् ॥ अविद्यादुर्घटत्वं चेत्स्यादात्माऽपि हि तादृशः[1] । अतोऽधिकारिविषयफलयोगादिवर्जितम् ॥ अनन्तदोषदुष्टं च हेयं मायामतं शुभैः ।

सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः ॥ न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चन । यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत् ॥ ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः । सार्वज्ञादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः ॥ ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी । उपजीव्यविरोधेन नास्यास्तन्मानता भवेत् ॥ स्वातन्त्र्ये च विशिष्टत्वे स्यानमत्यैक्ययोरपि । सादृश्ये चैक्यवाक्यस्य क्वावकाशा यथेष्टतः[2]॥ अवकाशोज्झिता भेदश्रुतिर्नातिबला कथम् । अज्ञानासम्भवादेव मिथ्याभेदो निराकृतः ॥ अतो यथार्थबन्धस्य विना विष्णुप्रसादतः । अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते ॥ यथा दृष्टया प्रसन्नस्सन्राजा बन्धापनोदकृत् । एवं दृष्टः स भगवान्कुर्याद्बन्धविभेदनम् ॥

कार्यता च न काचित्स्यादिष्टसाधनतां विना ॥ कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वतः ॥ न भविष्यत्क्रिया कार्यं स्रक्ष्यतीश इति ह्यपि । कार्यं स्यान्नैव चाकर्तुमशक्यं कार्यमिष्यते ॥ साम्यादेव निषिद्धस्य तदिष्टं साधनं तथा । कार्यं साधनमिष्टस्य भगवानिष्टदेवता ॥ मुख्येष्टं वा सुमनसां "प्रेयस्तदि"ति च श्रुतिः[3]। "प्राणबुद्धिमनःस्वात्मदेहापत्यधनादयः ॥ यत्सम्पर्कात्प्रिया आसंस्ततः को न्वपरःप्रियः"[4]।

---

[1] अविद्यासदृशः (मिथ्या) अधिष्ठानसाक्षिणोरपेक्षाभावेन. [2] यथासम्भवम्. [3] बृहदारण्यकम्. [4] भागवते.

इत्यादिवाक्यैराकाङ्क्षा[1] सन्निधिर्योग्यता यतः ॥ तस्मिन्नेव समस्तस्येती[2]ष्टे व्युत्पत्तिरिष्यते ॥ अव्ययपूर्वांस्तत्र आतेत्यादावाप्ततोऽपि च । उद्वापाद्वर्तमानत्वादाकाङ्क्षादिबलादपि ॥ बालो व्युत्पत्तिमप्ये[3]ति नानयेत्यादिवाक्यतः । आनीयमानदृष्ट्यैव व्युत्पत्तेः सम्भवे सति ॥ एष्यदानयनायायं कुत एव प्रतीक्षते । व्युत्पन्नो वर्तमाने[4] तु क्रियाशब्दे भविष्यति[5] ॥ पुनर्दृष्ट्यैव शब्दश्रुत्पश्चाद्व्युत्पत्तिमेष्यति । वर्तमानमतीतं च भविष्यदिति च क्रमात् ॥ आकाङ्क्षादियुतं यस्माद्विधेर्व्युत्पादनं कुतः । दृष्ट्या ज्ञातपदार्थस्य स्यादाकाङ्क्षा भविष्यति[6] ॥ व्युत्पत्तिः प्रथमा तस्माद्वर्तमानेऽथ्वने[7] ततः । इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते ॥ अपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनम् । क्वापि चेष्टा तदर्था स्यादत्ति[8]र्हि रमनित्तये[9] ॥ वाक्यार्थज्ञानमात्रेण क्वचिदिष्ट[10] भवेदपि । न च स्तुक्स्तुवनहृत्यादानतात्पर्यं श्रुतेर्भवेत् ॥ यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेत् । तस्मादुपासनार्थं[11] च स्वार्थे तात्पर्यवद्भवेत् ॥ इतिशब्दो[12]ऽन्वयेऽथ्वानित्यप्युन्नीते स्मृतिर्भवेत् । इतिशब्दव्यपेतानि ह्यपि सन्ति वचांस्यलम्[13] ॥ आत्मानमेवेत्यादीनि योगेऽथ्वानपि तत्समम् । एकवाक्यत्वयोगे तु वेदस्यापि ह्यशेषतः ॥ वाक्यभेदो न युक्तः स्याद्योगश्च स्यान्महाफले[14] । इति ब्रूयादि[15]ति यचो गत[16]मग्नी समीपगम्[17] ॥ कल्पनागौरवं चेत्स्यात्पृथक्तात्पर्यकल्पने । कल्पनागौरवादेव पदा[18]र्था न स्युरेव हि ॥ प्रमाणानगतत्वं चेत्तात्पर्याणां तथैव हि । तस्मात्पदार्थे वाक्यार्थे

1 मुख्येऽग्र वा सुमनसामित्यनेन सम्बन्ध  2 तस्मात्  3 बालोऽपि, एति  4 वर्तमाने अर्थे  5 भविष्यदर्थ  6 भविष्यदर्थे  7 भविष्यदर्थे  8 चर्वणादिक्रिया  9 साक्षात्काराय  10 पुनस्ते जात इत्यादौ  11 उपासनार्थक सत्यध्यानमित्यादिरम्  12 अध्याहारे  13 बहूनि सन्ति  14 मोक्षप्रदे महाणि  15 भगिपागिरेति ब्रूयात्  16 अवगतम्  17 जुहोतीत्यस्य  18 स्रक्स्रुवादय

तात्पर्यमुभयत्र च ॥ पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत् । अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम् ॥ अङ्गीकृतत्वादपि तैः पदानां तु पृथक्पृथक् । क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणम्[1] ॥ प्रत्यक्षादिविरोधेऽस्तो गौणार्थस्यापि सम्भवात् । अतात्पर्ये पदार्थेऽपि न कल्प्यमविरोधतः[2] ॥ अतो ज्ञानफलान्येव कर्माणि ज्ञानमेव हि । मुख्यप्रमादं विष्णोर्जिज्ञासायाश्च तद्भवेत्॥ कर्तव्या तेन जिज्ञासा श्रुतिप्रामाण्ययोगतः॥

प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि ॥ अनवस्थाऽन्यथा हि स्यादप्रामाण्यं तथाऽन्यतः[3] । मिथ्याज्ञप्तिप्रलम्भादेस्तेन वेदविरोधि यत् ॥ न मानमपि वेदानामङ्गीकार्या हि नित्यता । न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित् ॥ अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोऽपि च । कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तत् ॥ प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति चोदिते । न बुद्धो धर्मदर्शी स्यात्पुंस्त्वादित्यनुमाहतिः ॥ अधर्म[4]वादिनो वाक्यमप्रयोजनमेव हि । धर्माभावोऽपि नो तेन[5] प्रत्यक्षावगतो भवेत् ॥ अतःसंशयसम्पत्तौ[6] वाक्यं[7] प्रत्यक्ष[8]वत्प्रमा[9] ।

शक्तिर्थान्विते स्वार्थे शब्दानामनुभूयते ॥ अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा । न चाशक्त्या[10]भिधायित्वं प्रवृत्तिश्च द्विधाऽन्यथा ॥ एतत्सर्वं तर्कशास्त्रे ब्रह्मतर्के हि विस्तरात् । उक्तं विधापृथक्त्वात्तु सङ्क्षेपेणात्र सूचितम् ॥ प्रमाणन्याय[11]सच्छित्त्वा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा[12] मेयशोधनम् ॥ ब्रह्मतर्कं च भगवान्स एव कृतवान्प्रभुः । पञ्चाशत्कोटिविस्ताराद्वारायणतनौ कृतान्॥

---

[1] प्रसज्येत. [2] अविद्यावरणतिरोधानेन जीवे आनन्दादिरूपत्वस्याविरुद्धत्वात्. [3] दोषापवादात्. [4] धर्माभावः. [5] चार्वाकेण. [6] प्राप्ते तन्निरासार्थम्. [7] अपौरुषेयवाक्यम्. [8] स्थाणु नर्निश्चायकप्रत्यक्षयम्. [9] प्रमाणम्. [10] अशक्त्या=अन्वयेऽशक्तयभावेन. [11] न्यायः=व्याप्तिः, तर्कः, अनुमानम्. [12] मीमांसाशास्त्रतः.

उद्धृत्य पञ्चसाहस्रं कृतवान्बादरायणः । अतस्तदर्थं सङ्क्षेपादत इत्यभ्यसूचयत् ॥ यतोऽनुभवतः सर्वं सिद्धमेतदतोऽपि च । देवैश्च दुर्गमार्येषु व्यापृतो नातिविस्तृतिम् । चकारैता ह्यवज्ञेया युक्तयः प्रतिपक्षगाः ॥ प्रत्यक्षेणाक्षमः पक्षं कमेवात्राभिवीक्षते । तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेऽभ्युपेक्षितः ॥ स्वयं भगवता विष्णुर्ब्रह्मेत्येत[1]त्पुरोदितम् । "स विष्णुराह ही" त्यन्ते देवशास्त्रस्य तेन हि ॥ आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् । मध्यं तदाज्ञया शेषफलाभ्यां कृतमञ्जसा ॥ अतस्तत्रैव विष्णुत्वसिद्धेर्नेत्यसूचयत् । दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ॥ गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः । ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययम् ॥ अतो नारायणस्यैव जिज्ञासाऽत्र विधीयते । सिद्धत्वाद्ब्रह्मशब्दस्य विष्णौ स्पष्टतया श्रुतौ ॥ अम्भस[2]पार इत्युक्तो नारायणपदोदितः । 'आपो नारा' इति ह्याह स एवाप्स्वन्तरीरितः ॥ कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया । योनित्वेनात्मनो[3]विष्णोस्तिष्ठन्तीत्युदितस्य च ॥ यस्मिन्देवा अधीत्युक्त्वा समुद्रं[4] स्थानमेव च । [5]नामचाक्षरमित्येव ऋचइत्युदितं तु यत् ॥ [6]यतः प्रसूतेत्युक्त्वा च तदेव ब्रह्म चाब्रवीत् ॥१॥

॥ ॐ जन्माद्यस्य यतः ॐ ॥ २ ॥ अन्तःसमुद्रगं निश्वसूतेः कारणं तु यत् । स्कन्दोपनिषदाद्युक्तं जन्माद्यस्येति लक्ष्यते ॥ सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः । बन्धमोक्षावपि ह्यासु श्रुतिपूक्ता हरेः सदा ॥ यं नामानि विशन्त्यद्धा यो देवानामिति ह्यपि । श्रुतेर्नामानि सर्वाणि विष्णोरेव यतस्ततः ॥ अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित् । गुणाः श्रुता इति ह्यस्माच्च दोषोऽर्थः श्रुते-

---

[1] एतस्मात्, पुरा=पूर्वम् [2] विष्णोर्ब्रह्मशब्दवाच्यत्वे युक्तिपञ्चकम्, प्रथमा युक्ति [3] द्वितीया युक्ति [4] तृतीया युक्ति [5] चतुर्थी युक्ति [6] पञ्चमी युक्ति

र्भवेत् ॥ प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे । सर्वेषामपि वाक्यानां महातात्पर्यमत्र हि ॥ तद्विरोधे न मानत्वं फलं मुक्तिर्हि वाक्यतः । न पुराणादिमानत्वं विरुद्धार्थे श्रुतेर्भवेत् ॥ दर्शनान्तरमूलत्वा[1]न्मोहार्थं[2] चाज्ञया हरेः । न सर्वनामताऽन्येषां श्रुताप्युक्ता हि कुत्रचित् ॥ अदोपवचनाच्चैव नियमेन हरेः श्रुतौ । अज्ञानं पारतन्त्र्यं च प्रलयेऽभाव एव च ॥ अशक्तिश्चोदिताऽन्येषां सर्वेषामपि च श्रुतौ । जन्माद्यस्येति तेनैतद्विष्णोरेव स्वलक्षणम् ॥ अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम् । कृष्णध्यानच्छलेनैव स्वयं भागवतेऽब्रवीत् ॥ अतो जीवैक्यमपि स निराचक्रे जगद्गुरुः । न हि जन्मादिहेतुत्वं जीवस्य जगतो भवेत् ॥ हिताक्रियादिदोषं च वक्ष्यत्येव स्वयं प्रभुः । निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयम् ॥ भेदेनैव तु मुख्यार्थसम्भवे लक्षणा कुतः । कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः ॥ सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा । न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात् ॥ निर्गुण[3]त्वं तदा च स्यादासुर[4]त्वं न चान्यथा । लक्ष्यलक्षणयोर्भेदोऽभेदो वा यदि वोभयम् ॥ इति [5]पृष्टे तदैक्यस्य गतिरेव[6] न विद्यते । ऐक्याभेदे न शास्त्रेण ज्ञेयं तत्त्वप्रकाशतः ॥ भेदे मिथ्यात्वतो भेदसत्यत्वं स्याद्बलादपि । भेदाभेदौ यदि तदा स्यादेव ह्यनवस्थितिः ॥ स्वनिर्वाहकता[7] चेत्स्याद्धार्यं[8] वाहकं[9]मित्यपि । पर्यायो[10] भेदधान्या[11] स्यादनवस्थोभयत्र च ॥ सत्यज्ञानादिकेऽप्येवं, न व्यावृत्त्या प्रयोजनम् । व्यावृत्तस्याऽविशेषत्वे, तदखण्डं च खण्डितम् ॥ निर्विशेषत्वमेतेन मूकोऽहमिति-

---

[1] पुराणानाम्. [2] कृतत्वात्. [3] यदि परस्मै रुचितेस्यात्. [4] सर्वशुभधर्मराहित्यम्. [5] वक्तव्यम्. [6] निरूपणप्रकारः. [7] ऐक्यस्य भेदाभेदयोर्वा स्वस्मैकनिर्वाहकता, तस्याः परस्परं धर्मिणा क्रियया च अभेदः स्यात् चेत्. [8] निर्वाह्यम्. [9] निर्वाहकम्. [10] पर्यायः स्यात्. [11] यदि.

वद्भवेत् । अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः[1] ॥ विशेषतद्वतोश्चैव स्वनिर्वाहकता भवेत् । भेदहीने [2]त्वपर्यायशब्दान्तरनियामकः ॥ विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः । विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः ॥ स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः । अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते ॥ 'एवंधर्मानि'ति श्रुत्या तदभेदोऽप्युदीर्यते ॥ २ ॥

॥ ॐ शास्त्रयोनित्वात् ॐ ॥३॥ शैवाद्यागमसंप्राप्तदृष्टेन फलेन तु । तद्वाक्योपमयाऽन्यच्च प्रमाणत्वेऽनुमीयते ॥ ईशवाक्यत्वत इति चेत्तद्व्यभिचारिणा । अप्रामाण्यानुमा च स्याच्च पृथक्चानुमेश्वरे ॥ पुंस्त्वहेतुबलादेव पूर्वोक्तेनैव वर्त्मना । शास्त्रयोनित्वमेतेन कारणस्य बलाद्भवेत् ॥ नावेदविच्च तर्केण मतिरित्यादिवाक्यतः । तर्को ज्ञापयितुं शक्तो नेशितारं कथञ्चन ॥ वनकर्त्रादिरूपेण पक्षभूतस्य चेशितुः । किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखम् ॥ वृक्षकृन्नाखिलंवृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत् । इत्याद्यनुमया स्पर्धि नानुमानं परेशितुः ॥ शक्तं विज्ञापने चाऽतिप्रसङ्गोऽनुमयेदृशा । वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्सं सुतैर्युता ॥ चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेत् । उपक्रमादिलिङ्गेभ्यो नाऽन्या स्यादनुमा ततः ॥३॥

॥ ॐ तत्तु समन्वयात् ॐ ॥४॥ तएवान्वयनामानस्तैः सम्यक्प्रविचारिते । मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापरः ॥४॥

॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥५॥ ईक्षणीयत्वतो विष्णुर्वाच्य एव न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं हि किं तदित्यनवस्थितिः ॥ माधुर्यादिविशेषाश्च तच्छब्दैरुदिताः सदा । वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदितो भवेत् ॥ नावाच्यं तेन किञ्चित्स्यादत इत्यादिकैर्वदन् ।

[1] अतः उक्तप्रकारेण. [2] तु = एव.

अवाच्यत्वं कथं ब्रूयान्मूकोऽहमितिवत्सुधीः ॥ येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदत् । एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम् ॥ महती जायते लज्जा यत्र तत्राखिला रवाः । अमुख्यार्था इति वदन्यस्तन्मार्गानुवर्तिनाम् ॥ कथं न जायते लज्जा वक्तुं शब्दत्वमात्मनः ॥ ५ ॥ ॐ गौणश्चेन्नात्मशब्दात् ॐ ॥ ६ ॥ ॥ ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ॥ ७ ॥ आत्मब्रह्मादयः शब्दाः साक्षात्पूर्णाभिधायिनः । जन्मादिकारणं ब्रह्म लक्षितं च यदा तदा ॥ वन्ध्यापुत्रोपमं मायाशबलं वाच्यमित्यपि । कल्पयित्वा विना मानं लक्ष्यं शुद्धं वदन्पदैः ॥ आत्मशब्दोदितस्यैव ज्ञानं मुक्त्यवसाधनम् । आह श्रुतपरित्यागः स्याद्यास्याऽश्रुतकल्पना ॥ स्यात्सर्वत्र च यत्रैकमपि लोको जुगुप्सते । नियमेनोभयं स्याद्धि यस्य स्वपरयोर्मते[2] ॥ अलङ्कृतः सदैवायं दुर्घटैरेव भूषणैः । अन्धन्तमो नित्यदुःखं तस्य स्याद्वसनद्वयम् ॥ "[3]अनन्दा नाम ते लोका अन्धेन[4] तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति येऽविद्वांसो बुधो[5] जनाः" ॥ "आसुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इत्यादिश्रुतयो मानं शतशोऽत्र समन्ततः ॥ ६ ॥ ७ ॥ ॐ हेयत्वावचनाच्च ॐ ॥ ॥ ८ ॥ हेयत्वावचनाच्चैव नात्मा गौणः श्रुतौ श्रुतः । 'तमेवैकं जानथाऽन्या वाचो मुञ्चथ' चेति ह ॥ उक्त आत्मा कथं गौणो हेयपक्षे ह्यसौ श्रुतः । परिवारतया ग्राह्या अपि हेयाः प्रधानतः ॥८॥ ॥ ॐ स्वाप्ययात् ॐ ॥ ९ ॥ पूर्णस्य पूर्णमादाय पूर्णमेवाऽ-

---

[1] ययोर्मध्ये. [2] मतेन. [3] न विद्यते नन्दः=आनन्दः येषु ते. [4] अन्धयतीति अन्धं तेन. [5] बुधः=वेदात्, अविद्वांसः वेदोक्तमात्मस्वरूपमपलपन्तः.

वशिष्यते । इति स्वस्यैव पूर्णस्य पूर्णोऽप्यय उदाहृतः ॥ कथं माया व्यवच्छिन्नः पूर्णो मुख्यतया भवेत् ॥९॥ ॐ श्रुतत्वाच्च ॐ ॥ ॥ ११ ॥ पदं च निर्गुण इति कथ गौण वदिष्यति । गुणा[1]भावोप लक्ष्यं चेत्पदं तदपि वाचकम् ॥ अतोऽन्नमस्थितिमुरसर्वदोपमहास्पदम् । कथमेतन्मत सद्भिराद्रियेत विचक्षणैः ॥ न च साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीकृपत् । भगवान्न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्य[2]सौ ॥ समन्वये प्रतिज्ञाते शब्दगोचरतैव हि । प्रथमप्रतिपाद्या स्यात्तदभावे कुतोऽन्वयः ॥ कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम् । योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ॥ जन्मादिकारणे साक्षादाह देवः समन्वयम् । उक्त[3] तदेव जिज्ञास्यं कावकाशोऽत्र[4] निर्गुणे ॥ कथ[5] चाऽसम्भवस्तस्य[6] मुख्यार्थस्य निराकृतौ[7] । मानेन केन विज्ञेय-मवाच्याज्ञेयनिर्गुणम् ॥ अमेय चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन । तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम् ॥ वासुदेवाख्यमद्वन्द्वं पर ब्रह्माखिलोत्तमम् । विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः ॥ निर्गतं मनसो वाचो यदि तत्स्यादगोचरम् ॥ अस्तु तन्मा वदेद्वादी न चास-च्छास्त्रग तु तत् । अवाच्यं[8] वाच्यमित्युक्त्वा किमित्युन्मत्तवन्मृषा ॥ असच्छास्त्रस्य चौर्याय यतते स्वोक्ति[9]दूषकः । जन्मादिकारणं यत्तत्साक्षान्नारायणाभिधम् ॥ वदन्ति श्रुतयो ब्रह्म शास्त्रं चैतत्तदर्थतः । अथ्वचमस्त्ववाच्य ते नैनं ब्रूयाः कथञ्चन ॥ सर्वशब्दैरवाच्य तदुक्त्वा

---

[1] गुणाभावविदिष्वाच्यद्वारा उपलक्ष्य चेत् शुद्ध ब्रह्म । अपि – तथापि, तत्पद – लक्ष्यपद ब्रह्मणो वाचकम् [2] साङ्ख्य, सूत्रकार
[3] यत् जन्मादिकारणत्वेन उक्त तदेव [4] ततु समन्वयादिति सूत्रे
[5] न कथञ्चिदपि [6] सगुणस्य प्रसक्तेऽपि तस्य निर्गुणपरामर्शस्य
[7] त्यागे हेतुभूत असम्भव [8] अवाच्य उक्त्वा पुनश्च वाच्यं भवतीति [9] व्याहतभाषी

तद्विपर्यं पुनः । शास्त्रं वदन्तमुन्मत्तं कथं लोको न वारयेत् ॥ मा वदो मा विजानीहि त्यजासच्छास्त्रचोरताम् । वयं त्वां श्रुतियुक्तिभ्यां बध्वाऽसच्छास्त्रमञ्जसा ॥ विचारयामः श्रुतिभिर्युक्तिभिश्चैव सादरम् । [1]अद्भुतत्वादवाच्यं तदतक्र्यत्रियमेव च ॥ अनन्तगुणपूर्णत्वा[2]दित्यू[3]दे पैङ्गिनां श्रुतिः । अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि ॥ ११ ॥ ५ ॥

॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥ १२ ॥ एवं शास्त्रावगम्यत्वे विभागेन समन्वयम् । आनन्दमयइत्यादिनाऽध्यायेन वदत्यजः ॥ तत्रान्यत्र प्रसिद्धानां विष्णावेव समन्वयम् । शब्दानां प्रथमे पादे गुणिसामान्यवाचिनाम् ॥ गुणवाचिनां च प्रथममाह देवः समन्वयम् । समुद्रशायिनं सर्वप्रसूतिप्रभवं श्रुतिः ॥ तदेव ब्रह्म परममिति सावष्टतिर्जगौ । यतोऽतो ब्रह्मशब्दस्य तत्रैव नियतत्वतः ॥ 'येऽन्नंब्रह्मे'त्यादिरूपादभ्यासात्तैत्तिरीयके । अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ॥ आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् । उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम् ॥ स्वल्पाक्षरत्वेन सर्वशाखाविनिर्णये । पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम् ॥ सर्वे वेदा आमनन्ति यत्पदं त्विति हि श्रुतिः । आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः ॥ समस्ताऽब्रह्मताप्राप्तेरानन्दमयनाम हि । ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम् ॥ ब्रह्मताऽवयवेऽपि स्यात्तयाऽवयविनि स्वतः । यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ॥ दर्शिता चैव पार्थाय निःसीमाः शक्तयोऽस्य हि । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥ विष्ण्वाख्यमुक्तमन्यत्र

[1] आश्चर्यतमत्वात्, अवाच्यं = अनिर्वाच्यम्. [2] आश्चर्यतमत्वम्.
[3] वद धातोः लिटि आत्मनेपदम्. रे. ब्र.सू. ३-३-२६. शां. भाष्ये.
[4] 'देवच्छन्दांसिपूर्वाणि' इति पैङ्ग्याम्नानात्.

ह्यूर्ध्वरेतं च तत्प्रति । विरूपाक्षाख्यमपरं ब्रह्मोक्तं तद्व्रते स्थितम् ॥ समानाधिकृतत्वं चेदुत्तरं नीललोहितम् । कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति ॥ ब्रह्माधिपतिरित्यत्र तापनीयश्रुतौ पुरः । स्वरित[1]-ब्रह्मशब्दान्तं बहुव्रीहित्वमेष्यति ॥ स्वाहेन्द्रशत्रुर्वर्धस्व यद्बहुव्रीहि तामगात् । तस्मादस्येन्द्रएवाभूच्छत्रुरित्युत्तरश्रुतेः ॥ 'पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमेष्यति' । महाव्याकरणे सूत्रमिति स्वरविनिर्णये ॥ ऋतं सत्यं परं ब्रह्मेत्याद्युद्देश्यद्वितीयका । विभक्तिरूर्ध्वरेतादिः प्रथमा रुद्रगोचरा ॥ तस्माद्विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः । ऊर्ध्वरेता इति ह्येव श्रुत्यर्थोऽवसितो भवेत् ॥ ऋतं सत्यं परं ब्रह्म प्रति विष्णुं सदाशिवः । ऊर्ध्वरेता ध्यायति ह शङ्करो नीललोहितः ॥ इत्यर्थमेतमेवाह नीलग्रीवश्रुतिः परा । आथर्वणी परं ब्रह्म तस्मादेको हरिः श्रुतौ ॥ "तदेवर्त"मिति प्राह कथमेवान्यथा श्रुतिः । अवधारयन्ती तस्यैव ह्यृतत्वादिकमञ्जसा ॥ एको नारायण आसीन्न ब्रह्मा न च शंकरः । वासुदेवोऽग्र एवासीन्न ब्रह्मा न च शंकरः ॥ नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः । इत्यादिवाक्यतो विष्णोरुत्पत्तिरवतारगा ॥ मुख्यं ब्रह्म हरिस्तस्मात्प्रस्तावः परमित्यपि । मुख्यब्रह्मग्रहे युक्ते नामुख्यं युज्यते क्वचित् ॥ असम्भवे हि मुख्यस्य गौणार्थाङ्गीकृतिर्भवेत् ॥ १२ ॥ **ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ** ॥१३॥ प्राचुर्यार्थाश्च मयटः सर्वेऽत्र प्रतिपादिताः । भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेः ॥ महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत् । महाप्राणो महाबोधो महाविज्ञानवानपि ॥ विशेषसामान्यतया विज्ञानं मन इत्यपि । एकस्य ज्ञानरूपस्य हरेरुक्तिर्विभागतः ॥ अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः । भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम् ॥ ब्रूयुर्हरेर्जीवजडैरपि भेदं

[1] स्वरित ब्रह्मशब्दान्तं यस्य तत् ब्रह्माधिपतिरितिपदम्

हि मुख्यतः । ब्रह्मतर्कवचोऽप्येवमत एकः स पञ्चधा ॥ उक्तोऽन्नमय इत्यादि भृगोश्चैतद्वदिष्यति । प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते ॥ प्रचुरान्नादिरेवातो ह्यन्नमन्नमयेत्यपि । उच्यते ह्यविशेषेण नान्यत्किञ्चिदिहोच्यते ॥ १३ ॥ ॐ तद्धेतुव्यपदेशाच्च ॐ ॥१४॥ महानन्दत्व एवास्य हेतुः कोऽन्यादिति स्फुटम् । उक्तः श्रुत्यन्तरे यस्मात्सुखं लब्ध्वा करोत्ययम् ॥ करोति नासुखी भूमा सुखं नाल्पे सुखं भवेत् । इत्युक्तं यत्प्रवृत्तिश्च नृत्तगानादिका सुखात् ॥ दुःखाद्रोदादिका चैव सर्वकर्तृत्वतोऽस्य च । सर्वशक्तेर्न दुःखं स्यादतः केवललीलया ॥ प्रवर्तको न चेदेष प्राण्यादन्याच्च कः पुमान् ॥१४॥ ॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ १५ ॥ ब्रह्मवित्परमाप्नोतीति यत्प्रथमसूचितम् । तदेव मन्त्रवर्णेन सत्यं ज्ञानमनन्तवत् ॥ लक्षितं तत्र सत्यत्वं सुप्त्याद्यप्राणयोरपि । उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ॥ अनन्तत्वं तथाऽऽनन्दमयवाचाऽप्युदाहृतम् । सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते ॥ इति सुप्तिरिह प्रोक्ता जगत्सद्भावयापकम् । ब्रह्मेति स्थापनायैव सत्त्वं जीवनमेव च ॥ विशीर्णता च सत्त्वं स्यात्सन्नमित्याहुरेव यत् । अतोऽयताऽनृताऽन्नत्वं सत्यशब्दार्थ एव हि ॥ 'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये । आयुः प्राणो हि भूतानामि'ति यद्गतिजीवने ॥ उक्ते सदिति धात्वर्थौ गतिश्चातो हि सत्यता । प्राणत्वमवबोधार्थो मनुधातुः प्रकीर्तितः ॥ नाल्पे सुखमिति प्रोक्त्यैवानन्दमयतोक्तितः । अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पके ॥ अतो हि मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया । क्रियते परया यस्मात् ॥ १५ ॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥ १६ ॥ इतरोऽत्र न कथ्यते ॥ पुंस्त्वं वेत्ति यो मुच्येन्नान्यः पन्था हि विद्यते । इति श्रुतेरन्यवेदी कथं मुक्ति

प्रयास्यति ॥ पुरुषः पर आत्माऽजो ब्रह्म नारायणः प्रभुः । महानानन्द उद्विष्णुर्भग ओम इतीर्यते ॥ स्वयं नारायणो देवो नान्यसैतानि कस्यचित् । तस्मादोमित्युदाहृत्य यज्ञदानादि कुर्वते ॥ सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः । इति पैङ्गिश्रुतिस्तेन नान्यज्ञानाद्विमुच्यते ॥ ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च । तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ॥ भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः । हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ॥ आसमन्तात्काशते यदाकाशो मुख्यतो हरिः । बलज्ञानस्वरूपत्वाद्वायुरमिरगं नयन् ॥ आप आपालनाच्चैव पृथिवी प्रथितो यतः । उषानामाश्रयत्वेन स एवौषधिनामकः ॥ ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् । पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते ॥ क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः । आकाशादिषु नान्योऽस्ति ह्यभिमानोऽभिमानिनः ॥ अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भवः । एवं देहादिपर्यन्तमागतं हरिमेव तु ॥ परामृशति तस्यैव पञ्चरूपत्ववित्तये । त्यक्त्वा भूतादिकं सर्वं स वा एष इति श्रुतिः ॥ स इत्यात्मपदोद्दिष्ट एष जीवशरीरगः । साराम्नमय एवायं न लोकान्नमयः प्रभुः ॥ इति तं रसशब्देन विशिनष्टि शरीरगम् । इदमित्येव निर्देशो यस्मप्रावृत्तवद्विभोः ॥ शिर आदेर्भवेज्जीवशिरआदौ व्यवस्थितेः । तं विदित्वाऽस्य मुक्तिः स्यान्नान्यज्ञानात्कथञ्चन ॥ १६ ॥ ॐ भेदव्यपदेशाच्च ॐ ॥१७॥ आदित्ये पुरुषेऽचायमिति भेदोपदेशतः । नास्याभेदोऽस्ति जीवेन ॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ ॥१८॥ नानुमा कामचारिणी ॥ विमतानि शरीराणि मद्भोगायतनानि यत् । शरीराणीत्यादिका तु तत्त्वज्ञाने ह्यपेक्षते ॥ प्रत्यक्षादिविरुद्धत्वाद्यथागममयोज्झिता । अनुमा कामवृत्ता हि कुत्र नावसरं व्रजेत् ॥

नड आत्मैव वस्तुत्वात्प्रमेयत्वाज्जडं चितिः। घन आकाश इत्याद्या चार्यन्ते केन हेतुना ॥ न जीवभेदसूत्राणां शङ्काऽत्र पुनरुक्तता। वाक्यान्तरद्योतकत्वात्पृथगित्यत्र पूर्णता ॥१८॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥१९॥ योगमन्नमयाद्यैर्यत्फलत्वेनास्य शंसति। स्थानद्वयेऽप्यतः कोशा एत इत्यतिसाहसम् ॥ उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति। अतिक्रमं वदन्तं तमुपशब्दो निवारयेत् ॥ अश्रुतस्यातिशब्दस्य स्थानं दद्यात्कथं पुनः। श्रुताश्रुतपरित्यागकल्पने विगतह्रियाम् ॥ मृतावेव परित्यागः कृतो ह्यन्नमयस्य च। येऽन्नं ब्रह्मेत्याद्युपास्तां सामानाधिकरण्यतः ॥ उक्त्वा पञ्चस्वरूपाणां पुनस्तत्प्राप्तिवादिनी। स्थानद्वयगता वेदवाणी तदपलापिनाम् ॥ तमसोऽन्यत्र संस्थानं कथमेव सहेत सा। 'अधीहि भगवो ब्रह्मे'त्युक्तोऽन्नप्राणपूर्वकम् ॥ आह ब्रह्म कथं तन्न द्वारं तदितिवादिनः। उपसत्ति कथं विधुरुपसन्नाय हि त्रिशः ॥ वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वा। सकृद्वेत्यागमा ब्रूयुः संप्रदायविदोऽपि च ॥ तद्यत्किञ्चित्कथं ब्रूयादुपसन्नाय दिक्पतिः। न-चदेद्ब्रह्म च कथं मायावी न हि वारिराट् ॥ चष्ट इत्येव तच्चक्षुः, श्रवणाच्छ्रोत्रमुच्यते। वचनादेव वाग्ब्रह्म सृष्टिस्थित्यादिकारणम् ॥ तच्च वाधूलशाखायामष्टरूपमुदाहृतम्। विज्ञानानन्दसहितं पृथक्सृष्ट्यादिलक्षणैः ॥ आवापोद्वापतः शाखा यत आहुः परं पदम्। यतो भूतानि जायन्त इत्याद्यैर्लक्षणैः स्वयम् ॥ लक्षितं गुरुणा पश्चात्तपसैवापरोक्षितम्। दृष्टैककस्वरूपं तु समस्तोक्तानुदर्शनम् ॥ इच्छताऽऽज्ञां गुरोः प्राप्य तपसैवापरोक्षितम्। अन्नब्रह्मेत्येव वदतां श्रुतहान्यश्रुतग्रहौ ॥ साक्षाल्लक्षणतां प्राप्ताविति लज्जा तदुक्तिषु। समीपे सहभोगस्य मुक्तित्वेनोक्तितोऽसकृत् ॥ भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत्। एतेन[1] मयटश्चैव द्वैविध्येनार्थकल्पनात् ॥

[1] पञ्चानामपि ब्रह्मत्वोपपादनेन.

तदन्येषां मतमपि सत्संसत्सु न भासते । अतो नारायणो देवो निःशेषगुणवाचकैः[1] ॥ गुणिसामान्यवचनैरपि मुख्यतयोदितः । अध्यात्मगैश्च[2] प्राणाद्यैस्तथैव ह्यधिभूतगैः ॥ [3]अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः । [4]जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ॥ ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः । अन्वयः सर्वशब्दानां[5] गुणसर्वस्ववेदकः ॥ शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात्[6] । [7]अन्यार्थेष्वल्पता हेतोस्तन्निमित्तत्वतस्तथा ॥ तद्वाचकत्वं शब्दानां बहुलातिप्रयोगतः[8] । [9]रूढमित्येव साध्यं स्यात् रूढिर्हि द्विविधा मता ॥ अविद्वद्विद्वदा[10]प्त्यैव मुख्या हि विदुषां तु सा । विद्वद्रूढिर्वैदिका[11] स्यात्सा योगादेव लभ्यते ॥ तस्मान्मुख्यार्थता विष्णोरिति कृत्वा हृदि प्रभुः । समन्वयं साधयति ॥ १९ ॥ ६ ॥

॥ ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ २० ॥ देवानां [12]तत्र शक्तताम् । आशङ्क्य तत्र रूढिं च तच्छब्दानामपि [13]स्वयम् ॥ समुद्रान्तःस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढताम् । साधयित्वाऽभिदान्तैश्च पुनरेव न्यवारयत् ॥ २० ॥ ७ ॥

॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ २२ ॥ चेष्टा[14] हि चेतनानां या सा भवेत्तत्प्रसादतः । अचेतनस्वभावस्तु विवरादिः[15] कथं ततः[16] ॥ इति शङ्कानिवृत्त्यर्थमाकाश इति नाम च । परतोऽपि [17]वरीयस्त्वपूर्वाल्लिङ्गाद्धरेर्भवेत्[18] ॥ 'नमो ददाति श्वसतां मार्गं यन्नियमा[19]ददः[20] ॥ इत्यादि वाक्यैः ॥ २२ ॥ ८ ॥

---

1 वाचकैः. 2 अध्यात्मविषयैः. 3 अन्नौषध्यादिशब्दैः. 4 समन्वयसमर्थनाय आदितः सङ्गतिं दर्शयति. 5 एव. 6 सम्बन्धात्. 7 पुरन्दरादिषु. 8 हेतोः. 9 शब्दजातम्. 10 आप्तिः=सम्बन्धः. 11 वैदिकी. 12 प्रवृत्तिनिमित्तवत्तायाम्. 13 साक्षादपि विद्वत्सम्बन्धिनीमपि. 14 वर्षणशासनादिः. 15 विवरत्वादिः. 16 विष्णौ. 17 सर्वोत्तमत्वम्. 18 वाचकम्. 19 यत्प्रेरणातः. 20 भागवते.

॥ ॐ अत एव प्राणः ॐ ॥ २३ ॥ अध्यात्म-[1] मन्वयव्यतिरेकतः । प्राणादि[2]हेतुवाद्दृष्टेरतिदेशो हि तादृशः[3] ॥ लिङ्गं बलवदेव स्यात्प्रेरकोऽस्यापि यद्धरिः ॥ २३ ॥ ९ ॥ १० ॥

॥ ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॐ ॥ २५ ॥ नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः। कथं प्रसिद्धबहुलशब्दानामन्यथार्थता ॥ इति चेत्तद्धरेरेव बाहुल्यात् श्रुतिलिङ्गयोः । तादृक्त्वाच्च तच्छक्तेः ॥२५॥११॥

॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ २८ ॥ बाहुल्ये श्रुतिलिङ्गयोः । अन्यस्य मुख्यवाच्यत्वमिति तन्मात्र[4]गस्य हि ॥ विष्णोरेव तु लिङ्गानि प्राणस्थानि तु सर्वशः । प्राणसंवादपूर्वाणि मुख्यतो जीवगानि च ॥ अभ्यार्चच्छतवर्षाणि[5] प्राणं[6]वंशत्वमित्यपि[7] । तस्मादन्यत्रगैः शब्दैरुक्तन्यायैः समन्ततः ॥ एको नारायणो देवो भण्यते नात्र संशयः । वासुदेवादिरूपेण[8] चतुर्मूर्तिश्च सर्वशः[9] ॥ अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं [10]प्रति । प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा ॥ तैस्तैर्युक्ति[11]श्रुतिन्यायविशेषैर्योग्यता यथा[12] । बृहत्तन्त्रप्रमाणेन[13] बह्वर्थं[14]मपि सङ्ग्रहात् ॥ [15]उच्यते नरबुद्धीनामपि किञ्चिद्ग्रहा[16]र्थतः । ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ॥ बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः । [17]तस्मान्महागुणो विष्णु-

---

[1] शरीरे. [2] जीवनादि. [3] षष्ठ्यन्तं पूर्वोक्तसदृशस्य, परिहारन्यायस्य अतिदेशः कृतः यद्वा तादृशो ह्यतिदेशः यदाशङ्काधिक्ये सति परिहारसाम्यम्. [4] इन्द्रादिगतस्य. [5] इति. [6] चक्षुराद्याश्रयत्वम्. [7] लिङ्गानि. [8] भण्यते. [9] सर्वपादेषु. [10] प्रत्यधिकरणम्. [11] लिङ्गश्रुतिसमाख्यादिव्यावर्तकैर्विवेको ज्ञेयः. [12] एवमर्थत्वं ज्ञेयम्. [13] अनतिक्रमेण प्रतीयन्ते. [14] सूत्रजातम्. [15] व्याख्यायते. [16] ज्ञानार्थम्. [17] सर्वनामवाच्यत्वात्.

र्नाम्नामपुनरुक्तितः ॥ २८ ॥ १२ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य प्रथमः पादः॥ ॥ १ ॥ १ ॥ श्लोकसङ्ख्या २५७ ॥

॥ ॐ ॥ लिङ्गात्मकानां[1] शब्दानां वृत्तिर्नारायणे परे । चिन्त्यते, ॥ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ १ ॥ सर्वगत्वं तु[2] प्रथमं प्रविचार्यते । तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः[3] ॥ दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः । इति ज्ञापयितुम् ॥ १ ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ ४ ॥ [4]कर्मकर्त्रोरुत्सर्गतो भिदा । अभेदोऽपि विशेषे[5]स्याद्बली सोऽप्यन[6]पोदितः ॥ [7]एतद्भावाभि[8]धं लिङ्गं क्रियालिङ्गे[9] ततः परम्[10] । अन्तर्याम्यन्तरश्चेति क्रि[11]याभावाख्यमुच्यते ॥ अदृश्यत्वाद्यभावाख्यं श्रुतिलिङ्गाधिका परा[12] ॥ ४ ॥ १ ॥

॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ ९ ॥ अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता । इति चेत्स विशेषो[13]ऽपि क्रिया[14]शक्त्यात्मना स्थिरः ॥ शक्तिता[15] व्यक्तिता[16] चेति विशेषोऽपि विशेषवान् । अभिन्नोऽपि, क्रियादिश्च स्वभाव इति हि श्रुतिः ॥ 'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः । नित्यानन्दोऽव्ययः पूर्णो भगवान्विष्णुरच्युतः' ॥ इति पैङ्गिश्रुतिश्चाह 'शक्तिसद्भाव[17] एव तु । क्रियादिनित्यता ज्ञेया तदन्यत्र त्वनित्यता' ॥ इति सत्त्वचनम् ॥ ९ ॥ २ ॥

---

[1] धर्मप्रवृत्तिनिमित्तकानां. यौगिकनामिति त. प्र भावदीपे. [2] एव. [3] कार्याभिमुखीकर्ता. [4] एकक्रियायाम्. [5] अपवादे. [6] अपवादरहितः. [7] सर्वगतत्वम्. [8] क्वचित्प्रतीके स्थितिवाचकम्. [9] क्रिये च ते लिङ्गे च. [10] द्वाभ्याम्. [11] क्रियाप्रधानकः. [12] परस्मिन्. [13] धर्मः. [14] क्रियारूपः. [15] इति. [16] इ[illegible] [17] [illegible]

॥ ॐ गुहां प्रविष्टावात्मानौ[1] हि तद्दर्शनात् ॐ ॥ ११ ॥ द्वित्वं चैकस्य युज्यते ॥ ११ ॥ ॐ विशेषणाच्च ॐ ॥ १२ ॥ यः सेतुरिति [2]चैकत्ववचनेन विशेषणात् ॥१२॥ ३ ॥

॥ ॐ अन्तर उपपत्तेः ॐ ॥ १३ ॥ अन्तःस्थित्वा रमणकृदन्तरः स उदाहृतः । रमणं चात्मशब्देनाऽऽदेयं मातीति चोच्यते ॥ १३ ॥ ॐ [3]सुखविशिष्टाभिधानादेव च ॐ ॥ ॥ १५ ॥ विशिष्टसुखवत्त्वाच्च [4]ब्रह्मत्वं च विशिष्टता[5] ॥ १५ ॥

॥ ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ १७ ॥ अन्योऽन्यनियतिश्चेशनियमे[6] नान्यथा भवेत् । चेतनानां विशेषो यः स्वभावोऽपीश्वरार्पितः ॥ अन्योऽन्यनियमे तस्मादनवस्थित्यसंभवौ । ईश्वरश्चेन्नियन्ता स्यात्स एव प्रथमागतः[7] ॥ किमित्यपोद्यते[8] कस्मा-न्मृषाऽ[9]वस्थितिकल्पना[10] । [11]दोषवत्येव तस्मात्सा नैव कार्या कथञ्चन ॥ १७ ॥ ४ ॥

॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ १८ ॥ रमणं नातिपन्नस्य विक्षेपादेव युज्यते । इति चेत्मर्त्यनियमो[12] यस्य[13] कस्मान्न शक्यते[14] ॥ स्वात्मनाऽनियतं वस्तु प्रतीपं स्वात्मनो भवेत् । स्वाधीनमचाशक्यादि कथमात्म-प्रतीपकम् ॥ १८ ॥ ५ ॥

---

[1] आत्मानौ=पिप्पलौ. [2] एकत्वस्य वचनेन एकवचनेन. [3] सुखेन विशिष्टः=श्रेष्ठः, यद्वा विशिष्टे सुखे सुखविशिष्टं कडारादित्वात्परनिपातः. [4] ब्रह्मनामार्थः. [5] श्रेष्ठत्वं च. [6] मन्येव उपपन्ना भवेत्. [7] प्रथमं प्रतीतः. [8] त्यज्यते. [9] ईश्वरादित्यानामप्यग्नेः. [10] क्रियते. [11] भुक्तहानिरभुक्तफलनाशदोषः. [12] मर्त्यान्तर्यामित्वम्. [13] तस्य. [14] रमणम्.

॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥२१॥

गुणक्रियादयो भावा यदि वा स्युरभेदिनः। अभेदोऽभावधर्माणां ब्रह्मणा युज्यते कथम् ॥ नाभावो[1] भाव इति च[2] विशेषः[3] प्रायशो भवेत्। [4]अतद्भावोऽन्यता चेति न विशेषोऽस्ति कश्चन ॥ दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि। अदृश्यत्वादिकांस्तस्माद्गुणानाह स्वयं प्रभुः ॥ भावाभावविरोधोऽपि न तु सर्वत्र विद्यते। तदभावो हि तद्भावविरोधी न ततो परः॥ पृथक्त्वाभाव[5]तद्रूपा[6]न्भेदांस्त्रीन्कल्पयन्ति चेत्। कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः ॥ पृथक्त्वान्यत्व-[7]भेदास्तु [8]पर्यायेणैव लौकिकैः। व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः ॥ दृष्टहानिरदृष्टस्य कल्पनेत्येव दूषणम्। यदा तदधिको दोषो विद्यते को नु वादिनाम् ॥ भावाभावस्वरूपास्तु विशेषा[9] एव वस्तुनः[10]। अभिन्ना एव सङ्ग्राह्या व्यवहारप्रसिद्धये ॥ यथैकस्समवायोऽपि भेदा भेदौ च वस्तुनि[11]। अङ्गीकार्या विशेषेण[12] [13]स्थानेषु व्यवहर्तृभिः ॥ [14]अखण्डवादिनोऽपि स्याद्विशेषोऽनिच्छतोऽप्यसौ। व्यावृत्ते[15] निर्विशेषे तु किं व्यावर्त्यवकुरुनतः ॥ २१ ॥ ६ ॥

॥ ॐ वैश्वानरस्साधारणशब्दविशेषात् ॐ ॥

॥ २४ ॥ बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः। प्रसिद्धैरन्यगत्वेन वाच्यस्साक्षाज्जनार्दनः॥ वैश्वानरादयः शब्दा अपि तद्वाचिनस्ततः ॥२४॥

॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा

[1] प्रायश अभाव – अन्योन्याभाव इत्याद्यन्योन्याभाव इति [2] एतयो [3] भेद न भवेत्, गोत्वादिससर्गाभावस्य ब्रह्मभिन्नत्वात्, अभाववत्वस्य धर्मत्वात् [4] अतद्रत्त्वम् [5] अन्योन्याभाव [6] तद्रूपान्= धर्मिस्वरूपभेदान् इति [7] अन्योन्याभावस्वरूपभेद [8] क्रमेण [9] अतिशया एव [10] धर्मिण [11] इति व्यवहर्तृभि [12] विशेष वश्वन [13] स्वशास्त्रप्रदेशेषु [14] धर्मराहित्य [15] व्यावर्तनीये ब्रह्मणि

दृष्ट्युपदेशादसम्भवात्पुरुपविधमपि चैनमधीयते ॐ ॥ २६ ॥ तानि लिङ्गानि ते शब्दा अपि तद्वा हि[1] सर्वशः । बहुलाऽप्यङ्गरूढिस्त[2]स्माद्रूढिं न बाध्यते ॥ २६ ॥ ७ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥ २९ ॥ श्लोकसङ्ख्या २८६ ॥

॥ ॐ ॥ तत्रान्यत्र प्रसिद्धानां लिङ्ग[3]नाम्नां[4] पुनर्हरिः । विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यजः ॥ ॐ नानुमानमतच्छब्दात् ॥ ३ ॥ विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् । श्रुतिर्वक्ति ॥ ३ ॥ १ ॥

॥ ॐ भूमा[5] सं[6]प्रसादाद्ध्यु[7]पदेशात् ॐ ॥८॥ अखिलेशत्वाद् भूमा विष्णुः सुखाधिकः ॥ ८ ॥ २ ॥

॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥ अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः । योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥ अत्रैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि । [8]अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च ॥ अन्यवत्तुस्वभावानां स्थौल्यादीनामपाकृतिम् । नारायणे श्रुतिर्वक्ति न तु तस्यास्वभावताम् ॥ सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः । दोषाः श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र च ॥ ३ ॥

लिङ्गं साधारणं शब्दो [9]स्थानं लिङ्गमनुग्रहः[10] । पुनश्शब्दा लिङ्गशब्दौ[11] विचार्यो [12]द्विःस्थिता इह ॥ बाहुल्यं लिङ्गशब्दाना-

[1] विष्णुविपयाः. [2] तस्मात्. [3] यौगिकानाम्. [4] रूढानाम्.
[5] पूर्णसुखत्वात्. [6] सर्वाधिकत्वोक्तेः. [7] भूयान् धर्मिपरोऽयं शब्दः.
[8] सहैव सन्ति. [9] सृष्टिस्थानम्. [10] स्वानुकूलतया ग्रहणम्.
[11] स्वप्नादिदर्शनं ब्राह्मणशब्दाश्च. [11] विष्णु जगतोः उभयत्रप्रसिद्धाः.

मनुक्तिश्च विरुद्धता । अदृष्टिरन्वयाभावो विपरीत[1]श्रुतिभ्रमः ॥ लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा । बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ॥ समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः । ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥ सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः । मुक्तोपसृप्यता प्राणादाधिक्यं सर्वतस्तथा ॥ वैलक्षण्यं स्वभावस्य प्रेक्षापूर्वक्रिया तथा । [2]अरस्य ण्यस्य चेशत्वं सूर्याद्यनुकृतिस्तथा ॥ वामनाख्या सर्वकम्पस्तच्छब्दानन्य[3]सिद्धता । अनामरूपता भेदस्योपजीव्यप्रमाणता ॥ सैवैश्वर्यादिकाद्यास्ता वेदेशेन प्रदर्शिताः । अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ ॥ २५ ॥ ७ ॥

॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥३३॥

तत्फलाय विधिः सिद्धे[4] चोपासाया[5] निराकृतः । यतो जैमिनिनाऽ[6]न्यार्थमसिद्धेऽर्थे विधिस्तथा ॥ विद्याधिराजस्य मतमविरोधस्तयोस्ततः । मोक्षे फलविशेषोऽस्ति न च सर्वं प्रकाशते ॥ सर्वदा, तेन देवानामपि युक्ता ह्युपासना । [7]नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम् ॥ स्पष्टातिस्पष्टविशदं [8]ब्रह्मणोऽशेषवस्तुगम् । अन्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा ॥ [9]इत्यादयो विशेषास्तु सदा विद्यापतेर्हृदि[10] । जैमिन्याद्यास्तु सामान्यवेत्तृत्वात्तथाऽवदन् ॥ विधेशमतमेतस्मान्नैव सद्भिर्विरुध्यते ॥३३॥८॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥ श्लोकसंख्या ॥ २० ॥ ३०६ ॥

---

[1] अत्र न्यायविवरणं गुर्वर्थदीपिका च द्रष्टव्ये, एवं सङ्केतो नालौकिकः प्रतापरुद्रीये नाटकस्य पञ्चसन्धीनां उक्तिकाले सर्वेत्र एव सङ्केतस्य दृष्टत्वात्. [2] अरनामकस्य ण्यनामकस्य च सुधासमुद्रस्य. [3] अन्यत्रासम्भवः. [4] ज्ञाते ब्रह्मणि विषये. [5] विधिः. [6] फलान्तरार्थम्. [7] विष्णुभिन्नानां सर्वज्ञत्वासिद्धेरित्याह. [8] हिरण्यगर्भस्य. [9] मोक्षेफलविशेषोऽस्तीत्यादयः. [10] वर्तन्ते.

॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ३ ॥ दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः[1] ॥ स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि[2] कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा ॥ न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते । यावद्राज्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः ॥ भृत्यबन्धादिकं राज्ञि राज्ञो बन्धादियोग्यतः । कारणं संशयस्य स्यादिति नैव प्रयुज्यते ॥ अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले । अप्रिय[3]त्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम् ॥ गुणास्तु[4] तादृशा[5] यत्र[6] प्रयुज्यन्तेऽखिला अपि । [7]पूज्येष्वेव विशेषेण, [8]स्वातन्त्र्यं मुख्यकारणम् ॥ अतो दोषातिदूरत्वात्संशयस्याप्यसम्भवात् । दोषाणां विष्णुगत्वस्य[9] प्राज्ञबुद्धिव्यपेक्षया ॥ स्वातन्त्र्यार्थमभिप्रेत्य दोष[10]शब्दाश्च विष्णवि[11] । वासुदेवश्रुतिश्चाह 'नैव विष्णावमङ्गलम् ॥ मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलं वदेत् । स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः ॥ बहुभुक्त्वं यथा दोषो नृपु नैव हरौ क्वचित् । एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः ॥ नैव दोषा हरौ तद्बुद्ध्योक्ता दोषकारिणः । तस्माच्च दोषशब्दाश्च तत्रैव गुणवाचकाः' ॥ ३ ॥ १ ॥

॥ ॐ ज्योतिरुपक्रमात्तु तथाह्यधीयत एके ॐ ॥ ॥१०॥ [12]जातमोतं हरौ यस्माज्ज्योतिः पः प्राणरूपतः । [13]आयजेतश्चायजेतो वसन्तिश्च वसंततः[14] ॥ विगतच्छादनत्वात्तु गच्छ

---

[1] तन्निमित्तकः पराजयीति शब्दः. [2] प्रवृत्तेः. [3] अप्रीतिहेतुत्वात्. [4] गुणाभिधायिनः. [5] स्वास्थ्यनिमित्तकाः शब्दाः. [6] यर्हि तर्हि. [7] स्वामिषु [8] अतः. [9] तद्विषयकस्य. [10] दुःख्यादिदोषशब्दाः. [11] विष्णौ प्रयुज्यन्ते. [12] जन्यं, ओत=प्रविष्टं यस्मिन्. [13] सम्यक् यजेन=यज्ञेन याजकेन वा इतः प्राप्तः. [14] व्याप्तः.

भूतक्षयङ्करः । शुंश्नेत्युक्तो हरिर्हु च हुतमस्मिन् जगद्यत' ॥ [1]स्फुटत्वात्फडिति प्रोक्तः कन रक्षण इत्यतः । कवचं, [2]वर्तते यस्मात्पङ्कुणत्वेन सर्वदा ॥ वषट् वङ्गनतस्तेषा[3] वौष[3]डित्येन कथ्यते । स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दन' ॥ नमन्त्यस्मिन् गुणा यस्मान्नम इत्येव कथ्यते । इत्यशेषक्रियानामशब्दैरेको जनार्दन' ॥ उच्यते मुख्यतो यस्मात्पदवर्णस्वरात्मभिः । तस्मादनन्तगुणता[4] श्रुतितात्पर्यतोऽस्य हि ॥ विज्ञानार्थत्वतः[5] सर्वशब्दाना नास्ति दूषणम्[6] । अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये ॥ तदर्थत्वेन कर्मादेः [7]सम्भवादल्पबुद्धये[8] । 'कश्छन्दसा योगमि'ति श्रुतेयोगार्थ तद्वचनित् ॥ अर्थको नैव चान्योऽस्ति क इत्यसोमयार्थतः । तस्यापि पूर्वसिद्धस्य[9] ज्ञानमेवति निश्चयात् ॥ [10]नित्ययोगोऽपि शब्दानामर्थेनैव निषिध्यते ॥ १० ॥ २ ॥

॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥ ॥ २४ ॥ ॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ २९ ॥ [11]स्त्रीशब्दाश्च निये[12]धार्थाः सर्वेऽपि ब्रह्मवाचका' ॥ ॥ ६ ॥ ७ ॥ विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् । पृथक्समन्वयार्थानि स्थाना [13]न्येतानि सर्वशः ॥ सर्वमानाविरोधश्च व्युत्पत्तेरप्यशक्यता । परस्परविरोधश्च विरोध' कार्यतद्वतोः ॥ स्त्रीलिङ्गत्त्व निषेधश्च पूर्वपक्षेषु युक्तयः । दोषाल्पस्पृष्टिनियमः शब्दार्थानेकता तथा ॥ बहुरूपत्वमीशस्य व्यक्त्यव्यक्तिविशेषिता । उत्पादनं स्वदेहाच

[1] स्वात्मानमभितिन्यक्तत्वात् [2] इति च [3] वौ=विष्णौ, स्थिता [4] सिद्ध्यति [5] परमात्मज्ञानार्थत्वात [6] अनित्यत्वादि [7] न वाक्यान्वयानुपपत्ति [8] बुद्धये-बुद्धीनाम् [9] स्थितस्य, ज्ञातस्य [10] अर्थ नित्यसम्बन्ध [11] स्त्रीलिङ्गा मह्यादि शब्दा [12] अस दादय [13] अधिकरणानि

दुर्जेनाव्यक्तता तथा । इत्यादियुक्तयः साक्षात्सिद्धान्तस्थापिका इह ॥ ॥ ८ ॥ ॐ समाकर्षात् ॐ ॥ १६ ॥ अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा । इति [1]यच्छोकवैमुख्यं जैमिन्यादिमतं वदन् ॥ विद्याधिनाथो भगवानपाचक्रे स्वयं प्रभुः । स्वशिष्याणां प्रसिद्ध्यर्थं मतमात्मीयमंशतः ॥ विज्ञातं तैर्जगदात्र [2]तारतम्यं [3]नृणां वदन् ॥ ॥ ५ ॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥ ॥ ११ ॥ तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः । प्रयोजनबहुत्वेन तस्य [4]तस्याविरोधतः ॥ [5]उपदेशादि सामर्थ्याद्विष्णौ शक्तिश्च गृह्यते । तथाप्येतद्विरोधे तु तद्वाचित्वमपोद्यते ॥ अविरोधे तु [6]बह्वर्था एतन्मूलतया मताः । इतो हि रूढताऽन्येषा[7]मुपजीव्यत्वमत्र हि ॥ तत्सिद्धि[8]स्तदपेक्षा[9] च[10] साऽपेक्षा च हरीच्छया । तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता ॥ उपलक्षणा च गौणी च[11] तिस्रः शब्दस्य वृत्तयः । [12]प्रवृत्तिहेतोर्बाहुल्यं[13] ज्ञेयं परममुख्यता ॥ तत्र प्रयोगबाहुल्यं यदि [14]तत्परता किमु । उभयं दृश्यते विष्णौ शब्दानामपि सर्वशः ॥ प्रयोगमात्रबाहुल्यं[15] रूढिरित्यभिधीयते । प्रयोग[16]युक्तमादृश्यं मम्बन्धो चाप्यमुख्यतः[17] ॥ [18]वृत्तिहेतुरिति ज्ञेयः [19]पूर्वायोगेऽपर[20]ग्रहः । एतमेव तथा मन्त्रं शतर्चीत्यादिनामभिः ॥ आचक्षत इति ह्यत्र [21]सन्तमि[22]त्यवधारणात्(णा) । योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम् ॥

---

[1] मन्दानां मोक्षे विमुखत्वं अपाचक्रे. [2] अवस्थातारतम्यम्. [3] अल्पाधिकारिणाम्. [4] अर्थस्यापरित्यागेन. [5] श्रुतिलिङ्गादि. [6] अनेकार्थाः. [7] पुरन्दरादीनां रूढता इतो हि—विष्णोरेव. [8-10] तच्छब्दप्रवृत्तिप्रतीतिरेव. [9] अर्थान्तरापेक्षावती. [11] सा. अपेक्षा – विष्णौ शब्दानाम्. [12-13] अर्थान्तरापेक्षा. [14] तस्याः मुख्यता. [15] यत्र तत्र. [16] मुख्यार्थेन. [17-18] अमुख्यवृत्तेर्हेतु. [19] मुख्यासम्भवे. [20] उत्तरस्यामुख्यस्य स्वीकारः. [21] सन्तमिति वचनात्. [22] एतमेवेति.

बहुशो दर्शयत्यजस्तात्पर्यात्सनिरुक्तिकम् । अ इति ब्रह्म कथित तद्व्याख्यानात्मता तथा ॥ शब्दानामपि सर्वेषां, [1]नामविल्कृतकृत्यता,। [2]विष्णुनामार्थरूपत्वं संहितादेरथाब्रवीत् ॥ णकारं च षकारं च बल चेष्टात्मकं वदन् । तज्ज्ञानपूर्वकत्वेन संहिताध्ययनं[3] तथा ॥ उप सर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा । णकारश्च षकारश्च नामरूप तया मतौ ॥ तस्मात्समन्वयो विष्णौ स्वरवर्णपदात्मनः । अपि वेदस्य किमुत वाक्यरूपेण सङ्गतिः[4] ॥ घोषाः सर्वेऽपि वेदाश्च सर्वे वेदाश्च यत्पदम् । इन्द्रं मित्रं यमिन्द्रं च प्रथमः सङ्गतिस्तथा ॥ नामधाः सर्वदेवानामेक इत्यादिका श्रुतिः । प्रमाणसूक्तविषये तदेवोक्तं'श्रुपक्रमात्' ॥ इति स्वयं भगवता ब्रुवताऽशेषमन्वयम् ॥२॥

[5]न शब्दवाच्यतैवात्र[6] प्रधानस्य निषिध्यते । सर्ववेदेतिहासेषु पुराणेषु च[7] सङ्ग्रहात् ॥ [8]सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ॥ निबध्नन्ति महाबाहो देहे देहिनमव्ययम् । इत्यादिवाक्य[9]रूपेण यत्रार्थो नान्य[10] इष्यते ॥ तेजोऽब्वन्नात्मकं वाऽपि यद्युपादान मिष्यते । अनाद्येवापराधः कः प्रधानमिति चोदिते ॥ अजामेका- मिति प्राह श्रुतिरेता यदा तदा । को दोषः सर्वथैवास्ति परिणामि जडं यदि ॥ [11]अस्माकं परमुख्यार्थो भगवानेक एव तु । मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ॥ सर्वेषामपि शब्दानां गौणाद्य तदयोगतः । अर्थद्वयमभिप्रेत्य [12]प्रवृत्ते हरिरुक्तवान् ॥ '[13]कार्याणा

[1] तृतीयमानमिदछान्दोग्य नामब्रानिनो मुक्त्त्वम् [2] चतुर्थमान, ऐतरेयोपनिषत् [3] अब्रवीत् [4] समन्वय [5] अद्वैति व्याख्यान निराह दशचार योजनाऽस्य वाक्यस्य सुधायाम् [6] अत्रैव–प्रथमाध्याये [7] प्रधानस्य [8] गीता १४ ५ [9] वाक्यबोधेन त्रिगुणत्वादिना युक्तस्य प्रधानस्य सङ्ग्रहात् [10] ब्रह्मरूप [11] तु मते [12] प्रवृत्तनामके पञ्चरात्रैकदेश जितन्तेस्तोत्रे [13] महदादीनाम्

कारणं [1]पूर्वं वचसां वाच्यमुत्तमम् । योगानां[2] परमां सिद्धिं[3] परमं ते पदं विदुः' ॥ इति, बुद्धौ समारोहादुभयोर्योगरूढयोः । त्यागे च कारणाभावादुभयार्थत्वमिष्यते ॥ विपरीतप्रमा[4]भावे [5]पूर्वारोहस्तु कारणम्[6] । सा भवेद्यत्र स व्यर्थः पूर्वारोहो भ्रमो यथा ॥ अतो-जगदुपादानं प्रधानं वक्ति सा श्रुतिः[7] ॥ १ ॥ 'यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ पञ्चभिः पञ्चभिर्ब्रह्म[8] चतुर्भिर्दशभिस्तथा । एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः' ॥ इति भागवते प्राह विद्याधीशः स्वयं प्रभुः ॥२॥ न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते । 'अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः ॥ सदैकरूपविज्ञानबलआनन्दरूपकः' । 'निर्विकारोऽक्षरः शुद्धो निरातङ्कोऽजरोऽमरः ॥ अविद्यो विश्वकर्ताऽजो यः परः सोऽभिधीयते' । 'निर्विकारमनौपम्यं सदैकरसमक्षयम् ॥ ब्रह्मेति परमात्मेति यं विदुर्वैदिका जनाः' । इति श्रुतिपुराणोक्त्या न विकारी जनार्दनः ॥ पराधीनविशेषा[9]प्तिरनिवर्त्यो[10]ऽन्यथाभवः[11] । क्षीरादिवद्विकारः स्यान्नैव स स्याद्धरेः क्वचित् ॥ अपादान[12]त्वमेवास्य यद्युपादानतेष्यते । अङ्गीकृतं तत्पितृवन्न तु विश्वात्मना भवः ॥ न चोर्णनाभिजनिलूमातॄणां च विकारिता । चेतनत्वात्तदन्नं हि कार्यरूपतया भवेत् ॥ अपादानतया विश्वकर्तृत्वं बुद्धिपूर्वकम् । उक्तं [13]भाल्लविशाखायां ब्रह्मतर्के च सादरम् ॥ 'इच्छामात्रात्प्रभोः सृष्टि-रविकारस्य सर्वदा ॥ स्वभावोऽयमनन्तस्य [14]रजो येना[15]भवज्जगत्'[16] ।

[1] मुख्यम्. [2] योगवृत्तीनाम्. [3] सिध्यन्ति अत्रेति सिद्धिः [4] बाधकज्ञानाभावे. [5] पूर्वप्रतीतिः. [6] स्वीकारकारणम्. [7] अजामेकामिति-श्रुतिः. [8] पूर्णम्. [9] धर्मपरिवृत्तिः धर्मिपरिवृत्तिश्च. [10] निवर्त्यश्च. [11] परिणामः. [12] अपायावधित्वम्. [13] भाल्लविश्रुतिः न अप्रसिद्धा ब्र.सू. ३-३-२६. शां. भाष्ये. तद्यथा भाल्लविनां कुशा वानस्पत्या स्थिता मापात' इति निगमे, इत्युक्तेः. [14] गुणत्रयात्मकम्. [15] प्रेरितम्. [16] भाल्लवश्रुतिः.

'स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः ॥ ससर्ज मातापितृवदूर्णनाभिवदेव वा । प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा'॥ न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम् । नाचेतनविकारोऽपि चेतनः स्यात्कदाचन ॥ न चान्यस्यान्यरूपत्वं[2] [3]विकृतत्वेऽपि दृश्यते । न क्षीरादन्यता दध्न केनचिद्दृश्यते क्वचित् ॥ सर्वज्ञाद्ब्रह्मणोऽन्यत्वं जगतो ह्यनुभूयते । अभेदः सत्त्वमात्रेण[4] स्यात्सर्व[5]स्वर्णयोरपि ॥ [6]भागेन परिणामश्चे द्भागयोर्भेद एव हि । यो भागो[7] न विकारी स्यात्स एवास्माकमीश्वरः ॥ [8]भिन्नाना समुदायस्य नाम[9] ब्रह्मेति त (चे)द्भवेत् । ब्रह्मोपादानता न स्यात्तदा विश्वस्य हि क्वचित् ॥ शृङ्गाच्छरोऽविलोमभ्यो दूर्वा, गोमयतस्तथा । वृश्चिकश्चेत्येवमाद्यैऽप्युपादानत्वमिष्यते ॥ उपादानैक देशत्वं यद्यप्यत्र प्रदृश्यते । अप्युपादानतैवात्र दृष्टान्तो ब्रह्मणो भवत् ॥ न ह्युपादानतैवात्र वाह्यावयवगौरवात्[10] । न चाचेतनतस्तत्र चेतनस्य समुद्भवः ॥ उपादानतया, किं तर्ह्युपादानं ह्यचेतनम् । कार्यदेह गतस्यास्य चेतनस्य प्रदृश्यते ॥ [11]सच्च त्यच्चाभवदिति नास्य विश्वत्व मुच्यते । तत्सृष्ट्वेति गिरैवास्य पूर्वं विश्वस्य सिद्धितः ॥ [12]सत्त्वात्तते[13] वदिकरत्वात्सम्यग्वक्तुमशक्यतः । आश्रयत्वात्स्वाश्रयत्वाज्ज्ञानत्वा दुर्विदत्वतः ॥ [14]सत्ततेर्यातनाच्चैव[15] [16]ह्यप्राप्यत्वाच्च दुर्जनैः । नित्य साधुगुणव्याप्तियन्तृ[17]रूपत्वतः सदा ॥ जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते । व्यक्तिरस्य गुणानां हि पुरुषापेक्षया नृणाम् ॥

---

[1] ब्रह्मतर्के [2] अन्यविकारत्वम् [3] विकृतत्वदशायाम् [4] साध्यते चेत् [5] अथ स्वर्णं वा (इत्थु) [6] स्वभागेन [7] चिद्भाग [8] सदानन्दचिताम् [9] ब्रह्मेतिनाम [10] कार्यादि वाह्यावयवाना वहुत्वात् [11] इति ब्रह्मणो जगदुपादनत्वाभावे श्रुतियुक्तिनिरास अथ उपादानत्वे परोक्तश्रुति निरास [12] सत् [13] तत् [14] सम्यग्व्याते सत्-सती, न् तति यस्य तत् सत् सत् च तत् य च सत्य (दा या चं) [15] प्रयत्नहेतुत्वात् प्रेरणात् [16] अनृतम् [17] सत्यम्

भवेदभवदित्याद्यः प्र(त्यस्मात्प्र)योगश्चात्र युज्यते । तस्मादशेषकर्तृको निर्विकारो रमापतिः ॥ शब्दैः प्रकृतिरित्याद्यैः स्त्रीलिङ्गैरभिधीयते । बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते ॥ तत्तद्गतेन रूपेण [1]तदर्थं ह्यसृजञ्जगत् । [2]यच्चाविकृतमेवैकं ब्रह्म विश्वात्मना [3]मृषा ॥ दृश्यते मन्ददृष्ट्यैव[4] स सर्ग इति कथ्यते । सा [5]मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यथा[6] ॥ ब्रह्मणश्चेत्क सार्वज्ञमन्यथा चेत्स्वतोऽन्यता । नादेह-[7]योगिनो [8]दृष्टिरिति [9]तत्कारणं [10]स्वतः ॥ देहिनः कारणयुता देहाश्च यदि न भ्रमात् । किं भ्रान्तिकल्पितं तत्र भेदोऽपि भ्रमजो [11]यदि ॥ भ्रान्तेरज्ञानमूलत्वात्तस्य भेदव्यपेक्षया[12] । नाज्ञानकल्पकं किञ्चिदन्योऽन्याश्रयता[13] यतः ॥ [14]भ्रमत्वे त्विय[15]मुक्तिश्च तदन्तःपतनान्न[16] हि । व्यावहारिकता [17]चास्य स्याद्बाध्यत्व एव हि ॥ बाध्यं नार्थक्रियाकारि, न च स्वमोऽपि नो मृषा । वासनाजनितत्वेन तस्याप्यङ्गीकृतत्वतः ॥ 'स हि कर्तेति' वाक्याच्च जाग्रत्त्व[18]मिति हि भ्रमः । [19]सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् ॥ तदेवार्थक्रियाकारि तत्सदेवार्थकारकम् । ब्रह्म त्वर्थक्रियाकारि [20]परतः स्वत एव वा ॥ अङ्गीकृतं हि तेनैव परतस्त्वे न च प्रमा । अमुख्यसत्यमानस्य साधकत्वे सदाद्वयोः ॥ न हि सम्प्रतिपत्तिः स्यादतस्तिष्ठतु सा प्रमा । न हि विप्रतिपन्नेन शक्यं साधयितुं क्वचित् ॥

---

[1] नियामकत्वद्युरूपत्वार्थम्. [2] विवर्तवाद निरासारम्भः. [3] मिथ्या अनिर्वचनीयतया. [4] मन्दा दृष्टिर्यया मायया भ्रान्त्या च. [5] माया अज्ञानम्. [6] जीवगता. [7] देहसम्बन्धरहितस्य. [8] पदार्थदर्शनम्. [9] इन्द्रियदेहादि. [10] कल्पनां विना अस्ति. [11] तत्र अन्योन्याश्रयता स्यात्. [12] स्थितत्वात्. [13] चक्रकम्. [14] देहादेः भ्रान्तिसिद्धत्वे. [15] नेहनानेति श्रुतिः. [16] मिथ्या स्यात्. [17] प्रपञ्चस्य. [18] आत्मस्थलीनवस्त्वैक्यम्. [19] अभ्युपगमवादोऽयं, सर्पतया मातरज्जोरेव भयहेतुत्वात् इति ३. २. ४ तत्त्वप्र. भावदीपे स्पष्टम्. [20] मायातः.

साधकत्वं तु सत्यस्य साक्षिणो ह्यावयोर्द्वयोः । सम्यक्सम्प्रतिपन्न तन्न विवर्तमतं भवेत् ॥ यदि नाङ्गीकृतं किञ्चिदनङ्गीकृतताऽपि हि । नाङ्गीकृतेति मूकः स्यादिति नास्मद्विवादिता ॥ 'विश्वं सत्य' 'यच्चिकेत' 'प्रधान्वस्य' [1]यथार्थतः । इत्यादिश्रुतयः सर्वा विश्वसत्यत्ववाचिकाः ॥ सत्यत्वं [2]गगनादेश्च साक्षिप्रत्यक्षसाधितम् । साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोषतः ॥ सर्वकालेऽप्यबाध्यत्वं साक्षिणैव प्रतीयते । कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतितः ॥ अतीतानागतौ कालावपि नासाक्षिगोचरौ । पक्षीकर्तुमशक्यत्वान्नानुमा तत्र वर्तते ॥ [3]तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते ॥ तस्मान्न तं विना किञ्चित्स्मर्तुं द्रष्टुमथापि वा । शक्यं तन्नित्यसिद्धेर्हि नानुमाऽवसरो भवेत् ॥ अतोऽदोष[4]प्रतीतस्य[5] सत्यत्वं साक्षिणा मतम् । परीक्षादेश्च [6]सत्यत्वं तेन ह्येव मतं भवेत् ॥ अन्यथा श्रुतियुक्त्यादिप्रमाणैश्च सहैव तु । अकस्माद्विनिवृत्तिश्च किं [7]विश्वस्य न शङ्क्यते ॥ इतः पूर्वं [8]तथा भावाद्यदि[9] नो [10]ससृतेर्गति [11] । [12]वाक्यानुमादितश्चेत्स्यात्तत्प्रामाण्यं च साक्षितः ॥ तत्प्रामाण्य यथा [13]साक्षी स्थापयत्येवमेव हि । सर्वकालेऽपि स्थैर्याव्यभिचारमपोह्य च[14]॥ एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् । किमिति स्थापयेन्नाय निर्दोषज्ञानशक्तितः ॥ एकाज्ञानकृतं[15] विश्वमिति यच्चोच्यते मृषा[16] । बह्वज्ञानकृत विश्वमिति तस्योत्तर भवेत् ॥ परस्य सत्यता जानन्नपि यः [17]स्वात्मतस्करः । परो नास्तीति वदति किमित्युन्मत्तवद्वदेत् ॥

1 याथातथ्यतोऽर्थान् 2 आकाशकाल्योः साधकानुमाननिरास विस्तार सुधायाम् 3 एतदिति दृश्यं तदिति स्मृतिगोचरम् 4 दोष रहितेन प्रत्यक्षादिना 5 प्रपञ्चस्य 6 यथार्थत्वम् 7 पूर्णस्य ब्रह्मणः 8 निवृत्त्यभावात् 9 यदि ब्रह्मणो निवृत्तिर्न शङ्क्यते 10 अविद्यायाः 11 निवृत्ति 12 श्रुति 13 वर्तमानकालीनम् 14 एवं स्थापयति 15 एकजीवगताज्ञानकृतम् 16 प्रमाणेनविना 17 स्वानुभवापलापक

पराभावेऽपि वाग्व्यर्था, यदि नैवोच्यते तदा। कशावेत्रादिकं तस्य [1]तस्करस्योत्तरं वदेत्॥ [2]प्रपञ्चो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥ विकल्पो विनिवर्तेत कल्पितो यदि केनचित्। उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते॥ इत्यत्र यदि शब्दौ च निवर्तेतेति च द्वयम्। विश्वस्य सत्यतामाहुर्विद्येतो[3]-त्पत्तिमेव[4] च॥ विद्येतोत्पत्तावित्ति ह्यस्माद्धातोरुत्पत्तिरेव हि। निवृत्ति[5]-व्याप्तियुक् [6]प्रायः [7]प्रपञ्चो भेदपञ्चकः॥ जीवेश्वरभिदा चैव जडेश्वरभिदा तथा। जीवभेदो मिथश्चैव जडजीवभिदा तथा॥ मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः॥ सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात्। द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्॥ इति श्रुतेर्मितं त्रातं मायाख्य-हरिविद्यया। उत्तमोऽर्थो हरिस्त्वेकः तदन्यन्मध्यमाधमम्॥ [8]वाचारब्धं तु [9]साङ्केत्यनाम स्याद्विकृतं[10] बहु[11]। नित्यं तु नामधेयं यन्मृत्तिकेत्यादि वैदिकम्॥ भायान्याज्ञत्परिज्ञानात्प्राकृता[12]ज्ञोऽपि पूरुषः। विद्वा-नित्युच्यते सद्भिरेवं नित्यपरात्मवित्[14]॥ [15]सदातनं सत्यमिति नित्यमेवोच्यते बुधैः। प्रयोगश्चोत्तरश्चास्ति 'जरा वधेन[16]माप्नुयात्॥ देहः प्रध्वंसते [17]चायं किं [18]ततोऽ[19]स्याति[20]शिष्यते। हन्यते न वधेनायं जरया च न जीर्यते॥ एतत्सत्यं[21] [22]ब्रह्मपुरमि'ति नित्यत्व एव हि। वाचारम्भणमित्युक्ते[23] मिथ्ये[24]त्यश्रुतकल्पनम्॥ पुनरुक्ति-

---

[1] सकललोकावगतार्थप्रलापिनः. [2] माण्डूकोपनिषदेवेयं न गौडपाद-कारिका नचैतौ श्लोकौ भवत इत्यारभ्य प्रवृत्तत्वात् तदप्येव श्लोकौ भवतीतिवत्. [3] विद्येत इत्येतत्. [4] आह. [5] विनाशेन. [6] प्रध्वंसाभावे नाशाभावात्प्रायः इति. [7] प्रपञ्चशब्दार्थः. [8] वाचा आरम्भणम्. [9] प्राकृतभाषाशब्दः. [10] विक्रियते इति विकारः. [11] विविधः कारः विकार इत्यस्यार्थः. [12] प्रकृतिनिर्मितस्य सर्वस्य अज्ञानवान्. [14] विद्वानित्युच्यते. [15] सदाभवम्. [16] देहम्. [17] वा. [18] तदा. [19] देहस्यान्तर्गत हरिः. [20] अविशिष्यते. [21] नित्यम्. [22] पूर्णम्. [23] शब्दे. [24] व्याख्यायमाने.

नामधेय[1]मितीत्यस्य[2] निरर्थता । एकः पिण्डो मणिश्चेति पदद्वैय[3]र्थ्यमेव च ॥ विकारित्वविवक्षायां न चैकनखकृन्तनम् । सर्वं कार्ष्णायसं च स्यादतः सादृश्य एव च ॥ विवक्षाऽत्र[4] तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना[5] । प्राधान्यप्रतिपत्त्यर्थं सृष्ट्यादेश्चैष विस्तरः ॥ तस्मात्केनापि मार्गेण न विवर्तमतं भवेत्[6] । तदसह्ख्यातदोषेतं हेयमेव शुभार्थिभिः ॥ असङ्ख्यत्वेन दोषाणां ग्रन्थाधिक्यभयादपि । उपरम्यते [7]ततो विष्णुरिच्छापूर्वकमव्ययः ॥ करोति पितृवद्विश्वं पूर्णाशेषगुणात्मकः ॥ ६ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥ ॥ श्लोकसङ्ख्या ॥ २७ ॥ ४३१ ॥ प्रथमाध्यायस्समाप्तः ॥

---

[1] अनेन पुनरुक्ति विरुद्धार्थत्व च. [2] मृत्तिकेति इति शब्दस्य. [3] विगतार्थत्व [4] श्रुतौ. [5] प्राधान्ये च विवक्षा [6] उपपन्नम् [7] परिणामवादस्य निरस्तत्वात्

## ॥ अथ द्वितीयाध्यायः ॥

॥ ॐ ॥ उक्तः समन्वयः साक्षादविरोधोऽत्र साध्यते । चतुर्विधस्य तस्यादौ योक्तस्तत्रापि च स्मृतेः ॥ तस्याश्चतुस्स्वरूपत्वात्प्रत्येकं चतुरात्मकाः[1] । पादाः[2] सर्वे तदंशाश्च[3] मूर्तीनां[4], [5]वर्णमागमात्[6] ॥ आप्तता समताऽदृष्टिश्रुतिसाम्यबलोद्भवाः । सर्वानुसारो लघुता विशेषादर्शनाफले ॥ इष्टासिद्धिश्च नियमः पूर्वपक्षेषु युक्तयः । एता एव त्वतिबलाः सिद्धान्तस्य नियामिकाः ॥ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ १ ॥ आप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थं कथं श्रुतिः । पिपीलिकालिपिनिभा वारये[7]त्सर्वगा हि ते ॥ इति चेद्यद्य[8]शेषज्ञा रुद्राद्या हरिपूर्वकाः । किं नाशेषविदो मानं ह्युभयत्र[10] [11]समं भवेत् ॥ न चाप्तिनिश्चयस्तत्र[12] शक्यते व्यभिचारतः[13] । न चास्या[14] व्यभिचारेऽपि[15] हीयते मानता क्वचित् ॥ [16]निर्दोषवाक्यमूलत्वान्न च तद्युक्तिमूलता । वेदोक्त[18]स्याधिकारस्य[19] दुर्निरूपत्वतः[20] सदा[21] ॥ नियमो व्यभिचारो[22] वा नैव ज्ञातुं हि शक्यते । अधिकारो[23] हि सुलभः कथितोऽन्यागमेष्वलम् ॥ वेदोक्तो ह्यधिकारस्तु दुर्लभस्सर्वमानुषैः । अन्यागमेषु विप्रत्वमपि चण्डालजन्मनाम् ॥ मण्डलान्तः-

---

[1] पादचतुष्टयार्थवन्तः. [2] चत्वारोऽपि. [3] पादरूपांशवन्तः अध्यायाश्च चतुरात्मकाः. [4] चतुर्मूर्तीनां प्रतिपादकत्वेनापि चतुरात्मकत्वम्. [5] आ वर्णम्-एकैकवर्णमारभ्य. [6] आ आगमात्-सर्वशास्त्रपर्यन्तं तेन मूर्तयः प्रतिपाद्याः. [7] सर्वज्ञाः. [8] चेत् तद्य. [10] द्वयोः स्मृत्योर्मध्ये यत्. [11] मया मूलप्रमाणेनसहितम्. [12] शिवादिषु. [13] अन्योन्यविरोधात्. [14] पञ्चरात्रादि स्मृतेः. [15] फलव्यभिचारेऽपि. [16] वेदमूलत्वात्. [18] अनुष्ठाने उपयुक्तस्य. [19] निषेकादिसंस्कारस्य. [20] अस्मदाद्यप्रत्यक्षत्वतः. [21] स्वभावतः. [22] फलस्य. [23] साधनं च.

प्रवेशेन क्रमशः प्रतिपाद्यते । अधिकारं दुरापाद्यमुक्त्वाऽतिसुलभं पुनः[1] ॥ अशक्यं साधनं चोक्त्वा सुशकं तत्फलाप्तये । उच्यतेऽतत्तदुक्तं हि व्यभिचारि फले[2]ऽपि तु ॥ कथं प्रमाणतां गच्छेत् ॥१॥

॥ ॐ [3]न [4]त्रिलक्षणत्वादस्य[5] [6]तथात्वं च शब्दात् ॐ ॥ ४ ॥ नित्यत्वात्पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेत् ॥ 'विरूप नित्यया वाचा नित्ययाऽनित्यया सदा'[7] । इत्यादिश्रुतिभिर्वेदो नित्य इत्यवगम्यते ॥ पिपीलिकालिपिश्चापि [8]प्रमाणमविरोधतः । यथा द्रौणिरुल्लकेन कृतमप्यास बोधकम् ॥ अविरुद्धं [9]विरुद्धं तु विरोधादेव बाधितम् । विरोधादर्शनात्तस्माद्वेदप्रामाण्यमिष्यते ॥ तन्मूलत्वात्स्मृतीनां तु[10] विरोधो [11]यत्र न क्वचित् । [12]विरोधोऽपि स एवोक्तः[13] प्रत्यक्षेणागमेन वा ॥ आगमेनागमस्यैव विरोधे [14]युक्तिरिष्यते । उपजीव्याविरोधे तु वेदस्यान्यार्थकल्पना ॥ प्रत्यक्षमुपजीव्यं स्यात्प्रायो युक्तिरपि क्वचित् । आगमैकप्रमाणेषु तस्यैव ह्युपजीव्यता ॥ [15]युक्तोऽयुक्तश्च यद्यर्थ आगमस्य प्रतीयते । स्यात्तत्र[16] युक्त एवार्थो युक्तिश्च त्रिविधा मता ॥ व्याप्तिः प्रत्यक्षगा[17] यस्या युक्तिगाऽऽगमगा तथा । प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी ॥ याथार्थ्यमेव [20]मानत्वं तन्मुख्यं ज्ञानशब्दयोः[20] । अर्थत्वमर्यतैव[21] स्यान्न क्रियार्थेषु सा मता ॥ [22]ज्ञानार्थे ज्ञेयता मुख्या

---

[1] ब्रवीति. [2] फलविपर्ययेऽपि व्यभिचारि. [3] न अप्रामाण्यम्. [4] नित्यत्वात्. [5] वेदादेः. [6] नित्यत्वम्. [7] सदा विद्यमानया. [8] प्रमा भावसाधनं सामानाधिकरण्यं गौणम्. [9] प्रमाणविरुद्धम्. [10] प्रामाण्यमिष्यते. [11] यासु स्मृतिषु. [12] प्रमाणविरोधः [13] विरोधादेव बाधितमित्युक्तः. [14] मीमांसाशास्त्रे. [15] युक्त्युपेतः. [16] तर्हि. [17] प्रत्यक्षगम्या. [20] प्रमाणलक्षणम्, वेदम्. [21] अर्यता, आर्यता, ज्ञेयता. [22] ज्ञानविषये.

शब्दार्थे[1] [2]तदनन्तरम् ॥ यथार्थज्ञानजनका [3]यथार्था [4]युक्तयः स्मृताः । अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः ॥ प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते । याथार्थ्यमेव प्रामाण्यशब्दार्थो [5]यद्विवक्षितः ॥ अङ्गीकृतं चेत्प्रामाण्यं [6]स्मृत्यादेः का विरुद्धता । न चाफलत्वं वक्तव्यं सर्वस्मृत्यनुवादयोः ॥ फलवत्त्वं न चास्माभिः प्रामाण्यं हि विवक्षितम् । तृणादिदर्शने[7] किं[8] च फलवत्त्वं निगद्यते ॥ सुखदुःखादिकं किञ्चित्स्मृतावपि हि दृश्यते । न परिच्छेद[9]कार्येव प्रमाणमिति[10] च [11]प्रमा ॥ निर्दोषाक्षोद्भवं ह्यत्र प्रत्यक्षमिति गीयते । प्राकृतं शुद्धचैतन्य[12]मक्षं तु द्विविधं मतम् ॥ शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतम् । निर्दोषमेव चैतन्य[13]मन्यत्रो[14]भयमिष्यते ॥ सुखदुःखादिविषयं[15] शुद्धं संसारगेष्वपि । निर्दोषत्वातिनियमासङ्कलिप्ततमं मतम् ॥ पञ्चेन्द्रियमनोभेदात्प्राकृतं षड्विधं स्मृतम् । अनुमा [16]युक्तिरेवोक्ता व्याप्तिरेव तु सा [17]स्मृता ॥ प्रतिज्ञातार्थसिध्यर्थं व्याप्तिरेव[18] यदोदिता । अवशिष्टं किमत्रास्ति लिङ्गं तत्र विजानतः ॥ यदि लिङ्गमसिद्धं स्यात्कुत एवास्य मानता । यदि स्मारक[19]मात्रं स्यात्स्मर्तु[20]र्नात्र[21] प्रयोजनम् ॥ न पञ्चावयवोक्तौ च विवादावसितिर्भवेत् । दृष्टान्तादिषु चैनं स्यात्साधनं पुनरेव[22] तु ॥ लिङ्गोक्तावपि चैनं स्यादनुमाऽवसितिर्ध्रुवा । विरोधोऽसङ्गतिश्चैव साक्षाद्युक्तेस्तु

---

[1] शब्दविषये　[2] ज्ञेयता अनुव्येति यावत्　[3] याथातथ्योपेताः. [4] युक्त्यादयः. [5] यत्-यदा. [6] स्मरणादेः. [7] दर्शनस्य. [8] किं फलवत्त्वम्. [9] ज्ञातताजनकम्. [10] इत्यत्र. [11] प्रमाणम्. [12] इति. [13] सञ्जीरचेतन्यम्. [14] मध्यमजीवेषु. [15] सुखादिविषयकम्. [16] युज्यत एव. न तु वियुज्यतेऽपि, व्याप्यमित्यर्थः. [17] प्रमिता. [18] व्याप्त्युपदेश एव. [19] परोपदेशवाक्यम्. [20] व्याप्तिवचने सत्येव स्मर्तुः. [21] स्मरणाद्युपपत्तेः. [22] वक्तव्यं स्यात्.

दूषणम् ॥ [1]प्रतिज्ञायामसम्बन्धो[2] युक्तेरुक्ता ह्यसङ्गतिः । विरोधोऽपि त्रिधैव स्यात्प्रतिज्ञार्थविरुद्धता ॥ लिङ्गराहित्यमव्याप्तिर्न्यूना[3]धिक्ये तु वाचिके । [4]साध्यव्यापकवैलोम्यमव्याप्तिस्साधनस्य च ॥ दुर्बलेन विरोधेऽपि न [5]प्रमाणमसाधकम् । स्ववाक्येन विरोधेऽपि नैव साधकता [6]व्रजेत् ॥ संवादानुक्तिसंयुक्ता एत एव तु निग्रहाः । वादो जल्पो वितण्डेति कथास्तिस्रो विजानताम्[7] ॥ स्वार्थे परार्थमपि वा तत्त्व निर्णयसाधिनी । केवलं तु कथा वादो जल्पोऽर्थादिव्यपेक्षया ॥ सतामेव कथा ज्ञेया वितण्डा त्वसतां सताम् । अप्रकाश्य स्वसिद्धान्तमसता पक्षदूषणम्[8] ॥ उक्ते तैः[9] प्रथमं माने वक्तव्यं तस्य दूषणम् । विद्या परीक्षा[10]पूर्वेण वितण्डा जल्प[11] एव च ॥ [12]उच्चनीचत्व निर्णीतिर्यतो जयपराजयौ । विनैव तत्त्व[13]निर्णीतिं न हि जल्पादिना क्वचित् ॥ उच्चनीचत्वविज्ञानमिति विद्यापरीक्षणम् । वादेन चोच्चनीचत्वविज्ञानं भवति स्फुटम् ॥ इति वादस्य पूर्वत्वं तत्सिद्धौ व्यर्थताऽन्ययोः । बहुविद्यत्वसिद्धौ तु नैव वादोऽपि कारणम्[14] ॥ सभासभापप्राश्नीक[15]पूर्वस्तु [16]स्पर्धिनामपि । वाद एवोभयार्थः स्यान्निर्णीतिजयकारकः ॥ तत्त्वा[17]प्रकाश एवैको वितण्डाजल्पयोः फलम् । विना[18] वादेन विद्याया यदि शक्यं परीक्षणम् ॥ स्याज्जल्पादिरपि क्वापि वाद एवान्यथा भवेत् । जल्प इत्यपि नाम

---

1 प्रतिज्ञार्थे 2 आकाङ्क्षारूपसम्बन्धराहित्यम् 3 न्यूनत्वम् 4 यत्
साधनस्य सोपाधिकत्व (साध्यव्यापकाव्याप्यत्व) सा अव्याप्ति
5 अनुमानम् 6 प्रमाणम् 7 अनेकविद्वत्कर्तृकविचारगोचरा,
वाक्यप्रबन्ध 8 पक्षस्य 9 असद्भि 10 परीक्षा कृत्वा निश्चित
साम्ययोरेव 11 दातव्य 12 यत 13 तत्त्व निर्णीयते अनयेति
वादम् 14 विद्यापरीक्षाया 15 अनुवादक (स २) 16 स्पर्धिनो
रपि सभादिपूर्वं वादो युज्यतएव 17 परवञ्चनसामर्थ्यसाध्य वित्तादि
लाभ 18 प्रसिध्यादिना

स्याद्वादस्यैतादृशस्य तु ॥ प्रतिज्ञामात्रसाध्यत्वमपि[1] स्याद्याज्ञवल्क्यवत् । संवादे वादिनोः क्वापि विवादे हेतु[2]रिष्यते ॥ सभा सभापतिश्चैव प्राश्निकाश्चैव वैष्णवाः । रागद्वेषविहीनाश्च स्युः, सभ्याः सर्ववेदिनः ॥ प्राश्निकाश्चैतदज्ञाने[3] सभ्याश्चैषां[4] च दूरगाः । प्रमाणं निर्णयाय स्युः पक्षपातविवर्जिताः ॥ उभाभ्यां साधनं चैव [5]दूषणं वादजल्पयोः । सद्भिरागम एवैकः प्रयोज्योऽभीष्टसाधकः ॥ स्वसिद्धान्तानुसारेण[6] ह्यसद्भिरनुमोच्यते । प्रत्यक्षागमवैरूप्य[7]माश्रित्यान्यार्थतैव तु ॥ आगमे दर्शनीयाऽत्र दोषो लिङ्गविलोमता[8] । [9]लिङ्गानुकूल्यं स्वार्थस्य [10]श्रुत्यादीनामनुग्रहः[11] ॥ त्रिपञ्चावयवामेव युग्मावयविनीमपि । नियमाद्योऽनुमां ब्रूयात्तं ब्रूयाद्यदि तादृशी ॥ नानुमेति[12] तदा केन साध्याऽवयवकल्पना[13] । नियतावयवासिद्धौ व्याप्तिमात्रेण साधनम् ॥ कर्तव्यमेव तेन स्यात्तस्मात्सैवानुमा मता । अनुभूतिः प्रमाणं चेत्केन[14] स्मृतिरपोद्यते[15]॥ पूर्वानुभूते किं मानमित्युक्ते स्यात्किमुत्तरम् । [16]मानसं [17]तद्धि [18]विज्ञानं तच्च साक्षिप्रमाणकम् ॥ अतीतानागतं यद्वद्योगिभिर्दृश्य[19]तेऽञ्जसा[20] । एवं पूर्वानुभूतं च [21]मनसैवावगम्यते ॥ विज्ञातं[22] मनसा[23] पूर्वं मयैतत्कृतमित्यपि । साक्षादनुभवात्सिद्धं कथमेव ह्यपोद्यते ॥ एवं लक्षणकं मानत्रयं[24] ब्रह्मादिवस्तुषु । प्रमाणं वेद एवैकस्तत्प्रामाण्यं च साधितम् ॥ २ ॥ ४ ॥

---

[1] ज्ञापनीयत्वम्. [2] हेतुवाक्यं सर्वप्रमाणं च. [3] एषु ज्ञानाभावे सति. [4] अज्ञाने सति. [5] कर्तव्यम्. [6] स्वसिद्धान्तनिर्णीतावयवनियमानुसारेण. [7] विरोधम्. [8] उपक्रमादि लिङ्गविरोधरूपो दोषो दर्शनीयः. [9] उपक्रमादि. [10] वेद. [11] न्याय. [12] इति ब्रूयात्. [13] नियमः. [14] पदेन. [15] व्यावर्त्यते. [16] मनःप्रत्यक्षजन्यम्. [17] स्मरणम्. [18] साक्षात्काररूपम्. [19] योगसहकृतेन्द्रियेण. [20] साक्षात्. [21] अनुभवजन्यसंस्कारसहकृतेन. [22-23] इति, स्मृतमपि. [24] यतस्ततः.

॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां ॐ ॥ ६ ॥ तथापि मृज्जलादीना बुद्धिनागादिवाचकः[1] । दृष्ट[2]व्याप्तिविरुद्धत्वात्तत्र मानं कथं भवेत् ॥ ततस्तन्नामकः [3]कश्चित्पुमानन्यो भवेदिति[4] । युक्त्यागम[5]विरोधेन प्राप्तमत्राभिधीयते ॥ बालरूढिभिन्नापि विद्वद्रूढिसमाश्रयात् । तत्तन्नामान एवैते तत्तद्वस्त्वभिमानिन ॥ सन्ति, तेषां विशेषेण शक्तिरन्येभ्य उच्यते । व्याप्तिश्चोक्तानुसारेण दृश्यन्ते चाधिकारिभिः ॥ शास्त्रोक्तवस्तुनश्चैव [6]व्युत्पत्तिः शास्त्रलिङ्गतः[7] । व्युत्पत्तिः सा बलवती मूर्खव्युत्पत्तितो हि यत् ॥ [8]दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः ॥ ६ ॥ ३ ॥

॥ ॐ [9]असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ ॥ ८ ॥ अल्पवाक्ययुता युक्तिर्बहुलैर[10] विरोधिनी । यत्र तत्र कथ वस्तुनिर्णयः स्यादितीरिते ॥ विरोधियुक्तिबाहुल्यादिति न्यायो विनिश्चितः । युक्तेस्तु युक्तिबाहुल्यमागमादागमस्य[11] च ॥ कथ न निर्णय कुर्यादित्य[12]सत्कारण[13] न हि । श्रुत्यर्थो भवति क्वापि श्रुति-[14]प्रायोपपत्तिभिः ॥ अविरोधश्चतुर्थे तु पादे सम्यक्समर्थ्यते । असत्कार्य[15] यथा दृष्ट वस्तुत्वा[16]त्कारण[17] तथा ॥ इति चेन्न निषेधैकस्वरूपस्य न कर्तृता । बुद्धिपूर्वप्रवृत्तिर्हि[18] कर्तृत्वमिति

---

[1] वेद [2] प्रमित यातियुक्त्या [3] अन्तर्धानादिशक्तिमान् अस्मादादि विलक्षण [4] प्राप्तम् [5] मिथो विरोधेन [6] वाचकत्वज्ञानम् [7] शास्त्रोक्तपाराहस्तत्वादि लक्षणेभ्य [8] वेदस्य [9] श्रुतौ सिद्धान्ते न विद्यत सत्=उत्तम यस्मात्तत् सर्वोत्तमम् (स र) [10] वेदस्य [11] बाहुल्यम् [12] महाप्रलयवर्ती कार्यप्रागभाव [13] जगत्कर्ता [14] बहुत्वसहित [15] महदादिकं प्रलये असत् [16] भावत्वात् [17] ईश्वरादिक असत् [18] इच्छाप्रयत्नादिका

निश्चितम् ॥ प्रतिषेधात्मकत्वं तु [1]भावस्याभावधर्मतः[2] । धर्मनिश्चितम् ॥ धर्म्यैक्यत[3]श्चैव न तु तन्मात्रता भवेत् ॥ अभावस्य च [4]भावो हि धर्मोऽथापि हि धर्मिणः । तादृक्तं[5] [6]मात्रतेहोक्ता[7] बुद्धिराहित्यमेव तत्[8] ॥ विशेष्यतैव धर्मित्वं प्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वं[9] भावाभावत्वमत्र[10] हि ॥ ८ ॥ ॐ [11]अपीतौ [12]तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ ९ ॥ सर्वनाशेष्वपि सदा शिष्टत्वाधस्य कस्य तु:[13] । नाशोऽयं विमतोऽपि स्यान्नाशत्वात्कर्तृशेषवान् ॥ न चाशेषनृनाशस्तु दृष्टो दृश्योऽस्ति वा क्वचित् । धर्माधर्माश्रयत्वेन[14] स्वीकार्योऽपि नरो लये ॥ [15]अनादित्वं विना दृष्टं कथं स्यात्कारणं [16]क्वचित् । पूर्वादृष्टा[17]त्पराद्दृष्टं यदि नैवोत्तरं[18] कुतः ॥ अदृष्टं कारणं नो चेल्लये[19] मानं[20] च किं भवेत् । उत्पत्तिनाशकारी च बुद्धि[21]मान्दृश्यते क्वचित् ॥ तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयते । आगमानुगृहीता तु मानमेषाऽनुमाऽपि तु ॥ ९ ॥ ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्ष[22]-प्रसङ्गः ॐ ॥ १२ ॥ आगमानुग्रहाभावे न तर्कः स्यात्प्रतिष्ठितः । अक्षजागममूलस्य स्यादेवास्य [23]प्रतिष्ठितिः ॥ अन्यथाऽस्या[24]प्रतिष्ठा च स्ववाचा व्याहतैव हि ॥१२॥ ॐ एतेन शिष्टा अपरिग्रहा

---

1 कर्तुः कुलालादेः. 2 अन्योन्याभावरूपधर्मवत्त्वात्. 3 प्रतिषेधात्मकत्वं भावस्यास्ति. 4 प्रमेयत्वादिधर्मोऽस्ति. 5 प्रतिषेधात्मकत्वम्. 6 प्रतिषेधमात्रता. 7 सूत्रे. 8 तस्मात् प्रतिषेधमात्रत्वादेश्च. 9 धर्मित्वम्. 10 एवं सत्यपि. 11 प्रलये. 12 अभाववत्त्व. 13 पुरुषस्य. 14 अपि. 15 इव प्रलयेसत्त्वम्. 16 सृष्टिकाले. 17 जायते. 18 अदृष्टं कुतो जायते ? 19 भवेत्. 20 अप्रामाणिकत्वात्प्रलयो न स्यात्. 21 एव. 22 स्ववचनव्याघातात्. 23 प्रामाण्यम्. 24 अप्रतिष्ठा=अप्रामाण्यम्.

अपि व्याख्याताः ॐ ॥ १३ ॥ न च शिष्टागृहीतत्वं [1]निरीशादीशवादिनः । अतोऽप्यशिष्टजीवादिकर्तृताऽत्र निषिध्यते ॥ तन्मनोऽकृतत्वा[2]देरसतो [3]मनसो जनिः[4] । निवारिता तु पूर्वत्र, ह्यकस्मादिति [5]तद्विना ॥ [5]असतो विश्वजननमाशङ्क्यात्र निषिध्यते । आपकं[6] वाक्यमात्रं[7] तु परिहारोऽविशेषितः[8] ॥ क्वचि[9]ज्जीवाद्वतं[10] दृष्ट्वाऽचेतनादेव चाकृतम् । [11]तद्वदेवानुमाऽन्यत्र[12] वस्तुत्वात्क्रियते श्रुतेः ॥ १३ ॥ ४ ॥

॥ ॐ भोक्त्रा[13]पत्तेरविभागश्चेत्स्या[14]ल्लोकवत्[15] ॐ ॥ १४ ॥ नान्यदन्यत्व[16]माप्यं क्वचिद्दृष्टं कथञ्चन[17] । अतो जीवस्य न ब्रह्मभावः स्याद्धि कदाचन[18] ॥ [19]क्वचिद्भिन्नतया दृष्टं तदभिन्नतया कथम्[20] । दृश्येन्नो दृष्ट[21]पूर्वं हि तादृशं न च दृश्यते ॥ भोक्तृत्वापत्तित इति यन्मतं तत्कुतो हरिः । भोक्त्रापत्तेरिति प्राह ॥ १४ ॥ ५ ॥

॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ ॥ १५ ॥ कथं च [22]तदनन्यता ॥ जगतस्त्वविकारत्व[23] उक्तन्यायेन साधितं । [24]स्वतन्त्रकारणान्यत्वं तेन[25] ह्यत्र निषिध्यते ॥ १५ ॥

---

[1] ईशानङ्गीकर्तुः. [2] प्रमाणात् [3] ज्ञानेच्छाप्रयत्नेभ्यः. [4] मनः. [5] शून्यात् [6] शङ्काप्रापकम्. [7] न तु समयः. [8] समानः. [9] देहादौ जीवादौ [10] अकृतत्वम् [11] अनुमिति. [12] महदादौ. [13] नाऽन्योऽतोऽस्ति कर्तेतिश्रुतेः. [14] जीवस्य मोक्षे ब्रह्मत्वापत्ति-श्रवणात् तयोः भेदाभावः [15] अभेद एव प्रामाणिकः स्यात् न चैवम् [16] एकीभवन्तीति तु लोके इव स्थानैक्यात् मत्यैक्याच्च. [17] वस्त्वन्त-रेणाभेदम् [18] उपायेन. [19] मुक्तानपि [20] काले. [21] कालान्तरे पूर्वदृष्टम्. [22] ब्रह्मणा. [23] ब्रह्मविकारत्वाभावे. [24] ब्रह्मणोऽन्यस्य स्वतन्त्रकारणत्वम्. [25] तदन्यत्वमित्यनेन.

॥ ॐ सत्त्वाच्चावरस्य ॐ ॥ १७ ॥ ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥ १८ ॥ "द्रव्यं कर्म च कालश्च स्वाभावश्चेतना[1] धृतिः[2] । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया" ॥ इतिश्रुतेस्तद्वशस्य[3] मात्रो 'न पर[4]' इत्यतः ॥ १७ ॥ १८ ॥ ॐ युक्तेः[5] शब्दान्तराच्च ॐ ॥ ॥ १९ ॥ शक्तोऽपि ह्यन्यथा[6] कर्तुं स्वेच्छानियमतो हरिः । कारणैर्नियतैरेव करोतीदं जगत्सदा ॥ नित्य[7]भेदो निमित्तेन ह्युपादानेन तु द्वयम्[8] । [9]असच्च[10]त्कार्यरूपेण कारणात्मतयाऽस्ति हि[11] ॥ अनवस्थाऽ[12]न्यथा[13] हि स्यात्सर्वत्रोत्पत्तिनाशयोः । शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा[14] ॥ स्वभिन्नं कारणाभिन्नं भिन्नं विश्वं करोत्यजः । इतिश्रुतेरवसित उक्तोऽर्थोऽयमशेषतः ॥ २१ ॥ ६ ॥

॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ २२ ॥ 'अनंशस्यापि जीवस्य किञ्चि[15]त्सामर्थ्ययोजनाम् । कार्येषु यः करोत्यद्धा नमस्तस्मै [16]स्वयम्भुवे' ॥ [17]यदि भागेन कार्येषु जीवशक्तिं न योजयेत् । हरिस्तदा हि सर्वत्र कृत्स्नयत्नोंऽशितोऽपि वा ॥ अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम् । अंशैरंशिन उच्यन्ते नैव[18]मेव हि चेतनाः ॥ अतोऽ'नंशिन'इत्येव श्रुतिरेतेषु वर्तते । अप्यनेकस्वरूपेषु विशेषादेव केवलम् ॥ [19]बहुस्वरूपताख्या

[1] जीवाः. [2] चित्प्रकृतिः. [3] प्रकृत्यादेः सत्त्वम्. [4] किं च नास्त, परम्=स्वतन्त्रम्. [5] युक्तत्वादुभयस्य. [6] कारणैर्विना. [7] कार्यस्य भेदएव. [8] भेदाभेदौ. [9] नास्ति. [10] घटादिरूकार्यात्मना उत्पत्तेः. पूर्वम्. [11] अतोद्वयम्. [12] अव्यवस्था. [13] पूर्वं कार्यस्य सत्त्वे कारणेनात्यन्ताभेदे च. [14] कार्यानुरूपसामर्थ्यप्रयोगम् [15] स्वतन्त्राय. [16] इति वचनादवसितोऽर्थः. [17] पूर्णम् [18] किन्त्वत्यन्ताभिन्नैरंशैः. [19] अनेक.

तु तेभ्यस्त्येव हि सांशता[1] । बहुत्वेनानिना[2]मात्राद्भिन्नता नियमाद्भवेत् ॥ यदि नैवं नियमकृद्भगवान्पुरुषोत्तमः ॥ २२ ॥ ७ ॥

॥ ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ २८ ॥

तस्य त्वशेषशक्तित्वाद्युज्यते सर्वमेव च । विरोधः सर्ववैशिष्ट्य[3] यो द्वितीये निरस्यते ॥ नारायणस्य त्वध्याये तदन्ये तत्र तद्गताः । सृष्टिसंहारवाक्यानां जीवरूपाभिधायिनाम् ॥ अप्यन्यो[4]ऽन्याविरोधस्तु द्वितीयाध्यायगोचरः ॥२८॥ ॐ विकरणत्वान्नेतिचेत्तदुक्तम् ॐ ॥ ३२ ॥ [5]मानमेयविशेषेण पुनरुक्तिर्न जायते ॥३२॥८॥

॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥ ३३ ॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ ३४ ॥ सदा प्रवृत्तिरीशस्य स्वभावादेव केवलम् । अङ्गचेष्टा यथा पुंसः काश्चिदुद्देशवर्जिताः ॥ देवस्यैष स्वभावोऽयमित्याह श्रुतिरञ्जसा । क्रीडा प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी ॥ इति केवललीलैव निर्णीता प्रभुणा स्वयम् । आत्मप्रयोजनार्थाय स्पृहा श्रुतिरवारयत् ॥ न प्रयोजनवत्त्वेनेत्यत आह जगद्गुरुः । 'इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चि[6]ता.'[7] ॥ इति प्रशंसया[8] काम[9]श्रुतिभ्यश्चैव युक्तितः[10] । महा[11]तात्पर्ययुक्तेश्च नेच्छामात्रं निषिध्यते ॥ मोक्षार्थाः श्रुतयो यस्मात्स च तस्य प्रसादतः । [12]उन्निनीषति वाक्याच्च लोकदृष्टा[13]नुसारतः ॥ इच्छानिमित्तको यस्मा[14]त्तदभावे कुतः श्रुतिः । महातात्पर्यरहिता प्रमाणत्वं

---

1 च 2 व्यातिरूपात् 3 उत्तमत्वे वैलक्षण्येच 4 सोऽपि सर्ववैशिष्ट्यविरोधपरिहारएव 5 मानैक्येऽपि मेयविशेषेण, मेयैक्येऽपि मानविशेषेण. 6 विशिष्टनिश्चयवत्त 7 माण्डूक. 8 स्तुत्या 9 सोऽकामयत इति 10 ईश्वर इच्छावान् आत्मत्वात् 11 तस्मिन् सर्ववेदाना महतात्पर्यवत्वात् 12 ऊर्ध्वं नेतुमिच्छति 13 दृष्ट्य- 14 इच्छा

गमिष्यति ॥ याथार्थ्यमेव मानत्वमपि वाक्यं प्रयो[1]जकम् । मानत्वमेति, तत्रापि यत्सम्पूर्णप्रयोजनम् ॥ ३४ ॥ ९ ॥

॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ ३५ ॥ वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम् । नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादि[2]नामकम् ॥ ३५ ॥ १० ॥

॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ३८ ॥ यदधीना[3] गुणाश्चैव दोषा अपि हि सर्वशः । गुणास्तस्य कथं न स्युः, स्युर्दोषाश्च कथं पुनः ॥ सर्व[4]धर्मोपपत्तेस्त[5]द्वाक्यैरपि हि [6]तादृशैः । निर्दोषाशेषगुणको निर्णीतो भगवान्हरिः ॥ ११ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥ श्लोक सङ्ख्या ११५ ॥

॥ ॐ ॥ स्मृतियुक्तिश्रुति[7]गुणयुक्तयो बहुयुक्तयः । एवं चतुर्विधा[8] नैव विरुध्यन्तेऽन्वयं प्रति ॥ इति प्रथमपादेन निर्णीतेऽप्यभियोगतः[9] । दर्शनानां प्रवृत्तत्वान्मन्द आशङ्कते पुनः ॥ अनादिकालतो वृत्ताः समया हि प्रवाहतः । न चोच्छेदोऽस्ति कस्यापि समयस्येत्यतो[10] विभुः ॥ भ्रान्तिमूलत्वमेतेषां पृथग्दर्शयति स्फुटम् । तर्कैर्दृढतमैरेव [11]वाक्यैश्चागमवादिनाम् ॥ दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्या[12]दल्पवेदिनाम् । तामसत्वाच्च लोकस्य[13] मिथ्या[14]ज्ञानप्रसक्तितः ॥ विद्वेषात्परमे तत्त्वे तत्त्ववेदिषु चानिशम् । अनादिवासनायोगा-

[1] प्रयोजनवत्. [2] दूषणरूपम्. [3] यत्र. [4] सद्गुणानां दोषाभावानाञ्च ईशे उपपत्तेः. [5] वेदवाक्यैः. [6] तदुपपादकैः. [7] श्रुत्युपसर्जनक. [8] विरोधिप्रतीतयः. [9] आग्रहात्. [10] इति हेतोः आशङ्कते पुनः. [11] तत्प्रामाण्यवादिनां शिष्याणां व्यपेक्षया श्रुतिवाक्यैः. [12] भ्रमाधिष्ठानमात्रविदाम्. [13] राजादेः. [14] कुपण्डितनिमित्तक.

दसुराणां[1] वहुत्वतः ॥ दुराग्रहगृहीतत्वाद्वर्तन्ते समयाः सदा । तथापि शुद्ध[2]बुद्धीनामीशानुग्रहयोगिनाम् ॥ सुयुक्तयस्तमो हन्तुरागमानुगताः सदा । इति विद्यापतिः सम्यक्समयानां निराकृतिम् ॥ चकार [3]निजभक्तानां बुद्धि[4]शाणत्वसिद्धये ॥ **ॐ रचनाऽनुपपत्तेश्च नानुमानम् ॐ ॥ १ ॥** [5]चेतनाचेतनं तत्त्वद्वयमेव निरीश्वराः । [6]आहुस्तत्पञ्च[7]पञ्चत्वविभागस्थमचेतनम् ॥ चेतनं तदसङ्ख्यातं भिन्नमन्यद्विदोज्झितम् । अचेतनस्य कर्तृत्वं [8]स्वातन्त्र्येण निगद्यते ॥ परस्परविभेदश्च कार्याणा[9]मालयं भवेत् । भोक्तृतां[10] चेतनस्याहुः केचित्तामपि नापरे ॥ स्वरूपचैतन्यबलात्स्व[11]प्रकाशाच्च भोगिताम् । प्रकृतेश्च [12]स्वरूपस्य विवेकाग्रहमेव तु ॥ अभोगवादिनो भोग[13]माहुर्भेदग्रहा[14]त्तयोः । भोगिनां[15]मुक्तिरुद्दिष्टा स [16]एवाभोगवादिनाम् ॥ ईशस्यासङ्ग्रहादेव[17] न युक्तौ तावुभावपि । चेतनेच्छानुसारेण यदा[18] दृष्टः पटोद्भवः ॥ एतादृशत्वमन्यस्य वस्तुत्वात्केन वार्यते । न च काचित्प्रमोक्तार्थे श्रुतिरेव[19] प्रमा हि नः ॥ आप्तत्वमुक्तमार्गेण वक्तु[20]र्नैवोपपद्यते । अप्रामाण्यस्वतस्त्वस्य स्वीकारा[21]दपि मायिवत्[22] ॥ स्वोक्ताखिलनिषेधी स्यान्न[23] च किञ्चित्प्रसिध्यति । इदं[24] नाचेतनवशं वस्तुत्वात्प्रतिपन्नवत्[25] ॥ इत्येव प्रतिषिद्धस्य केन[26]

---

1 विपरीतबुद्धिप्रयत्नादिप्रेरकाणाम्. 2 यथार्थज्ञानस्वभावानाम्. 3 ब्रह्मादीनाम्. 4 बुद्धिं प्रति युक्तीनाम्. 5 द्वन्द्वैकवद्भावः. 6 साङ्ख्या. 7 पञ्चविंशति. 8 चेतनाधिष्ठानेन विना. 9 प्रलयपर्यन्तम्. 10 सुखदुःखयोः. 11 भोक्तृत्वस्य स्वप्रतीतिसिद्धत्वात्. 12 पुरुषस्य. 13 भोगव्यवहारकारणम्. 14 प्रकृतिपुरुषयोः. 15 मते. 16 भेदाग्रहः. 17 अनङ्गीकारात्. 18 यस्मात्. 19 योयोनिमधितिष्ठत्येकः इत्यादि. 20 साङ्ख्यप्रणेतुः. 21 प्रामाण्यस्वतस्त्वस्यापि. 22 सदसद्विलक्षणत्वादिवत्. 23 परस्परविरोधे. 24 महदादिकार्यम्. 25 प्रधानवत्. 26 सामर्थ्येन.

मूला[1]नुमा भवेत् । स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुतः[2] ॥ अचेतनत्वं स्वातन्त्र्य[3]मिति चात्मप्रमा[4]हतम् । [5]स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः ॥ कुत इच्छाऽचेतनस्य सेच्छं चेत्किमचेतनम्[6] । इच्छाम्यहमिति ह्येव [7]निजानुभवरोधतः ॥ अचेतनेच्छाऽपगता[8] [9]यदि भेदा[10]ग्रहोऽत्र[11] च । कथं स[12] न घटस्य [13]स्यान्मनो म[14] इति भेदतः[15] ॥ मनसोऽपि गृहीत[16]त्वा[17]दुभयात्मकता यतः । कामस्य तु "मनः[18]कामः" [19]प्रियाप्रियनिभेदतः ॥ द्वैविध्यं दृश्यते चास्य[20] तस्मा[21]द्भेदाग्रहः कुतः । रचनाऽनुपपत्तेस्त्व[22] सर्वज्ञा[23]नुमागतम् ॥ अचेतनं जगत्कर्तृ ॥ १ ॥ ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ ३ ॥ [24]पयोम्ब्वादि च नोपमा ॥ एतत्प्रशास्तिवचनाच्चेतनाचेतनस्य च । द्वैविध्येऽपि तु कामादेः कुतः[25] स्वामित्वमात्मनः ॥ साक्षादनुभवारूढं शक्यतेऽपोदितुं[26] क्वचित् । इच्छास्वामित्वमेवोक्तमिच्छावत्त्वं न चापरम् ॥ किञ्चित्तद्वशगत्वेऽपि स्वामित्वं लोक[27]वद्भवेत् । [28]सर्वात्मतन्त्रकामादेः किमुतैव परेशितुः ॥ न चानुभवगं कामस्वामित्वं वेदवागपि[29] । शक्ताऽपवदितुं तस्मात्सा [30]तदन्याभिधायिनी ॥ मोक्षकामो भवेदन्यो यदि मुक्ताद्भविष्यतः[31] ।

---

[1] साधकानुमा. [2] कुतएव. [3] च. [4] स्वव्याहतं प्रमाणविरुद्धञ्च. [5] प्रवृत्तौ. [6] किं. [7] साक्ष्यनुभवः. [8] अचेतनस्य इच्छा अपगता नास्तीति यावत्. [9] एयमनुभवएवनास्ति. [10] निमित्तम्. [11] व्यवहारे. [12] भेदाग्रहः. [13] व्यवहारहेतुः. [14] मे मनः. [15] भेदेन. [16] नात्मना भेदाग्रहः. [17] आत्मधर्मता मनोधर्मता चास्ति ततः. [18] इति श्रुतिर्युज्यते. [19] मुक्तिसंसारसम्बन्धिभेदेन. [20] कामस्य. [21] श्रुतिविरोधस्य परिहृतत्वात्. [22] तस्मात्. [23] साह्ययचास्येन ज्ञातम्. [24] क्षीरजलादि. [25] शक्यते. [26] अपवदितुं छान्दसम्. [27] गोस्वामित्ववत्. [28] सर्वात्मनास्वाधीन. [29] 'कामःसङ्कल्पःश्रद्धा...सर्वं मन एव' इति माण्डूक. [30] स्वामित्वादन्यस्योपादनत्वस्य. [31] आत्मनः अन्यः.

मोक्षकामस्य[1] किं तेन स्वनाशार्थे[2] च को यतेत् ॥ कर्तृत्वं यस्य तस्यैव भोक्तृत्वमुपलभ्यते । विभागे[3] च तयोर्मानं नैव किञ्चित्कचिद्भवेत् ॥ सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्वयम् । मायावाद्युपमां यायात्तच्छब्दान्निराकृतः ॥ ३ ॥ १ ॥

## ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ ५ ॥

सांख्यस्तु सेश्वरो ब्रूते क्षेत्रा[4]नुग्रहशक्तिमान् ॥ अस्तीश्वरः स्वयंभावः क्लेश[5]कर्मादि[6]वर्जितः ॥ क्षेत्रश[7]क्तिमती सैव प्रकृतिर्बीजशक्तिमान् ॥ जीवः पर्जन्यवद्दैवशक्तिमानीश्वरः स्मृतः ॥ पृथिवीवत्प्रधानं तज्जीवः[8] सन्निधिमात्रतः ॥ बीजावपनकर्तैवेत्यत्र आह स्वयं प्रभुः ॥ अन्यत्र कापि शक्तिर्न स्वातंत्र्येणेश एव हि ॥ शक्तीस्ताः प्रेरयत्यज्ञस्तदधीनाश्च सर्वदा ॥ [9]सत्ता प्रधानपुरुषशक्तीनां च प्रतीतयः ॥ प्रवृत्तयश्च तास्सर्वा नित्यं नित्यात्मना यतः ॥ तथा नित्यतया नित्यं नित्यशक्त्या सवेश्वरः ॥ नियामयति नित्यं च 'न ऋते त्वदि'तिश्रुतेः ॥ स्वभावजीवक[10]र्माणि द्रव्यं कालः श्रुतिः क्रियाः[11] ॥ यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥ इति श्रुतेर्न सत्ताद्या अपि नारायणं विना । तत्पतञ्जलि[12]विन्ध्यादिमतं न पुरुषार्थदम् ॥ ५ ॥ २ ॥

## ॥ ॐ अभ्युपगमेप्यर्थाभावात् ॐ ॥ ६ ॥

चार्वाकैरुच्यते मानमक्षजं नापरं क्वचित् । देह आत्मा पुमर्थश्च कामार्थाभ्यां विना न हि ॥ यद्दैवं दर्शनेनास्य कोऽर्थः प्रत्यक्षगोचरः । लब्धस्तेनैव हि नरः[13] शास्त्रात्किं मोदनं विना ॥ स्वपरार्थविहीनत्वात्स्वमतेनैव निष्फलम् । किमित्युन्मत्तवच्छास्त्रं वृथा[14] प्रलपति

---

1 प्रधानस्य. 2 प्रकृतिकार्यसंसारनाशार्थम्. 3 भिन्नाधिकरणत्वे.
4 प्रकृति. 5 अविद्यादि. 6 विधिनिषेधरूपम्. 7 उपादानत्व.
8 पितृजीवः. 9 स्वरूपम्. 10 धर्माधर्मौ. 11 परिस्पन्दा.
12 अनीश्वरसांख्य. 13 शिष्यैः. 14 विषयप्रयोजनशून्यम्.

स्वयम् ॥ देहादन्योऽनुभवत[1] आत्मा भाति शरीरिणाम् । मम देह इति व्यक्तं ममार्थ इतिवत्सदा ॥ प्रत्यक्षस्यैव मानत्वमिति केनावसीयते । यदि तत्साधकं वेदप्रामाण्ये न कथं भवेत् ॥ न [2]चान्यामानता [3]क्वापि प्रमाणेनावसीयते । [4]स्वमतेनार्थरहित उपेक्ष्यः पक्ष ईदृशः ॥ ६ ॥ ३ ॥

॥ ॐ पुरुषाश्मवदिति चेत्तथापि ॐ ॥ ७ ॥ सन्निधानाच्चेतनस्य वर्तते[5] यद्यचेतनम् । तथाप्य[6]बुद्धिपूर्वत्वादुक्तदोषः समो[7] भवेत् ॥ ७ ॥ ॐ अङ्गित्वानुपपत्तेः ॐ ॥ ८ ॥ अङ्गित्वं[8] पुरुषस्यैव सर्वैरेवानुभूयते । तदङ्गत्वोक्तितश्चैव [9]स्यात्सर्वस्यापलापकः ॥ किन्तु सर्वेश्वरस्यास्य ह्यपलापाद्यतोऽखिलम्[10] ॥ ८ ॥ ४ ॥

॥ ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ ९ ॥ अङ्गित्वं यदि तस्यैव स्वातन्त्र्यं येन चाखिलम् । तत्प्रेरणेऽप्यशक्तत्वात्स्वतन्त्रोऽन्यो ह्यपेक्षितः ॥ न च स्वातन्त्र्यमस्यैव प्रत्यक्षादिविरोधतः । हिताक्रियादिदोषाच्च भद्रं नानीश्वरं मतम् ॥ संसारिणोऽन्यं सर्वेशं सर्वशक्तिमनौपमम् । चेतनाचेतनस्यास्य सत्त्वादेस्तदधीनताम् ॥ नाङ्गीकुर्वन्ति ये तेषां सर्वेषां च समा इमे[11] । तस्माच्छ्रुतिप्रमाणेन युक्तिभिश्च परो हरिः ॥ अङ्गीकार्यतमो नित्यः सर्वैरपि सुनिश्चितम् ॥ ९ ॥ ५ ॥

॥ ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ ॥ ११ ॥ नित्यज्ञानप्रयत्नेच्छं सङ्ख्याद्यैरपि पञ्चभिः । युक्तमीशं वदन्तोऽन्ये[12] तदिच्छाऽदृष्टचोदिताः ॥ परमाणवश्चतुर्वर्गाः संयुज्यन्ते

---

[1] प्रत्यक्षेण. [2] प्रत्यक्षादन्ययोरनुमानागमयोः अमानता. [3] विषये. [4] स्वसम्मत्या. [5] प्रवर्तते. [6] प्रकृतेः. [7] न परिहृतः. [8] प्रधानत्वं शरीरं प्रति. [9] साङ्ख्यः. [10] भवति (सं. ८.) [11] दोषाः. [12] इत्याहुः.

द्विशोऽखिलाः । परमाणुद्वयेनैव द्व्यणुकं नाम जायते ॥ द्व्यणुकत्रयेण त्र्यणुकं तैश्चतुर्भि[1]स्तदात्मकम् । ततस्त्वनियमेनैव खण्डावयविनां भवः ॥ ततश्चानियमेनैव सर्वावयविसम्भवः । कारणं समवाय्याख्यं परमाण्वादिरत्र[2] हि ॥ ईशेच्छादृष्टकालास्तु निमित्तं[3] कारणं मतम् । सामान्यान्त्यविशेषौ च समवायश्च तत्त्रयम् ॥ नित्यं, क्रिया[4] अनित्याश्च[5] गुणद्रव्ये द्विरूपके[6] । कार्ये[7] गुणक्रियाणां तु [8]समवाय्यन्यकारणम् ॥ [9]कारणस्था गुणाद्यास्तु संयोगो[10] द्रव्यकारणम्[11] । एवं स्थितेऽपि सिद्धान्त विशेषस्तत्र कल्पितः ॥ द्व्यणुके परमाणौ च ह्रस्वत्वं परिमण्डलम् । न कारणं कार्यगुणे वैरूप्यं तत्र कारणम् ॥ इत्याहुस्तानथोवाच विद्याधीशः स्वयं प्रभुः । महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु[12] [13]कल्पितम् ॥ तस्माच्च[14] सदृशं [15]कार्ये तत्कायपूर्व जायते । यथा तथैव ह्रस्वत्वात्पारिमाण्डिल्यतोऽपि हि ॥ जायेत सदृशं कार्ये[16] परिमाणं समत्वतः[17] । न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेत् ॥ सदृशस्य[18] हि कार्यस्य नैव योगः[19] कथञ्चन । अप्रत्यक्षत्वमेव स्यादतः[20] कार्येऽणुत्वतः[21] ॥ इति चेन्न महत्त्वं च परमाणावणावपि[22] । कथं त्र्यणुकपूर्वेषु नाणुत्वमपि कथ्यते ॥ प्रत्यक्षत्वतदन्यत्वे धुरूपापेक्षयाऽखिले[23] । अणुत्वं च महत्त्वं च यतो वस्त्वपेक्षया ॥ [24]तारतम्यस्थिता यस्मात्पदार्थाः सर्व एव च ।

---

[1] चतुरणुकात्मकम् [2] द्व्यणुकादिकार्योत्पत्तौ [3] तु [4] उत्क्षेपणाद्य [5] एव [6] नित्यानित्ये [7] जायमानानाम् [8] असमवायि कारणम् [9] समवायि [10] अवयवानाम् [11] समवायि [12] [13] एव [14] महत्त्वात् दीर्घत्वात् [15] परिमाणम् [16] त्र्यणुकेषुद्व्यणुकेच [17] कार्यपरिमाणत्वादिसाम्यात् [18] कार्यस्य अणुत्वादि परिमाणादे तदुत्पत्तिरूपस्य. [19] घटना. [20] तस्मान्नेति [21] अणुत्वमसङ्गेन [22] द्व्यणुके [23] द्रव्ये [24] परिमाणतारतम्येन

यथा महत्त्व[1]विश्रान्तिस्तथाऽणुत्वस्य चेष्यते ॥ परिमाणत्वतश्चैव महत्त्वस्यापि विश्रमः । दृश्यतेऽनन्त[1]इत्येव तथाऽऽनन्त्य[2]मणावपि ॥ न महत्त्व[3]च्चगुणत एतावानिति हीश्वरः । परिच्छिन्नस्तथाऽणोश्च नैतावद्भागता क्वचित् ॥ विश्रान्तो यद्यनन्तांशः कश्चिदस्तीति गम्यते । नावसाययितुं शक्यो विरोधादेव केवलम्[4] ॥ केवलं साक्षिमानेन कालो [5]देशोऽपि नान्तवान्[6] । अपर्यवसितिश्चाणो[7]र्दृश्यते साक्षिणा द्वयोः[8] ॥ यदि नो साक्षिगम्यं तन्महत्त्वं केन गम्यते । विश्रान्तिस्तारतम्येन दृश्यते ह्यनुमानतः ॥ यथा[9]गमादनन्तं तन्महत्त्व[10]मवगम्यते । अनन्तमेव [11]चाणुत्वं कुतो नैवावसीयते ॥ महत्त्वाणुत्वयोर्नव विश्रान्तिरुपलभ्यते । [12]अन्यदेव ह्यनन्तत्वं महत्त्वाणुत्वयोः समम् ॥ [12]बहुत्वाल्पत्वयोर्यद्वत्सङ्ख्यायामुपलभ्यते । आनन्त्यमेकभागाना[13] [14]तावत्त्वं ह्येव गम्यते ॥ अणीयांश्च महीयांश्च भगवानागमोदितः । आनन्त्यवाचकः शब्दो [15]द्विधाऽऽनन्त्येपि मानताम् ॥ याति नैव, गुणाल्पत्वं कालाल्पत्वं च मानगम् । सर्वकालगतस्याल्पकालेऽपि स्यादवस्थितिः[16] ॥ महागुणस्य चाल्पोऽपि गुणः स्यादिति चेद्भवेत्[17] । तावत्त्व[18]मेव नैव स्याद्देशेऽप्येतच्च नो मतम् ॥ महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदवित् । यद्यल्पदेशसंस्थानं न सर्वत्रापि नो भवेत् ॥ [19]स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद्ध्रुवम्[20] । एकत्राप्यनवस्थस्य कुत एवाखिलस्थता ॥ शून्यत्वमेव तस्य स्यादस्यैकत्रापि न स्थितिः ।

[1] परिमाणोत्कर्षतरतमभावे [1] अनवधिक [2] परिमाणापकर्षतारतम्येपि [3] सङ्ख्या चेषा आत्व न [4] साक्षात् [5] आकाश [6] अनन्त दृश्यते अनवधिक परिमाणोत्कर्षवान् [7] परिमाणापकर्षतारतम्यस्य [8] काले गगने च [9] स एषोनन्त इति [10] कालादि परिमाणोत्कर्ष [11] परिमाणापकर्ष [12] परिच्छेदाभावरूपम् [12] विशेषणतया [13] एकत्वसङ्ख्याया [14] आनन्त्यम् [15] उत्कर्षापकर्षाभ्याम् [16] यथा [17] तद्भवेदेव [18] अल्पत्वम् [19] स्थितस्यैव [20] स्थितस्यैव

अतो नाणुत्वविश्रान्तिर्न महत्त्वस्य च क्वचित्[1] ॥ उभयाऽनन्त्ययुक्तमाद्यदि मुख्यं महद्भवेत् । तच्च ब्रह्म परं [2]साक्षात्सर्वाऽनन्त्ययुतं सदा ॥ यदि साक्षी स्वयंमातो न मानं केन गम्यते । अक्षजादेश्च मानत्वेऽनवस्थाऽन्यथा भवेत् ॥ [3]अतः सर्वपदार्थानां भागाः सन्त्येव सर्वदा[4] । सर्वदिक्ष्वपि सम्बन्धादविभागः[5] पराणुता[6] ॥ तत्संयोगादनियतात्पदार्थानां जनिर्भवेत् । द्वयोरेव तु संयोग इति केनावसीयते ॥ कारणस्य गुणास्तेन[7] भवेयुः कार्यगा अपि । तारतम्येन [8]सर्वेऽपि महान्तश्चाणवो[9] यतः ॥ न च तस्योक्तसृष्टौ तु मानं केवलकल्पना । कथं साक्षिमितस्यास्य[10] शक्नुयाद्वारणे क्वचित् ॥ यदि साक्षिमितं नैत[11]त्र्त्रानुमा तत्र वर्तते । [12]पक्षीकर्तुमशक्यत्वात्कुत एवानुमा भवेत् ॥ यत्र नास्ति पदन्यासः कस्तं विषय[13]माप्नुयात् । देशान्तरादिशब्दाश्च[14] शशशृङ्गादि[15]शब्दवत् ॥ सदृशं च सजातीयं नास्मत्पक्षे किमेव हि । येनैव च प्रकारेणात्यसिद्धमनुमीयते ॥ तेनैव शशशृङ्गादेः शक्यमस्तित्वकल्पनम् । प्रत्यक्षमागमो वाऽपि भवेद्यत्र नियामकः ॥ सैव व्याप्तिर्भवेन्मानं नान्या सन्दिग्धमूलतः । सहदर्शनमात्रेण न व्याप्तिरवसीयते ॥ यदैवा[16]व्यतिरेकेऽस्य[17] ह्यक्षजं वाऽऽगमो भवेत् । तन्निर्धारित[18]युक्तिर्वा व्याप्तिः सैवा[19]परा न हि ॥ अन्यथा सप्तमरसमानोऽप्यनुमया पतेत् । अनिष्टानि च सर्वाणि ह्यनुमा कामचारिणी ॥ ११ ॥ ॐ समवायाभ्युपगमाच्च

---

[1] कालादौश्चये. [2] अपराधीनतया. [3] साक्षिनः. [4] इति सिद्धम्. [5] यस्य भिन्नावयवेषु सत्स्वपि तेषां विभागानर्हत्वम्. [6] परमाणुशब्दप्रवृत्तिनिमित्तम्. [7] द्वयोरेवेतिनियमाभावेन [8] पदार्थाः. [9] अणवश्च. [10] अनियमारम्भस्य. [11] परमाण्वादिकम्. [12] सिद्धत्वे असिद्धत्वे च परमाण्वादेः. [13] देशम्. [14] साधकानुमानप्रयोगाः. [15] साधकानुमानप्रयोगवत्. [16-17] साधनस्यसाध्यव्यतिरेकेणासत्त्वे. [18] व्याप्तिक. [19] व्याप्तिः.

**साम्याद्नवस्थितेः ॐ ॥ १३ ॥** [1]कार्यकारणयोश्चैव गुणादेः[2] पञ्चकस्य च । भिन्नस्यैव तु सम्बन्धः समवायोऽन्य ईर्यते ॥ भिन्नत्वसाम्यतस्तस्य ताभ्यां योगो भवेद्ध्रुवम् । स स्वनिर्वाहकश्चेत्स्याद्द्रव्यमेव तथा न किम् ॥ विशेषस्तद्गतत्वादिर्यद्यभिन्नेऽवमीयते । गुणक्रियादिरूपस्य निषेधः केन हेतुना ॥ द्रव्यमेव ततोऽनन्तविशेषात्मतया सदा । नानाव्यवहृतेर्हेतु[3]रनन्तत्वं विशेषतः ॥ विशेषश्च विशेषी स स्वेनैव[4] समवायवत् ॥ कल्पनागुरुत्वादोषात्पदा[5]र्थान्तरता न हि । कल्पयित्वा [6]षड्पदार्थान् साभावानपि केवलम् ॥ एकस्मि[7]न्सविशेषश्चेत्किं पूर्वं[8] तस्य[9] विस्मृतिः । येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् ॥ भावाभावविभागेन[10] यं विना न कथञ्चन । एतादृशे विशेषेऽस्मिन्को द्वेषो वादिनां भवेत् ॥ अभेदेन प्रतीतिश्च [11]कार्यकारणपूर्वके । [12]अभावान्ते पदार्थेऽ[13]स्ति सविशेषाऽवमीयते ॥ सामान्यादिपदार्थेषु [14]तन्निष्ठत्वादयोऽखिलाः । कथं धर्मा निवार्यन्ते [15]वस्त्वैक्येऽपि हि वादिभिः ॥ कार्यस्य[16] तच्च[17]न्निष्ठत्वं [18]गुणादेर्व्यापिता[19]दिकः । कथं विशेषो नैवास्ति स च धर्मोऽपरो[20] यदि ॥ षड्पदार्थातिरेकः स्यात्पदार्था[21]नियमेऽपि हि । धर्मस्य धर्मसन्तानादनवस्था[22]स्वनिर्भवेत् ॥ सामान्य[23]स्यापि [24]सामान्यं [25]गुणस्यापि

---

[1] अवयवावयविनोः. [2] गुणावयवक्रियासामान्यविशेषाणाम्. [3] ईश्वरस्य अनन्तत्वमन्यत्रानेकत्वम्. [4] स्वेनैव विशेषी न पुनर्विशेषान्तरेण. [5] गुणगुण्यादीनाम्. [6] केवलम्. [7] समवाये. [8] द्रव्ये. [9] विशेषस्य [10] द्विविधः अखिलो व्यवहारः. [11] अवयव-व्यवयवादौ. [12] अन्योन्याभावपर्यन्ते, धर्मधर्मिके. [13] वस्तुत्वात् [14] व्यक्ति. [15] धर्म्यैक्ये. [16] अवयविनः [17] अवयव. [18] रूपादेः [19] आश्रयव्यापित्वादि. [20] स्वाश्रयाद्भिन्नः. [21] षट्त्वनियमाभावे. [22] आकरोऽयंपक्षः. [23] गोत्वादेः. [24] सत्ता. [25] रूपादेः.

[1]गुणो ह्यतः । नाङ्गीकृतः स च यदि[2] नानवस्था क्वचिद्भवेत् ॥ असत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः । अनन्यत्वान्नानवस्था भेदो नाशे[3] भवेत्तथा[4] ॥ विशेषमेव संश्रित्य विशेषो बलवान्यतः । दृष्टि-[5]प्रमाणतश्चैव विरोधो [6]दर्शने कथम् ॥ विरोधो ह्यविरोधश्च यतो दर्शनमानकौ । ततो दृष्टे विरोधस्तु सद्भिरापाद्यते कथम् ॥ अभिन्नो भगवान्स्वेन तदन्येन विभेदवान् । नित्या धर्मास्तदीयास्तु सर्वेऽप्यातैव भेदिनः ॥ [7]सामस्त्योच्छेदिनोऽन्यत्र[8] धर्मा उभय[9]रूपिणः । [10]भावे त एव चोच्छेदा[11]स्तदन्ये च समस्तशः ॥ अंशांशिनोरभेदेन[12] त्वं[13]शसंयोग एव हि[14] । अंशिनो[15] नानवस्थाऽतो यद्यप्यंशेष्व-[16]विश्रमः[17] ॥ [18]एकस्मिन् जात एवान्यः[19] संयोगो जायते यदि । अनवस्था तदैव स्यात्संयोगैक्ये भवेत्क सा ॥ अंशे संयोग[20]दृष्टेश्च दृष्टे का साऽनवस्थितिः । यद्यंशगो न संयोगः[21] कार्येषु प्रथिमा[22] कथम् ॥ परमाणो[23]रणोर्नास्ति महत्त्वेत्यश्रुतं वचः । अणूनां[24] प्रथिमापेक्षां विनैव द्व्यणुकेऽपि सः[25] ॥ परमाणोर्महत्त्वं च विनेत्ये-[26]तद्वचः कथम् । अंशिनोंऽशैरभेदोऽयमंशेन तु भिदाभिदा ॥ सर्व-प्रत्यक्षविषयः कथमेव ह्यपोद्यते । संयोगश्च विभागश्च भेद[27]श्चैव पृथक्[28]पृथक् ॥ अन्योऽन्य[29]प्रतियोगेन ह्युभयोरपि दृश्यते । भिन्ना

[1] सत्त्वपादि. [2] स्वीक्रियते. [3] धर्मिषु सत्स्वपि च धर्मनाशे. [4] अभेदश्च [5] प्रत्यक्ष. [6] सहदर्शने. [7] सत्येव धर्मिणि सामस्त्येन नाशवन्तः. [8] जडे. [9] भिन्नाभिन्नाः. [10] धर्मिसत्त्वदशायामेव [11] सत्येव-धर्मिण्यसत्त्वात्. [12] च. [13] अवयवानः. [14] यस्मात्. [15] संयोगः. [16] अवयवपरम्परया. [17] तथापि नानवस्था. [18] अवयवसंयोगे. [19] अवयवानाम् [20] संयोगस्यांशवृत्तित्वदृष्टेश्च नानवस्था. [21] कारणा-नाम [22] उत्कर्षः. [23] परमाणूनाम्. [24] द्व्यणुकानाम्. [25] परिमाणोत्कर्षः. [26] द्व्यणुकेऽपि सः. [27] भेदः=पृथक्त्वम्. [28] एकैकद्रव्या-श्रिताः. [29] प्रतियोगित्वेन.

इति तु भेदानां समुदायो[1] हि दृश्यते ॥ यथैव च [2]पदार्थानामनयोर्भेद इत्यपि[3] । इतोऽमुष्यामुतोऽमुष्य भेदो दृष्टो द्विधर्मिकः ॥ तत्रैकवचनं यत्तद्विप्राणां भोजनं यथा । नरत्वादिकमप्येवं तत्तद्धर्मतयेयते ॥ न [4]सर्वधर्म एकोऽस्ति समुदायस्तु[5] भिन्नगः[6] । [7]एतादृशं च सादृश्यं पदार्थेषु पृथक्पृथक् ॥ [8]एकस्मिन्स[9] विनष्टेऽपि यतोऽन्यत्रैव दृश्यते । कुतो भस्मत्वमासस्य नरत्वं पुनरिष्यते ॥ एकत्वे नास्ति मानं च श्रुतिरप्याह सादरम् । 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि ॥ स्वैः स्वैर्धर्मै[10]रभिन्नाश्च स्वरूपैरपि सर्वशः । अनिवृत्त[11]विनाशास्तु धर्मा उभयरूपकाः[12] ॥ न केनचिदभिन्नोऽतो भगवान् स्वगुणैर्विना' । इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते ॥ सर्वेषु युगपच्छब्दः[13] सदृशेषु प्रवर्तते । तथापि प्रासित[14]स्त्वेकवचनाच्च विशेषतः ॥ [15]अभीष्टावगतिश्च स्याच्छक्तिः[16] सादृश्यगा[17] यतः । [18]तादृशोऽयं [19]च [20]तच्छब्द इति ज्ञापयति स्फुटम् ॥ जातित[21]श्चेत्कथं तासु[22] तत्र[23] चेदनवस्थितिः । तथैव व्यक्तिविज्ञानं[24] व्यक्तित्वा[25]भावदूषितम् ॥ यदि तत्रास्ति तस्यापि विशेषेष्व[26]नवस्थितिः । कथं स्वरूपत्वमपि ज्ञायतेऽनुगतं यदि ॥ एक[27]व्युत्पत्तिपर्यन्तमनवस्थादिदूषितम्[28] । कल्पनागौरवात्तेन युक्ता ना[29]नुगकल्पना ॥

---

1 अनेकत्वम्. 2 इमे पटा इत्यादौ 3 इत्यस्यामपि प्रतीतौ. 4 अनेकवृत्ति 5 अनेकत्वम्. 6 अनेकाश्रितः. 7 अनेकवृत्ति. 8 नरे विनष्टे 9 सः नरत्वधर्मः. 10 यावद्द्रव्यभाविधर्मैः. 11 अनिवृत्तेऽप्याश्रये विनाशो येषां ते. 12 भिन्नाभिन्नाः. 13 अयमिति शब्दः. 14 योग्यत्वात् 15 इष्टगोज्ञानम् 16 वाचकत्वशक्तिः 17 सादृश्यसम्बन्धिनी (व्यापिका) 18 उपदिष्टगोसदृशः अतः. 19 यस्मात् अयम् 20 तच्छब्दवाच्यः सः शब्दोवाचको यस्य सः. 21 व्युत्पत्तिः. 22 जातिषु. 23 जातिषु जातित्वम् 24 व्युत्पत्तिः. 25 जात्यभावेन. 26 व्युक्तिषु प्रवेशः स्यात् तथाच. 27 जातिरहिते. 28 दूषणं लगति 29 अनुगतजाति.

औपाधिकनिशिष्टाद्यमपि तद्वस्तु[1] किं ततः । अन्यत्तदेव चेदग्निमत्त्वं किं तत्र भण्यते ॥ अग्निसंयोगमात्रं[2] चेद्भवे[3]त्त्वसिद्धसाधनम् । भूधरस्याग्निसंयोगो[4] यदि षष्ठ्यर्थो[5] एव कः ॥ समवायो यदि ह्यस्य चैकत्वात्सिद्धसाधनम् । यद्यस्यौपाधिको भेदः कुत एकत्वमिष्यते ॥ नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोः । सत्यत्वात्को विशेषः स्यान्मायानाद्यन्यथा भवेत् ॥ उपाधिजन्यं तद्धर्म्यमिति चौपाधिकं भवेत् । उभयत्राप्यनन्ताः स्युः समवाया इतस्ततः[6] ॥ भिन्नत्वं चैव[7] तेष्वस्ति को निशेष उपाधिगे । अविद्यमान एवान्यः समवायोऽधिगम्यते[8] ॥ उपाधिना तद्भ्रमकमनुमानं न मा भवेत् । एवमेवानतः सत्तामम[9]वायो [10]जनिर्मता ॥ तत्रापि ह्युक्तदोषाणां नैव किञ्चिन्निवारकम् । अस्मत्पक्षे निशेषस्य सर्वत्राङ्गीकृतत्वतः ॥ नास्ति दोषः क्वचिद्भानो ह्यभावश्च[11] स एव हि[12] । अभावस्य च धर्माः स्युर्भावास्तेषां च तेऽखिलाः[13] ॥ प्रत्यक्षमानतः सर्वमेतन्नो वारणक्षमम् । [14]सर्वे भावा ह्यभावाश्च[15] पदार्थास्तेन सर्वदा ॥ तत्रापि प्रथमं बुद्धेर्यो निषेधस्य गोचरः । सोऽभावो निषिद्धबुद्धेस्तु गोचरः प्रथमं परः[16] ॥ तस्मात्प्रध्व[17]स्तभेदादि[18] सदित्येवानगम्यते । अस्त्यभावोऽस्ति च ध्वंसो देहाभावश्च सम्मता ॥ इत्यादि युज्यते सर्वं प्रत्यक्षादिप्रमाणतः । अन्योऽन्याभावभेदो च पृथक्त्वं च पृथक् पृथक्[19] ॥ यत्कल्पयन्ति तर्हि तत्कल्पनागौरवाद्धतम्[20] । पर्याय[21]त्वेन ते शब्दा ज्ञायन्ते सर्व एव हि ॥ भेदस्य तु स्वरूपत्वे ये[22] वदन्ति च ह्यन्यताम् । अङ्गताम्ते

[1] तदभिन्नम् [2] अग्निमत्त्वशब्दार्थ [3] धर्मतत्त्वानुमानम् [4] विशिष्टो अनुमानगम्यश्च [5] षष्ठ्यन्तस्येति [6] उपाधीनामनन्तत्वात् [7] यस्मात् [8] भ्रान्त्या [9] सम्बन्ध [10] दुष्टा [11] भवति [12] भावोभवति [13] यत्र [14] पदार्थाः [15] भवन्ति [16] अन्य -भाव [17] प्रध्वंस [18] पृथक्त्वप्रमेयत्वादि [19] विभिन्नानि [20] निरस्तम् [21] प्रमर्यात्वेन [22] मायावादिन

यतोऽन्यस्य[1] प्रतियोगित्वमिष्यते ॥ प्रतियोगिनो हि भेदोऽयं न तु स्वस्मा[2]त्कथञ्चन । विभागेनाल्पतैव स्यात्कुत एव तु शून्यता ॥ न शून्यानां हि संयोगाद्भावो[3] वस्तुंन इष्यते । विदारणार्थो धातुश्च विभागगुणवाचकः ॥ अविदारणेऽपि ह्यास्य[4] भिन्नावोष्ठौ च तस्य[5] च । अत उन्मत्तवाक्यत्वान्मायावादो ह्युपेक्षितः ॥ न चामन्दसदानन्दस्यन्यनन्त[6]गुणार्णवः । ईश्वरोऽल्पगुणत्वेन प्रमेयोऽप्रमितत्वतः ॥ 'मय्यनन्तगुणेऽनन्ते [7]गुणतोऽनन्तविग्रहे'[8] । 'अनन्तगुणमाहात्म्य शक्तिज्ञानमहार्णवः ॥ नारायणः परोऽशेषचेतनेभ्यः परं पदम्' । इत्यादिवेदतद्वाक्यैरनन्तैश्चावमीयते ॥ अनन्तगुणता विष्णोः कथमेव ह्यपोह्यते । यदनन्तविशेषाश्च तज्ज्ञानादेर्निवारिताः ॥ कथं तत्तद्विषयता सार्वज्ञार्थं विधीयते । औपाधिकविशेषस्तु पूर्वमेव निराकृतः ॥ स्वप्रकाशत्वमपि तु यज्ज्ञानस्य[9] निवारितम् । कथं सर्वज्ञता तस्य स्वज्ञानाधिगमं विना ॥ ज्ञानं विश्वाधिगन्त्वेकं तज्ज्ञानविषयं परम् । इति ज्ञानद्वयेनैव सर्ववित्परमेश्वरः ॥ इति चेदेष एवार्थ[10]स्तज्ज्ञानाद्यमितो यदि । स्वप्रकाशत्वमेव स्याज्ज्ञानं ह्येतद्विशेषणम् ॥ [11]ज्ञानान्तरेण चेदत्र भवेदेवानवस्थितिः । स्वप्रकाशत्वमेतस्मादुर्निवारं समापतेत् ॥ सुखानन्दःस्वयं च स्यादिति व्याप्तिश्च नो भवेत् । निर्दुःखत्वं महानन्दः श्रुतेर्विशेषस्य भण्यते ॥ योऽशनायापिपासे च शोकादींश्चातिवर्तते । आनन्दं ब्रह्मणो विद्वान्वि[12]पाप्मेत्यादिका च सा ॥ ईश्वरस्य तथैवत्वं[13] दुःखित्वोपाधि[14]रित्यपि । उक्ते किमुत्तरं ब्रूयात् श्रुत्यनादरतत्परः ॥

---

[1] धर्मिभिन्नस्य. [2] धर्मिस्वरूपात्. [3] जन्म. [4] ओष्ठयोः. [5] मायावादिनः. [6] मन्दीभावी अनन्तगुणधामी अर्णवश्च श्रीपतेर् इव. [7] गुणतोऽनन्ते प्रत्येकमो गुणाना तु निःसीम यदुश्रेयेने ॥ गदानन्दं तु गुणतः ते भानन्ताः हि गद्धुयायाः' इति तन्त्रभागवते. [8] भाग. ६-५ [9] ईश्वरज्ञानस्य. [10] ईश्वर. [11] स्वर्गीयज्ञानेन. [12] य आत्मा अपहतपाप्मा. [13] दुःखीभवतु इति. [14] दुःखित्वप्रतियोगित्वम.

न चात्मदुःखितेच्छा स्यादत एतन्निवार्यते । सह[1]दर्शनमात्रेण [2]श्रुतीनामपलापकः ॥ यज्ञादेरपि पापस्य हेतुत्वं हिंसयायुतेः । नानुमाति कथं तत्र यद्युपाधिर्निषिद्धता ॥ अदुःखित्वेन चानुक्तिः कथं नोपाधितां व्रजेत् । 'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ॥ तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' । इति श्रुतिर्हि परमा श्रुत्युक्तिर्यदि कारणम् ॥ किं कार्यमनुमानेन गलस्तनसमेन हि । अनुमानेन यद्यर्थः श्रुतिदृष्टोऽप्यपोद्यते ॥ पूर्वोक्तेन प्रकारेण नेश्वरो धर्म एव च । स्यात्तत्फलं च तेनात्र श्रुतिरेव प्रमा भवेत् ॥ ईशस्यानुमया सिद्धेः श्रुतिर्धर्मि[3]प्रमा भवेत् । तया सर्वगुणैः पूर्ण ईश उक्तो यतस्ततः ॥ अनानन्दानुमानस्य धर्मिग्राहिविरोधतः । न प्रमाणं भवेत्तस्मान्नानुमाऽत्रोपयोगिनी ॥ नित्येच्छत्वात्परेशस्य परमाणुसदास्यतः । अदृष्टकालयोश्चैव भावात्कार्यं सदा भवेत् ॥ न हि कालविभेदोऽस्ति तत्पक्षेऽस्मन्मते हरेः । विशेषकाल एवैतत्सृष्ट्या[4]दीच्छा[5] सदातना ॥ विशेषार्थैव[6] कालस्य हरेरिच्छावशाः सदा । सर्वे निमेषा[7] इति हि श्रुतिरेवाह सादरम् ॥ [8]उदीरयति कालाख्यां [9]शक्तिमित्यस्य वागपि । कालस्य कालगत्वेन न विरोधोऽपि कश्चन ॥ [10]असङ्ख्यातविशेषत्वादिच्छाया[11] अपि सर्वदा[12] । 'ईशो देशश्च[13] कालश्च स्वगता एव सर्वदा ॥ ईशाधीनौ च तौ नित्यं तदाधारौ च तद्गतौ' । इति श्रुतिरपि प्राह काले सोद्दिष्ट एव तु ॥ तत्कालसृष्टिमेनातो वाञ्छतीशः सदैव हि । स्यात्कालः स तदैवेति कालस्य स्वगतत्वतः ॥ स्वभावादेव हीच्छैषा[14] देवस्यैष इति श्रुतेः । स्वभावोऽपि परेशेच्छावश

[1] सुखदुःखयोः. [2] सुखघनबोधरूपश्रुतीनाम्. [3] ग्राहक. [4] भवति. [5] यतः. [6] क्षणलवादयः. [7] कालमेदः. [8] 'कालात्मिकां शक्तिमुदीरयानः'—जनयन् भागवते. [9] सहकारिशक्तिम्. [10] सिसृक्षाद्यादि. [11] ईश्वरेच्छायाः. [12] विद्यमानाया अपि. [13] अन्याश्च सामान्यतः. [14] विविधा.

इत्युदितः पुरा ॥ नित्या अनित्याश्च ततस्तदधीना इति श्रुतिः ॥१३॥ ॥ ॐ रूपादिमत्त्वाच्च विपर्ययो[1] दर्शनात् ॐ ॥१५॥ ॥ ॐ उभयथा च दोषात् ॐ ॥ १६ ॥ [2]रूपस्पर्शादिहेतुभ्यः [3]परमाणोरनित्यता । अनुमेया ॥ १५ ॥ १६ ॥ ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ १७ ॥ [4]श्रुतीनां च विरुद्धत्वान्न तन्मतम् ॥ उपादेयमतश्चायमविरुद्धः समन्वयः ॥ ६ ॥

॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ ॥ १८ ॥ वैभाषिकाश्च सौत्रान्ताः[5] [6]स्वरसक्षणिकं जगत् । अणूनां समुदायं च[7] काल[8]कर्मनिमित्ततः ॥ उत्पत्ति[9]काले युक्ताना[10]मात्मानं च क्षणस्थितम् । नित्यं सन्तानमेतेषां[11] पञ्चस्कन्धात्मना स्थितम्[12] ॥ संस्काररूपविज्ञानसंज्ञादुःखात्मना स्थितिः[13] । दुःखाभावं सुखं चाहु[14]रूपज्ञानसन्ततिम् ॥ मोक्षं स[15] समुदायो हि नैकस्मादेव[16] युज्यते । नो[17]भयोश्चोभयत्वं[18] यत्समुदायत्वपेक्षया[19] ॥ अतोऽन्योऽन्याश्रयत्वेन समुदायो न युज्यते ॥१८॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ १९ ॥ अन्योऽन्या[20]पेक्षया पुंमः समुदायत्ववेदनम्[21] । स्यात्त[22]त्सङ्घातनत्वेऽपि तत्र[23] सामीप्यहेतुकम् ॥ इति चेत्कार्यसम्भूति[24]मात्रव्याप्रतिकारणम् ।

---

[1] नित्यनाशरहितम्. [2] रूपादिमत्त्वात्. [3] परमाणूनाम्. [4] श्रुतिभिः. [5] आहुः. [6] स्वभावेनैव क्षणिकम्. [7] जगदाहुः. [8] कर्माख्य. [9] सृष्टिकाले. [10] संश्लिष्टतयोत्पन्नानामणूनाम्. [11] अणूनाम्. [12] जगद्भ्रमम्. [13] स्कन्धानाम्. [14] निर्विषय. [15] गोघटादिबुद्धिविषयः. [16] परमाणोः. [17] सङ्घातात्. [18] समुदितानेकत्वम्. [19] भवति. [20] परमाणुनानापेक्षया. [21] कदाचित् अतः सृष्टिन्यायस्था [22] समुदायस्य. [23] परमाणु. [24] उत्पत्तिम्.

न तु [1]कार्यविशेषेषु व्यापृतं कारणं भवेत् ॥ अतोऽर्थेन्द्रियसंयोगि[2]
रूपकारणताऽऽत्मनः[3] । संयोगिरूपराहित्यान्नैव [4]तज्ज्ञानताऽपि हि ॥
विशेष[5]कार्यजनकं यदि कारणमिष्यते । कुतः समानरूपत्वं कार्याणा
मपि सर्वशः ॥ अतोऽनियत्या यत्कि[6]ञ्चिद्यस्य यस्यापि कारणम्[7] ।
अदृष्टमपि तस्यैव विशेषापादकं कुतः ॥ यस्य कस्यापि यत्किञ्चि
द्विशेषमुपपादयेत् । कार्यं च कारणं चैव यत्किञ्चिद्यस्य कस्यचित्[8] ॥
भवेन्नियामकाभावादिदमस्यैव कारणम् । इति नित्यविनाशित्वे केन
मानेन गम्यते ॥ इदं न जायतेऽमुष्मादित्यत्रापि न कारणम् ॥१९॥
॥ ॐ अनुस्मृतेश्च ॐ ॥ २५ ॥ विनाशोत्पत्तयश्चैव न
दृश्यन्ते सदातनाः । दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुषु ॥ २५ ॥
॥ ॐ आकाशे चाविशेषात् ॐ ॥ २४ ॥ फलादीना[9]
विशेषेण[10] सर्वत्राप्यनुमीयते । सत्त्वेन क्षणिकत्वं चेदाकाशस्या-
विशेषतः[11] ॥ अविशेषोऽखिल[12]स्यापि सत्त्वार्कि नानुमीयते ।
यथाकाशस्य सत्त्वं न कुत एव नरादिषु[13] ॥ सधर्मिप्रतियोगित्व-[14]
मभावस्य नियामकम् । तौ[15] विना नह्यभावश्च क्वचिद्दृष्टः कदाचन ॥
अधर्मिप्रतियोगित्वमाकाशस्यावगम्यते । स्वीकारत्यागतोऽदृष्टदृष्टयोः
सर्ववस्तुषु ॥ गुणानुमत्त[16] एवासौ विदधात्यधिकं[17] पुनः ॥ २४ ॥
॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ २० ॥
उत्तरोत्पत्तिमात्रेण विनाशात्पूर्ववस्तुनः । न संस्कारापेक्षत्वं च

---

1 विसदृशकार्यजनने 2 ग्राह्यग्राहकरूपयो अर्थेन्द्रिययो कार्ययो
3 नैव 4 आत्मन 5 विसदृश 6 अदृष्टम् 7 स्यात् 8 एव
9 देहदीपादीनाम 10 परिमाणभेदेन दृष्टान्तेन 11 पूर्वोत्तरक्षणयो
भेदर्शनाभावात् 12 फलादे 13 देहादिषु 14 अपरगतत्वम्
15 तज्ज्ञानम् 16 उन्मत्ते 17 स्यात

युज्यते [1]कस्यचित्कचित्[2] ॥ अतो ज्ञातं[3] मयेत्यादि न ज्ञेय[4]मनुमा[5] कुतः । एकत्वमनुभूतिस्थं[6] त्यक्त्वा निर्मानिका भिदा ॥ कुत आत्मादिकेषु स्याद्वल्येवानुभवो यतः । कार्यकारणयोश्चैककालीनत्वं विना कथम् ॥ पूर्वसंस्कारयोगी स्यादुत्तरो नियमेन च । संबद्धा एव संस्कारमन्यत्राधदधतेऽखिलाः ॥ असंबद्धः कथं पूर्व उत्तरे वासनाकरः । एककालतया योगं विना संस्कारतः कथम्[7] ॥ क्षणमात्रमवस्थानं स्वीकृतं सर्ववस्तुषु । पूर्वमध्यापरकलाविकलः क्षण इष्यते ॥ २० ॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ २१ ॥ पूर्वभावभवं[8] कार्यमुत तन्नाशसंभवम् । यौगपद्यं सति भवेदुत्पाद्यानामशेषतः ॥ विनाशे चेन्न तत्कार्यं [9]कार्योत्पत्तौ च का प्रमा । [10]अभेदेऽपि विशेषेण[11] देहदीपफलादिषु ॥ विशेष[12]दर्शनं युक्तमस्माक[13]मनुभूतितः । विशेषदर्शनं मानं यदि न स्थैर्यदृक्कुतः[14] ॥ दिक्सुखे च [15]खदृष्टान्ताद्भावौ[16] [17]सच्चेत्कचिद्भवेत्[18] । विश्वं प्रत्यक्षगं त्यक्त्वा तयोर्योऽनुमितं वदेत् ॥ मायावादिवदेवासावुपेक्ष्यो भूतिमिच्छता । सर्वप्रमाणसिद्धं [19]यद्बुद्धेर्भेदेन सर्वदा ॥ कथं नु तस्य बुद्धित्वं विश्वमन्यच[20] किंप्रमम्[21] । सर्वलोको बिभेत्यज्ञो यस्मादनुभवात्सदा ॥ तस्यापलापिनः किं न निष्प्रमाणकवादिनः । [22]सोऽहं तदिदमेवाहं सुखी सद्गगनं दिशः ॥ सत्या इत्याद्यनुभवाः

---

[1] कारणस्य. [2] कार्ये. [3] व्याप्तत्वेनज्ञातं यत् तदत्र विद्यते इति. [4] ज्ञातुं शक्यम्. [5] ततश्च. [6] प्रत्यभिज्ञासिद्धम्. [7] अनुमानादिव्यवहारः. [8] कारणस्य सत्वेजन्यम्. [9] प्रतिक्षणम्. [10] पूर्वोत्तरक्षणयोः. [11] आरंभयाशात् वैलक्षण्येन. [12] परिमाणभेदस्य. [13] परिणामवादिनां मते. [14] मानम्. [15] आकाश. [16] भावरूपे. [17] सद्भावः. [18] चेत् तद्दृष्टान्तेन. [19] ज्ञानात् भिन्नत्वेन. [20] ज्ञानात्. [21] किं प्रमाणकम्. [22] स एव.

सदा तत्प्रतिपक्षगाः । अतो निर्मानमखिलप्रमाणप्रतिपक्षगम् ॥ दुर्मतं कोऽनुगृण्हीयाद्विनाऽसुरतर्तिं कश्चित् ॥ २१ ॥ ७ ॥

॥ ॐ [1]नासतोऽ[2]दृष्टत्वात्[3] ॐ ॥ २६ ॥ [4]अपरः शून्य[5]मखिलं मनोवाचामगोचरम् । निर्विशेषं स्वयंभातं निर्लेप[6]मजरामरम् ॥ अशेषदोषरहितमनन्तं देशकालतः । वस्तुतश्च[7] [8]तदसीति नित्योपासाऽपरोक्षितम् ॥ रागादिदोषरहितं [9]तद्भावं योगिनं नयेत् । तस्यैवानादिसंवृत्या[10] नानाभेदात्मकं जगत् ॥ सदिवाभाति सत्त्वं सांवृतं तस्य चेष्यते । पारमार्थिकसत्यत्वं शून्यादन्यस्य न क्वचित् ॥ सांवृतेनैव सत्त्वेन व्यवहारोऽखिलो भवेत्[11] । शून्यात्संवृतियोगेन त्रिधमेतत्प्रवर्तते ॥ सृष्टिकाले पुनश्चान्ते [12]स्तिमितं शून्यतां व्रजेत् । इति ब्रूते तमुद्दिश्य जगाद जगतां गुरुः ॥ २६ ॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ [13]नासतो जगतो भावो[14] न हि दृष्टाऽसतो जनिः । मतः[15] कश्चित्प्रमाणं च दृष्टिरेवाखिलाद्वरम् ॥ ॐ उदा[16]सीनानामपि चैवं सिद्धिः ॐ ॥ २७ ॥ यद्येवं सस्यमरसान्मधुरादि पीनता । भवेज्जनस्य मार्जारश्रृङ्गं गोरिव घातकम् ॥ कार्यार्थी कारणं सच्च नोपादयात्कथञ्चन । न प्रवर्तेत चेष्टाय शून्यादेवेष्टसम्भवात् ॥ देशकालादिनियमो न हि शून्यात्सतो[17] भवेत् । पुरुषेच्छानुसारेण यदि किञ्चित्प्रजायते ॥ किं नानुमीयते तद्वद्वस्तुता-

[1] पुरुषः. [2] आदिमत्कालीन कार्यस्य कर्ता अनुमातव्यः. [3] तथा दृष्टत्वात्. [4] अपरः माध्यमिकः इति ब्रूते. [5] अखिलं जगत् शून्यमेव. [6] धर्माधर्मसम्बन्धशून्यम्. [7] अनन्तम्. [8] तच्छून्यमहम्. [9] शून्यत्वरूपं मोक्षम्. [10] संव्रियते अनया इति अविद्यया. [11] स्वप्नवत्. [12] निष्क्रियम्. [13] शून्यात्. [14] जन्म. [15] मतः कार्यस्य. [16] हेयोपादेयोपेक्षणीय पुण्यविषयाणाम्. सस्यमरसादीनामपि मधुरादि पीनत्वादिः स्यात्. [17] जायमानस्य.

त्पुरुषोद्भवः[1] । सर्वस्यापि ॥ २७ ॥ ॐ नाभाव उपलब्धेः ॐ ॥ २८ ॥ न [2]चाभावो विश्वं सदिति गम्यते ॥ यतोऽनुभवरोधे तु वचनं वादिनः कुतः । स्वप्न[3]भ्रान्तिवदेवेदं संवृत्त्यैवोपलभ्यते ॥ यदि सत्त्वेन ॥ २९ ॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥ ॥ २९ ॥ किं चात्र भ्रमो नैव निवर्तते ॥ अनादेरस्य विश्वस्य [4]निवृत्तिर्यदि चेष्यते । निवृत्तिश्च निवर्तेत तस्या भ्रान्तित्वसम्भवात् ॥ दृष्टस्य[5] भ्रान्तिता[6] चेत्स्यादृदृष्टे[7] न भ्रमः कुतः । गवामशृङ्गिभावेन[8] न हि स्याच्छशशृङ्गिता ॥ अस्माकं[9] तु प्रमाणेन [10]प्रसादादीश्वरस्य च । उक्तभंग्याऽऽगमानां च प्रामाण्याद्युज्यतेऽखिलम्[11] ॥ दृश्यत्वाद्विमतं मिथ्या स्वप्नवद्वेदियं च मा[12] । मिथ्या चेत्साध्यसिद्धिर्न व्यभिचारो न चेद्भवेत् ॥ साधकत्वमसत्यस्य साध्यं विप्रतिपत्तितः । तस्य चेत्यनवस्था स्यात्सत्त्वं[13] चास्यानुभूतितः[14] ॥ अनुभूतिविरोधेन मिथ्यात्वे मा न काचन । अतीतानागतौ कालावपि नः साक्षिगोचरौ ॥ [15]तत्सम्बन्धितया सत्त्व[16]मपि दृष्टस्य साक्षिगम् । दृढदृष्टं[17] तु यद्दृष्टं दृष्टाभासस्ततोऽपरम् ॥ भ्रान्तेः[18] संवृतिसत्यस्य विशेषो[19] व्यभिचारवान् । तेनाङ्गीकृतः सम्यक्स नः सत्यत्वमेव हि[20] ॥ विज्ञानाद्व्यभिचारो[21]ऽस्य कदाचित्स्यादिति भ्रमा । नैव दृष्टा प्रमा सा च न भवेत्स्वविरोधतः[22] ॥ भेदो[23] विशेष्यधर्म्यादिग्रहणापेक्षया

---

[1] पुरुषात्. [2] न भवतीति असत्. [3] स्वप्नभ्रान्त्योरिव. [4] बाधः. [5] प्रमाणदृष्टस्य. [6] कल्पितत्वम्. [7] प्रमाणादृष्टे शून्ये. [8] सहिता. [9] सतः कारणत्ववादिनांमते. [10] सङ्कल्पात्. [11] परेणाक्षिप्तम्. [12] दृश्यत्वानुमानम्. [13] अबाध्यत्वम् [14] सिद्धम्. [15] कालान्तर. [16] अबाध्यत्वम्. [17] निर्दोषत्वेन. [18] विषयात् शुक्तिरजतात्. [19] वैलक्षण्यम्. [20] साधयिष्यति. [21] निवृत्तिः. [22] स्वविषयस्य स्वस्य च बाध्यत्वापादकत्वात्. [23] सत्यत्वप्रत्यक्षस्य तर्कबाधं निराह.

यदि । अन्योऽन्याश्रयताहेतोर्दुर्ग्राह्य इति यन्न तत् ॥ स्वरूपं वस्तुनो भेदो यन्न तस्य ग्रहेऽग्रहः । अन्यथाऽस्मामुना भेद इति वक्तुं न शक्यते ॥ अगृहीतो यदा भेदस्तदा स्वस्मादिति ग्रहः । स्वात्प्रतीति विरोधाच्च न हि कश्चित्तथा वदेत् ॥ धर्मित्वप्रतियोगित्वतद्भेदा युगपद्यदि । विशेषणं विशेष्यं च तद्भावश्चैव गृह्यते ॥ को विरोधः स्वरूपेण गृहीतो भेद एव तु । अस्मादमुष्मादिति पुनर्विशेषेणैव गृह्यते ॥ किं च भेदः कथं ग्राह्य इति यः परिपृच्छति । [1]धर्म्यादिभेदग्रहणात्तेनोक्तोऽन्योऽन्यसंश्रयः ॥ अन्यत्वाग्रहणे प्रोक्तः कथमन्योऽन्यसंश्रयः । अन्यत्वं यदि सिद्धं स्यात्कथमन्योऽन्य[2]संश्रयः ॥ एतादृशस्य वक्तारावुभौ जात्युत्तराकरौ[3] । मायी माध्यमिकश्चैव तदुपेक्ष्यौ बुभूषुभिः ॥ यच्छून्यवादिनः शून्यं तदेव ब्रह्म मायिनः । न हि लक्षणभेदोऽस्ति निर्विशेषत्वतस्तयोः ॥ अनृतादिविरोधित्वमुभयोश्च स्वलक्षणम् । स्ववाक्या[4]भावसंवादान्न कृत्यं प्रतिवादिनः ॥ तत्पक्ष[5] इति वैधर्म्यान्न समादिवदित्यजः । अप्रयत्नाचिराचक्रे चेति दृष्टिनिरुद्धताम् ॥ निष्प्रमाणत्वमप्यस्य[6] सूचयामास विश्वकृत् ॥२९॥८॥

॥ ॐ न भावो[7]ऽनुपलब्धेः ॐ ॥ ३० ॥ ज्ञानमेकमखिलज्ञेयाकारं प्रभासते । तत्र[8] सन्ततिभेदश्च स्वभेदो[9] भेद एव च ॥ कल्पिताः प्रतिभान्त्ये नानासंवृतिभूमिषु । इत्येतदपि नो युक्तं न हि ज्ञानतया जगत् ॥ [10]भासतेऽनुभवस्यैव निरुद्धत्वादपेशलम् । तन्मतं ॥ ३० ॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥ क्षणिक-

[1] धर्म्यादिग्रहणसापेक्ष. [2] भेदस्य ज्ञातत्वेन अन्योन्याश्रयस्य अप्रतियन्धकत्वात्. [3] छलोत्तरस्य आकरः निधिः. [4] स्ववाक्यस्य-हेतुवाक्यार्थभूत ह्वयत्वस्य. [5] तन्मिथ्यात्वसाधनविषये [6] मिथ्यात्वस्य. [7] ज्ञानात्मकं जगत्. [8] ज्ञानज्ञेययोः भेदः इति संबन्धः. [9] पूर्वोत्तरज्ञानभेदः. [10] अनुभवेन.

त्वाच्च ज्ञानस्य स्थिररूपतः ॥ ज्ञेयस्योक्तप्रकारेण[1] ॥ ३१ ॥
॥ ॐ सर्वथाऽनुपपत्तेश्च ॐ ॥ ३२ ॥ सर्वश्रुतिविरोधतः । अनुभूतिविरुद्धत्वादपि पक्षा इमेऽशिवाः ॥ ३२ ॥ ९ ॥

॥ ॐ नैकस्मिन्नसम्भवात् ॐ ॥ ३३ ॥ आह क्षपणको विश्वं सदसद्द्वयमद्वयम् । द्वयाद्वयमतत्सर्वं सप्तभङ्गि सदातनम् ॥ नैतत्पदार्थ एकस्मिन्युक्तं दृष्टिविरोधतः । भावाभावतया विश्वं येन रूपेण मीयते ॥ तद्रूपमेव तदिति नियमः केन वार्यते । तत्तद्दोपनिवृत्त्यर्थं स्वीकृता तत्तदात्मता ॥ यदि तैरखिलैर्दोषैर्लिप्यते चलदर्शनः । *अतिहाय प्रमाणाप्तनियमं सदसत्तया* ॥ *अशेषमाविरुद्धं* च निर्मानं व्याहतं सदा । सर्वप्रकारं वदतो दृष्टहानिरमग्रहः[2] ॥ स्वव्याहतत्वमित्याद्या दोषाः सर्वे भवन्ति हि । वक्ति स्वप्रभ[3]मात्मानं देहमानं ॥ ३३ ॥ ॐ एवं चात्माकार्त्स्न्यम् ॐ ॥ ३४ ॥
॥ ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥
॥ ३५ ॥ [4]तदप्यलम् ॥ दुष्टं नानाशरीरेषु प्रवेशादन्यथा[5]भवात् । अन्यथाभावि यद्वस्तु तदनित्यमिति स्थितिः[6] ॥ तन्मते[7] [8]तदनित्यत्वं [9]पुद्गलस्यानिवारितम् । नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिणः[10] ॥ लक्षणस्य[11] निवृत्तौ तु[12] स्याच्च तच्चेतने क्वचित् । ओतप्रोतात्मकत्वं तु पटे देहेऽङ्गसंस्थितिः ॥ इत्यादिलक्षणस्यैव निवृत्तौ स्यादनित्यता । भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मते ॥ नैवं तस्यान्यथाभावो यस्यानित्यत्वमीरितम् । रूपादियुक्तस्य तथा जगन्नाशित्वसिद्धये ॥

[1] अनुस्मृतेश्चेत्यत्र. [2] अप्रामाणिकस्वीकारः. [3] स्वयं प्रकाशम्. [4] देहपरिमाणत्वम्. [5] आत्मनः विकारापत्तेः. [6] व्याप्तिः. [7] जैनमते स्वीकृता. [8] आत्मनः. [9] देहस्य इव (आत्मनः). [10] लक्ष्यस्य अनित्यता स्यात्. [11] चैतन्यादेः. [12] एव.

व्याप्त्या तयाऽन्यथाभावादात्मनोऽनित्यता भवेत्॥३५॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥३६॥ नित्योर्ध्वगतिरप्येषा या मुक्तिरिति कथ्यते। अलोकाकाशमाप्तस्य कथं न विकृतिश्च सा॥ कीदृशश्चान्यथाभावो नाशहेतुतयेष्यते। संस्थानापगमश्चेत्स न हि भूसागरादिषु॥ यः कश्चिदन्यथाभावो यदि मुक्तिश्च तादृशी। देहमाने विकारस्स्यादिति स्यात्सूनात्मनः॥ आह हस्त्यादिदेहेषु ह्यपि स्यादन्यथा[1]भवः। अणुदेहस्य जीवस्य गजत्वे विकृतिर्हि या॥ देहव्याप्तौ विशेषः कस्तस्याः [2]स्यात्सुतनौ च नुः[3]। गीतात्पुष्पफलावाप्तिः स्पर्शात्कार्श्यं रसात्स्थितिः॥ अपि वृक्षस्य दृश्यन्त इति नाऽनात्मता भवेत्। एवं चात्माकार्त्स्न्यमिति तत एवाह वेदवित्॥ ३६॥ १०॥

॥ ॐ पत्युरसामञ्जस्यात् ॐ ॥३७॥ सर्वज्ञत्वादिकैस्सर्वैर्गुणैरुक्तं सदाशिवम्। जगद्विचित्ररचनाकर्तारं दोषवर्जितम्॥ आहुः पाशुपतास्तच्च बहुश्रुतिविरोधतः। नोपादेयं मतं ह्यस्य देवस्य स्तुहिगर्तगम्॥ उरिपपंप शिरस्तस्य गृणीषे सत्पतिं पदम्। यद्विष्णोरुपमं हन्तुं रुद्रमाकृष्यते मया॥ धनुर्ये कामये तं तमुग्रं मा शिश्नदेवताः। अन्त्विश्वदेवतानेकोऽमावामीन्नारायणः परः॥ तस्माद्रुद्रस्सम्प्रमादश्चाभूतां वैष्णवं मखम्। यज्ञेन यज्ञमयजन्तास्त्रग्नन्पुरुषं पशुम्॥ यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा। इत्यादिश्रुतिसामर्थ्यात्पारतन्त्र्यं जनिर्मृतिः॥ पराधीनपदप्राप्तिरज्ञत्वं प्रलयेऽभवः[4]। प्रतीयन्ते सदोषत्वाचेशः पशुपतिस्ततः॥ ६७॥ ॐ सम्बन्धानुपपत्तेश्च ॐ॥ ३८॥ अशरीरत्वतस्तस्य सम्बन्धो[5] जगता

---

[1] विकारः. [2] वृक्षदेहस्थस्य. [3] पुरुषस्य या विकृतिः तस्याश्च को विशेषः. [4] असत्त्वम्. [5] कर्तृत्वेन.

क्वचित् । कर्तृत्वेन न युज्येत, देहिनो[1] ज्ञानदृष्टितः[2] ॥ ३८ ॥
॥ ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ ४० ॥ न च देहादिवद्विश्वमस्य स्याद्भोगसम्भवात् ॥ ४० ॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥३९॥ अधिष्ठाने स्थितः कर्ता कार्यं कुर्वन्प्रतीयते । नास्याधिष्ठानयोगोऽस्ति भूतानां प्रलये तदा ॥ अदेहश्चेदसर्वज्ञः शिलाकाष्ठादिवत्सदा । देही चेदन्तवानेव यज्ञदत्तनिदर्शनात् ॥ न चैतदखिलं विष्णौ श्रुतिप्रामाण्यगौरवात् । मनोबुद्ध्यङ्कितां विष्णोर्लक्षयामो य एव सः ॥ स एव देहो विज्ञानमैश्वर्यं शक्ति[3]रूर्जिता । देहो विष्णोर्न ते विष्णो वासुदेवोऽतो भवेत् ॥ एको नारायण आसीन्न ब्रह्मा न च शङ्करः । अजस्य नाभावध्येकमर्पितं मात्रया परः ॥ सद्देहस्सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ॥ आनन्द एक एवाग्र आसीन्नारायणः प्रभुः । प्रियं तस्य शिरो मोदप्रमोदौ च भुजौ हरेः ॥ आनन्दो मध्यतो ब्रह्म पुच्छं नान्यदभूत्क्वचित् । मनसोऽस्याभवद्ब्रह्म ललाटादपि शङ्करः ॥ पक्षयोर्गरुडः शेषो मुखादासीत्सरस्वती । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ इत्यादिश्रुतिसन्दर्भबलान्नित्यगुणात्मनः । विष्णोर्देहाज्जगत्सर्वमाविरासीदितीयते ॥ मानवत्त्वाद्विरोधः को नामानं क्वचिदिष्यते । अविरोधो विरोधश्च मानेनैव हि गम्यते ॥ अत उक्तं समस्तं च वासुदेवस्य युज्यते । शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचकाः ॥ नामानि सर्वाणि च यमेको यो देवनामधाः । विष्णुनामानि नान्यस्य सर्वनामा हरिः स्वयम् ॥ न नारायणनामानि तदन्येष्वपरे हरौ । इत्यादिश्रुतयस्तत्र मानं चोक्तः समन्वयः ॥ पुराणा[4]नि [5]पुराणार्थैर्विरुद्धत्वान्न तत्प्रमा । तद्विरुद्धेषु नो मानं

[1] देहवत्तामेव. [2] ज्ञानदर्शनात्. [3] बलवती. [4] शैव. [5] वैष्णव.

पूर्वापरविरोधतः ॥ समत्राद्यविरोधाच्च नियमा[1]द्वैष्णवेष्वपि । मोहार्थमुक्तितश्चैव विष्णुरेको गुणार्णवः ॥ स्कन्दसूर्यगणेशादि मतानि न्यायतोऽमुतः । निराकृतान्यशेषेण सिद्धान्तस्याविशेषतः ॥३९॥११॥

॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥४२॥ निराकृतौ विशेषस्य[2] भावाच्छक्तिमतं पृथक् । दृश्यते महती देवी ह्रीङ्कारी सर्वकारणम् ॥ त्रिपुरा भैरवीत्यादिनामभिः साऽभिधीयते । तस्याः सदाशिवाद्याश्च जायन्ते देव[3]मानवाः ॥ भूतभौतिकमप्येतदिति तच्चोपपद्यते । दृष्टा पुंभ्यः सदा सृष्टिः स्त्रीपुंभ्यो वा विशेषतः ॥ केवलाभ्यो न हि स्त्रीभ्यस्तत उत्पत्त्यसम्भवात् । नार्च्यं महावाममतं वामैरन्यैरुदीर्यते ॥ शिवोपमर्दना शक्तिः ससर्जेदं समन्ततः । इति तच्चोपपन्नं न ॥४२॥

॥ ॐ न च कर्तुः करणम् ॐ ॥४३॥ शिवस्याकरणत्वतः ॥ अदेहत्वादपि ह्यन्ये ब्रूयुः सर्वज्ञमीश्वरम् । अणुवामा न तद्युक्तं ॥४३॥

॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ४४ ॥ ईशवादप्रवेशनात् ॥ सार्वज्ञादिगुणैर्युक्तं गुरुकल्पनया द्वयम्[4] । न युज्यते ततस्त्वीश एक एव प्रयोजकः ॥ उक्तदोषश्च तत्पक्ष इति नैवात्र दृश्यते ॥ ४४ ॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४५ ॥ श्रुतिस्मृतीतिहासानां[5] सामस्त्येन विरोधतः । [6]सतां जुगुप्सितत्वाच्च नाङ्गीकार्यं हि तन्मतम् ॥ पञ्चरात्रनिषेधार्थमेतान्या[7]चक्षते यदि । सूत्राण्यतिविरुद्धं तद्यत आह स भारते ॥ 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते ॥ पञ्चरात्रविदो ये तु यथाक्रमपरा नृप । एकान्तभावोपगता वासुदेवं विशन्ति ते' ॥ इति, गीता च तच्छास्त्रमङ्क्षेप इति हीरितम् ।

---

[1] पञ्चप्रकारत्वात्. [2] शङ्काविशेषस्य. [3] देवाश्च मानवाश्च [4] शिवशक्त्याख्यम् [5] इतिहासैः. [6] सद्भिः. [7] व्याचक्षते

वेदेन पञ्चरात्रेण भक्त्या यज्ञेन चैव हि ॥ दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि । इति वाराहवचनं श्लोका इति वचः 'श्रुतौ ॥ वेदैश्च पञ्चरात्रैश्च ध्येयो नारायणः परः । पञ्चरात्रं च वेदाश्च विद्यैकैव द्विधेयते' ॥ इत्यादि वेदवचनैः पञ्चरात्रमपोद्यते । कथमेवात्र दोषः क उत्पत्तिर्ज्ञोऽत इत्यपि ॥ इहैवोक्ता न चाभूतभावस्तत्रापि कथ्यते । 'अनादिकर्मणा बद्धो जीवः संसारमण्डले ॥ वासुदेवेच्छया नित्यं भ्रमती'ति हि तद्वचः । न हि संसारसादित्वं पञ्चरात्रोदितं क्वचित् ॥ जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु । वासुदेवाज्जनिः प्रोक्ता प्रद्युम्नस्य ततस्तथा ॥ मनोऽभिमानिनः कामस्यैवं साक्षाद्धरेः क्वचित् । सङ्कर्षणादिनाम्नैव नित्याचिन्त्योरुशक्तितः ॥ व्यूह युक्तोऽन्यथानुध कथं दुष्टत्वमुच्यते । 'यदि विद्याचतुर्वेदानि'तिवद्वेदपूरणम्[2] ॥ पञ्चरात्रादिति कुतो द्वेषः शाण्डिल्य[3]वर्तने । अतः परमशास्त्रोरुद्वेषादुदितमासुरैः ॥ दूषणं पञ्चरात्रस्य वीक्षायामपि न क्षमम् । अतोऽशेषजगद्धाता निर्दोषोरुगुणार्णवः॥ नारायणः श्रुतिगणतात्पर्यादवसीयते। अन्धन्तमः प्रविशन्ति ये त्वविद्यामुपासते ॥ ततो भूय इवायान्ति एतस्या नैव निन्दकाः । ततो विद्यामविद्यां च यो जानात्युभयं सह ॥ दोषज्ञानादतीत्यैतां विद्ययाऽमृतमश्नुते ॥ ४५ ॥ १२ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यायस्य द्वितीयः पादः ॥२॥२॥ श्लोकसङ्ख्या ३१३ ॥४२८॥

॥ ॐ ॥ अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्मनाम् ॥ स्वरूपनिर्णयायैव वचनानां परस्परम् । पादेनानेनाविरोधं दर्शयत्यमितद्युतिः ॥ अनुभूतियुक्तिबहुवाक्यैस्तोल्यं च ततोऽधिकम् । एतत्सर्वं ततः साम्यं द्वारवैयर्थ्यमेव च ॥ दृष्ट-

[1] बृहदारण्यके. [2] वेदार्थ निर्णये महायत्वेन न्यूनता परिहारः.
[3] शाण्डिल्यस्य आचरणे.

युक्त्यनुसारित्वमुक्तान्यार्थाविरोधतः। प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तिता ॥ लोक[1]दृष्टानुसारित्वं जीवसाम्यमनादिता । तत्रतत्र परिज्ञानं गुणसाम्यश्रुती तथा ॥ उत्पत्तिमत्त्वं स्वगुणाननुभूत्यल्पकल्पने । नानाश्रुतिश्च वैचित्र्यं युक्तयः पूर्वपक्षगाः ॥ व्यवस्था[2]ऽनुपपत्तिश्च स्वातन्त्र्यमनुसारिता । मुख्यता शक्तिमत्त्वं च वैरूप्यं सर्वसङ्ग्रहः ॥ गत्यादिरीशशक्तिश्च सर्वमानविरोधिता । अभीष्टासिद्धिसुव्यक्ती शास्त्रसिद्धिर्विपर्ययः ॥ विशेषकारणं चेति सिद्धान्तस्यैव साधिकाः ॥

॥ ॐ न वियदश्रुतेः ॐ ॥ १ ॥ प्रकृतिः [3]पुरुषः कालो वेदास्तदभिमानिनः । महदाद्याश्च जायन्ते पराधीनविशेषिता ॥ इदं सर्वं ससर्जेति जनिमत्त्वमिहोदितम् । अवकाशमात्रमाकाशः कथमुत्पद्यतेऽन्यथा ॥ यदनाकाशता पूर्वं किं मूर्तनिबिडं जगत् । मूर्तसम्पूर्णता चैव यदनाकाशता भवेत् ॥ मूर्तद्रव्याणि चाकाशे स्थितान्येव हि सर्वदा । अत आकाशशब्दोक्तस्तद्देवोऽत्र विनायकः ॥ देहोत्पत्त्या समुत्पन्न इति श्रुत्याऽभिधीयते । भूतमप्यसितं दिव्यदृष्टिगोचरमेव तु ॥ उत्पद्यतेऽव्याकृतं हि गगनं साक्षिगोचरम् । प्रदेश इति विज्ञेयं नित्यं नोत्पद्यते हि तत् ॥ तथाऽपि मूर्तसम्बन्धपरतन्त्रविशेषयुक् । खमेवोत्पत्तिमन्नाम श्रुतिशब्दविवक्षितम् ॥ प्रकृतिः पुरुषः काल इत्येते च समस्तशः । ईशाधीनविशेषेण जन्या इत्येव शब्दिताः ॥ कालप्रवाह एवैको नित्यो न तु विशेषवान् । पुरुषाव्यक्तकालानां रमैवैकाभिमानिनी ॥ सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया । प्रांसर सृष्टेत्युदिता प्रधानं विकृतेरपि ॥ पुमांसो देहसम्बन्धात्सृष्टिमन्त इतीरिताः ॥ १ ॥ १ ॥

॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ ८ ॥

एवं प्रलयकालेऽपि प्रतिमातपरावरः । मुख्यवायुर्नित्यसमः शरीरो-

[1] स्रष्टुरन्यस्यमारकत्वम् [2] सर्वोत्तमत्वानुपपत्तिर्वायो: [3] जीवचैतन्यम्.

त्पत्तिकारणात् ॥ पराधीनविशेषेण जनिमानेव शब्दितः । नैव किञ्चित्ततो जन्मवर्जितं परमा[1]द्दते ॥ पराधीन विशेषत्वे[2] जन्मनः, स्थूलताभवः[3] । पूर्वशब्द[4]विलोपश्च यदि जन्मेति कीर्त्यते ॥ रमाया नैव जन्मास्ति चैतन्यस्यापि केवलम् । प्रधानस्य च वेदस्य वेदस्यापीश्वरेच्छया ॥ व्यक्तिर्नाम विशेषोऽस्ति तस्मात्तद्दशतैव हि । उत्पत्तिरत्र कथिता ॥ ८ ॥ २ ॥

॥ ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ९ ॥

स्वतन्त्रत्वात्परात्मनः ॥ नैवोत्पत्तिः कथमपि न स्वतन्त्रं ततोऽपरम् ॥ ९ ॥ ३ ॥

॥ ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥

॥ २७ ॥ अच्छेद्यस्यापि जीवस्य विभागं बहुधा हरिः । कृत्वा भोगान्प्रदायैव चैक्यमापादयेत्पुनः ॥ अत ईशवशं सर्वं चेतनाचेतनं जगत् । अविभागं विभागाय यदा नयति केशवः ॥ किमशक्यं परेशस्य तदेति ह्यभिधीयते ॥ २७ ॥ १३ ॥

॥ ॐ पृथगुपदेशात् ॐ ॥२८॥ एवं स्थितेऽपि जीवैक्यं केचिदाहुः परात्मना । तयोऽहमिति पूर्वाभिः श्रुतिभिर्भ्रान्तुमावलात् ॥ न तद्युक्तं यतो विष्णुः पृथगेवाभिधीयते । प्रज्ञानेत्रो लोक इति मुक्तौ भेदोऽभिधीयते ॥ एतमानन्दमित्यन्या परमं साम्यमित्यपि । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च । उपसम्पद्यते ज्योतिः स्वरूपेणाभिपद्यते ॥ तत्र पर्येति जक्षंश्च क्रीडन्नपि सदा सुखी । आचक्ष्व मे परं मोक्षं धीरा यं प्रवदन्ति तम् ॥ इत्युक्त आह वाग्देवी परं मोक्षं प्रजापतेः । ज्ञात्वां

[1] इतिमिदम्. [2] एव. [3] सदसत्य स्थूलत्वेनभवनं (अभूत्वाभवनं).
[4] पूर्वशब्द निवृत्तिः ततः शब्दन्तरप्रवृत्तिश्च स्यात्.

शाखां महानद्यः संयान्ति परितः स्रवाः ॥ धानापूपा मांसकामाः सदा पायसकर्दमाः । यस्मिन्नग्निमुखादेवाः सेन्द्राः सहमरुद्गणाः ॥ ईजिरे क्रतुभिः श्रेष्ठैस्तदक्षरमुपासते । प्रविशन्ति परं देवं मुक्तास्तत्रैव भोगिनः ॥ निर्गच्छन्ति यथाकामं परेशेनैव चोदिताः । भेद-दृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा ॥ कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् । स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना ॥ जाते गुणव्यतिकरे यथापूर्वं प्रजायते । ऋचां त्वः पोषमास्ते च परेण प्रेरिताः सदा ॥ यत्कामस्तत्सृजत्यद्धैवात्मना तत्सृजत्यपि । सहैव ब्रह्मणा कामान् भुङ्क्ते निस्तीर्णतद्गुणः ॥ दुःखादींश्च परित्यज्य जगद्व्यापारवर्जितः । भुङ्क्ते भोगान्सदैवोच्चानित्याद्यागममानतः ॥ मुक्तस्य भेदावगतेः कथमेव ह्यभिन्नता । जीवेशयोर्नानुमा च तदभेदं प्रमापयेत् ॥ मिथ्यैव भेदो विमतो भेदत्वाच्चन्द्रभेदवत् । इति चेत्साध्यधर्मोऽयं सन्नसन्वा न वोभयम् ॥ यदि सन्नपसिद्धान्तः स एवासम्मितीरिते । नोभयं चेन्न सिद्धं तदिति मानस्य दूषणम् ॥ न च मानान्तरेणैतच्छक्यं साधयितुं क्वचित् । अनुमानेन चेत्तत्रैव[1] ह्यनवस्था भविष्यति ॥ न चागमस्तदर्थोऽस्ति नासदासीन्न [2]तद्वदेव् । परिशेषादनिर्वाच्यं यदि सिध्येत्परात्मनः ॥ अनिर्वाच्यत्वमेव स्यात्परिशिष्टो ह्यसौ सदा । न चान्य आगमस्तत्र सदस[3]त्प्रतियोगिनि ॥ न च प्रत्यक्षमत्रास्ति न चार्थापत्तिरिष्यते । बाधा[4]योगात्सत [5]इति बाधा[6]भावत एव हि ॥ दृष्टा[7]पत्तिर्न हि भ्रान्तावपि बाधोऽवगम्यते । [8]विषयस्य कुतो बाधो विद्य[9]मानं हि [10]बाध्यते ॥ न हि वन्ध्यासुतो

[1] अप्रसिद्धविशेषणतापरिहारार्थानुमानपरम्पराद्धारिकैव. [2] इति, तत्त्वोद्योतेऽस्य विस्तरः. [3] सदसती प्रतियोगिनी यस्य तत् तद्विलक्षणे. [4] सच्चेन्न बाध्येत इति सतः. [5] उक्तार्थापत्तिर्न. [6] विभ्वस्य. [7] न बाध्येतेति. [8] भ्रान्तिविषयस्य शुक्त्यादेश्चेत्. [9] रजतादेश्चेन् यत्पूर्वम्. [10] तदेव केनचिद्बाध्यते.

[1]वध्यो यज्ञदत्तो हि वध्यते । [2]बाधायोगात्सत [3]इति व्याप्तिरेषा क्व दृश्यते ॥ कथायं बाध उद्दिष्टो न हि नाशोऽसतो भवेत् । [4]निवृत्तिश्चाप्रवृ[5]त्तस्य कथमेवोपपद्यते ॥ नासी[6]दस्ति[7] भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदा सत्त्वं तेनै[8]वाङ्गीकृतं पुनः ॥ प्रतीतिर्नासत[9] इति वदन्नङ्गीकरोति ताम् । निषेधो ह्यप्रतीतस्य कथञ्चिन्नोपपद्यते ॥ न चोपमा[10] भवेदत्र प्रत्यक्षात्सत्त्वमेव च[11] । शास्त्रगम्यपरेशानाद्भेदः [12]स्वात्मन ईयते[13] ॥ अनु[14]भूतिविरोधेन कथमेकत्वमुच्यते[15] । किञ्चित्कर्ता च दुःखीति सर्वैरेवानुभूयते ॥ सर्वज्ञो भगवान्विष्णुः सर्वशक्तिरिति श्रुतः । अनु[16]भूताद्धि भेदेन श्रुतिरेषा वदत्यमुम् ॥ उपजीव्यविरुद्धं तु कथमैक्यं श्रुतिर्वदेत् । अप्रामाण्यं यदा भेदवाचकस्य[17] भविष्यति ॥ स[18] एव [19]धर्मिणो ग्राही [20]तदभेदः कथं भवेत् । [21]यत्स्वरूप[22]ग्रहे मानं [23]तद्धर्मे न कथं भवेत् ॥ [24]एकविज्ञानविज्ञप्त्या द्वयं मानं भविष्यति । न चेदेकं प्रमाणं [25]तद्द्वयमप्यत्र नो भवेत् ॥ धर्मि[26]ग्राहिविरोधस्तु तस्मान्मानस्य[27]

---

[1] वध्यः-माध्यः. [2] सतः. [3] बाध्यमिदं न, सदित्यनुमाने. [4] तिरोभावादिरूपा. [5] आविर्भावादिरूपप्रवृत्तिरहितस्य. [6] नास्तीति. [7] न. [8] असद्विलक्षण्यमङ्गीकुर्वतैव असत्त्वम्. [9] असतो न प्रतीतिः. [10] प्रमाणमनिर्वचनीयार्थे साहृश्याद्यभावात्. [11] निश्चीयते अतोऽनुपलम्भाभावाद्याभावः प्रमाणम्. [12] जीवस्य. [13] प्रत्यक्षेण. [14] साक्ष्यनुभव. [15] अनुमीयते. [16] साक्ष्यनुभवगोचरजीवात्. [17] आगमस्य भेदग्राहिणः प्रत्यक्षस्यापि. [18] तदा आगमः प्रत्यक्षं च. [19] जीवस्येश्वरस्य च. [20] तयो अभेदः बोध्यः. [21] श्रुतिवाक्यम् [22] ब्रह्म. [23] सार्वज्ञ्यादिधर्मसम्बन्धे. [24] एकविधमेवेदं 'यःसर्वज्ञ' इत्यादि श्रुतिजन्य विज्ञानं न पुनः भ्रमइव स्वरूपमात्रे प्रमाणं विशिष्टांशे तु अप्रमाणमित्यनेकविधमित्येवं परीक्षासहस्ततसाक्षिसिद्धत्वादपि इदं ज्ञानम्, द्वयं-धर्मधर्मिद्वयगर्भ विशिष्टाकारं प्रत्येति. [25] तद्विज्ञानम्, अत्र-विषये, एक-विशिष्टाकार प्रतिपमाण न चेत् तदा द्वयम्, प्रत्यपि-स्वरूपेऽपि नो भवेत्, अविशेषात् [26] श्रुत्या. [27] अभेद.

दूषणम् । नोपजीव्यो ह्यभेदोऽत्र कचिद्भेदश्रुतेर्बलात् ॥ न च मानान्तरोपेयं ब्रह्म[1] तद्भवति कचित् । येन मानेन चोपेयं भेदस्तेनावगम्यते ॥ सर्वज्ञानुभवैवेशो यद्युपेयः कथञ्चन । सर्वज्ञत्वगुणेनैव तया भेदोऽवगम्यते ॥ न दुःखानुभवः कापि मिथ्यानुभवतां व्रजेत् । न हि बाधः कचिद्दृष्टो दुःखाद्यनुभवस्य तु ॥ यदि दुःखानुभूतिश्च भ्रान्तिरित्यवमीयते[2] । अदुःखिताश्रुतिः केन[3] न भ्रान्तिरिति गम्यते[4] ॥ श्रुतिस्वरूपमर्थश्च [5]मानेनैवावमीयते । तच्चेन्मानं गृहीतं ते[6] किं[7] दुःखानुभवे भ्रमः[8] ॥ न च [9]बाधविशेषोऽस्ति [10]यदनाश्रितमेव तत्[11] । बाधो यदनुभूतेऽस्य कथं निर्णय ईयते ॥ कोऽपि ह्यर्थो न निश्चेतुं शक्यते [12]भ्रमवादिना । [13]भ्रमत्वमभ्रमत्वं च [14]यदेवानु[15]भवोपगम् ॥ एकस्य भ्रमता तत्र[16] परस्याभ्रमता कुतः[17] । भ्रमत्वमभ्रमत्वं च सर्वं वेद्य हि साक्षिणा ॥ स चेत्साक्षी कचिद्दुष्टः कथं निर्णय ईयते । विशेषा [18] सर्वं एवैते साक्षिप्रत्यक्षगोचराः[19] ॥ ऊरीकृत्य[20] च [21]तान्सर्वान् व्यवहारः प्रवर्तते । [22]साक्षिणो [23]व्यवसायी तु व्यवहारोऽभिधीयते ॥ तस्मात्सर्वप्रसिद्धस्य व्यवहारस्य सिद्धये । साक्षी निर्दोष एवैकस्सदाऽङ्गीकार्य एव नः ॥ शुद्धः साक्षी यदा सिद्धो [24]दुःखित्वं वार्यते कथम् । उपजीव्यप्रमाणं [25]तद्भेदग्राहकमेव हि ॥ अतो जीवेशयोर्भेदः श्रुतिसामर्थ्यसुस्थिरः ॥ २८ ॥ ॐ तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञ[26]वत् ॐ ॥ २९ ॥ तथापि तु

[1] उपय=ज्ञेयम् [2] श्रुतिमाश्रित्य [3] कारणेन [4] अनुमानमाश्रित्य [5] साक्षिणा [6] ते=त्वया गृहीतं चेत् [7] किं किं निमित्तम् [8] इति [9] बाधकज्ञानरूपो विशेष [10] यत [11] दुःखित्वादिकम् [12] साक्षिणो भ्रमत्ववादिना [13] प्रत्ययानाम् [14] यत [15] साक्षिणैव निर्णय तत [16] ज्ञानेषु एकस्य [17] निर्णेया [18] विविधाश्चान्ये पदार्थाः इति, करणदोषादय [19] एव [20] करणतयोपादाय [21] करणदोषादीन [22] कार्य इति [23] निश्शङ्क [24] तेनासिद्धम् [25] तस्मात् [26] ब्रह्मणि यथाऽभेदोक्ति

चिदानन्दपूर्वास्त[1]त्सदृशा गुणाः। सार[2]स्स्वरूपमस्य[3]ापि मुक्ताव-प्यवशिष्यते[4] ॥ [5]अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि। पौराणानि च वाक्यानि [6]सादृश्याभेदसंश्रयात् ॥ सादृश्याच्च प्रधानत्वात्स्वातन्त्र्या-दपि चाभिदाम्। आहुरीशेन जीवस्य न स्वरूपाभिदां क्वचित् ॥ [7]स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यते। [8]सादृश्यं च विशेषेण[9] [10]जडानां द्वय[11]मेव तु॥ भवेत्सादृश्य[12]मत्यल्पं [13]तृतीयं परमात्मना। ईशरूपक्रियाणां च गुणानामपि सर्वशः॥ तथैवावयवानां[14] तत्स्वरूपैक्यं न मुख्यतः। यथोदकं दुर्गे वृष्टं पर्वतेषु[15] विधावति ॥ एवं धर्मान्पृथक्पश्यंस्ता[16]नेवानुविधावति[17]। इतिश्रुतेर्नोभयं च भेदा-भेदाख्यमिष्यते[18]॥ '[19]एकमेवाद्वितीयं[20] तन्नेह[21] नाना[22]स्ति किञ्चन[23]। मृत्योः[24] स मृत्यु[25]माप्नोति य इह नानेव[26] पश्यति' ॥ इति श्रुताविवेत्यस्माद्भेदाभेदनिराकृतिः। इवो[27]मये[28] च सादृश्य इति वाक्छब्द[29]निर्णये ॥ २९ ॥ १४ ॥

॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ ४३ ॥ भेदस्य मुक्तौ वचनादपि [30]तत्पक्षनिग्रहः। चेतनत्वादि सादृश्यं यद्यभेद इतीष्यते ॥ अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित्। न केन-

---

[1] परमात्मगुण. [2] सारः–स्वरूपम्. [3] जीवस्य. [4] यतः. [5] एव. [6] सादृश्यमेवाभेदः तस्य. [7] ईशेन क्षीराब्ध्यादि. [8] मुक्तस्येशेन. [9] आनन्दादिना. [10] तु. [11] तत्प्रधानकत्वं तदधीनत्वमेव. [12] सत्तादि-नैव 'भूतानि विष्णुः' इत्यादौ सादृश्यम्. [13] आनन्दादिसादृश्यं सञ्जीवानाम्. [14] हस्तादि. [15] दुर्गे. [16] तद्दर्शनमन्वेवाविलम्बेन. [17] नरकम्. [18] सुनकृत. [19] अभिन्नम्. [20] समाधिकरहितम्. [21] ब्रह्मणि. [22] भिन्नम्. [23] गुणादि नास्ति. [24] अनन्तरम्. [25] नरकम्. [26] भिन्नं इव–अभिन्नम्. [27] इवशब्दः. [28] पूर्वपदोक्त-विरुद्धे द्वितीये. [29] तन्नामकग्रन्थे. [30] मुख्याभेदपक्षनिरासः.

चिद्भेदो[1]ऽस्ति भेदाभेदोऽपि वा [2]क्वचित् ॥ [3]समुदायमृते विष्णोः स्वगुणादीन्विनापि वा[4] । इतिश्रुतेर्न तस्यास्ति भेदाभेदोऽपि केनचित् ॥ अभेदश्रुतयोंऽशत्वा[5]त्सादृश्यं चांशता[6]ऽस्य[7] तु । अंशस्तु द्विविधो ज्ञेयः स्वरूपांशोऽन्य एव च ॥ विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्सादृश्यमात्रयुक् । अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः[8] ॥ स[9] एव [10]चेत्स्वरूपांशः प्रादुर्भावा हरेर्यथा । सूर्यमण्डलमा[11]न्येक-स्तत्प्रकाशाभिमानवान्[12] ॥ सूर्योऽथ सप्तमाव्येश्च[13] ब्राह्मोदस्य[14] च वारिपः । कठिणत्वेन [15]मेर्वादेः पृथिव्या अपि देवता[16] ॥ धरादेव्येवमेवैको भगवान्विष्णुरव्ययः । नानावताररूपेण स्थितः पूर्णगुणः सदा ॥ विण्मूत्राद्यभिमानिन्यो यथाऽपभ्रष्ट[17]देवताः । सूर्यादिभ्य-[18]स्तथैवायं संसारी परमात्पृथक् ॥ ४३ ॥ ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ॥ ४८ ॥ [19]देहदोषैश्च दुष्टत्वादपभ्रष्टाख्य देवताः[20] । अन्यास्तु सूर्यादिदेवेभ्यो ह्यनुग्राह्याश्च तैस्सदा ॥ एवमेव पराद्विष्णोः पृथक् संसारिणो मताः । अनुग्राह्याश्च तेनैव तत्प्रसादाच्च मोक्षिणः ॥ न तु मत्स्यादिरूपाणामनुग्राह्यत्वमिष्यते ॥ ४८ ॥ ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ ॥ ४९ ॥ गुणैरशेषैः पूर्णत्वान्मुख्याभेदो परैर्न च ॥ ४९ ॥ ॥ ॐ आभास एव च ॐ ॥ ५० ॥ अंशाभासाश्च सर्वेऽपि

---

[1] विष्णोः स्वगुणादीन् विना. [2] अपि नास्ति. [3] अंशिनं विना 'अंशिनोंशैरभेदोऽयमंशेन तु भिदाभिदा' (अनु. २. २.) इत्युक्तेः. [4] व्यवस्थित विकल्पे. [5] उपपद्यन्ते. [6] परमेश्वरांशत्वम्. [7] जीवस्य. [8] सर्वगत्वादिपरिमाणम्. [9] सः—तत्सामर्थ्यादियुक्तः. [10] सः. [11] अशी सूर्यः. [12] तदंशश्च एक एव. [13] अशश्चैकः. [14] अभिमानी अशी. [15] देवताः अशभूताः. [16] एकैव. [17] नामक देवताः अशरूपाः. [18] पृथक्. [19] परदेह. [20] अन्तर्धानादिशक्तिमन्तः.

परस्यांशा न मुख्यतः । यथैषा पुरुषेच्छाया एत[1]स्मिन्[2]तदाततम् ॥ न तु पुंसा[3]देवत्पादा जीवा एते परात्मनः । पूर्णास्तस्य गुणा एव प्रादुर्भावतया स्थिताः ॥ एवं जगाद परमा श्रुतिर्नारायणं [4]परम् । [5]अक्षयो भगवान्विष्णुर्लक्ष्म्यावासो लये स्थितः ॥ मुक्तैस्सदा चिन्त्यमानो ब्रह्माद्यैस्तारतम्यगैः । प्रकृतिः पुरुषः कालो वेदाश्चेति चतुष्टयम् ॥ नित्यं स्वरूपतो विष्णोर्विशेषावाप्तिमात्रतः । उत्पत्तिमदिति प्रोक्तं लक्ष्मीस्तदभिमानिनी ॥ ततो जातः पुमान्नाम ब्रह्माऽस्यां वासुदेवतः । सूत्रात्मा प्राणनामा[6] च देव्यौ प्रकृति[7]मानिनी ॥ [8]ततो [9]रूपं मह[10]न्नाम [11]ब्रह्मणोऽहंकृतिः शिवः । ब्रह्मणो बुद्धिनाम्नोमा तत इन्द्रो मनोऽभिधः ॥ स्कन्दश्च तत एवान्ये सर्वे देवाः प्रजज्ञिरे । तत्र पूर्वतनः श्रेयान्गुणैस्सर्वै[12]स्समस्तशः ॥ तेभ्यश्च भगवान्विष्णुस्तदधीना इमे सदा । जन्मस्थितिलयाज्ञाननियतिज्ञानसंसृतिः ॥ मोक्षश्च[13] तदधीनत्वमेतेषां नैव हीयते । मुक्तावपि स एवैकः स्वतन्त्रः पूर्णसद्गुणः ॥ इति श्रुत्युपपत्तिभ्यां पादेऽस्मिन्प्रभुणोदितम् ॥ १८ ॥
इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥ श्लोकसङ्ख्या १०३ ॥ ॥ ५३१ ॥

॥ ॐ ॥ श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते । यत्र तन्निर्णयं देवः सुविशिष्टोपपत्तिभिः ॥ करोत्यनेन पादेन तत्र स्पष्टार्थवत्श्रुतिः । विशेषश्रुतिवैरूप्यं माहात्म्यं व्यक्तसद्गुणः ॥

[1] तथा विष्णौ. [2] जीवजातम्. [3] परमपुरुषस्यामृतपादत्रयमिव. [4] विलक्षणम्. [5] एतत्पादोद्देश्यं अधिदैवादिस्वरूपं पिण्डीकृत्याह. [6] सङ्कर्षणात्. [7] मानिन्यौ, सुपांसुलुगिति पूर्व सवर्णः. [8] प्रकृतिपुरुषाभ्याम्. [9-10] महत्तत्त्वस्वरूपम्. [11] सकाशात् शिवः. [12] समस्तेषु. [13] इतीमे.

दृष्टायुक्तिः समानत्वं कर्तृशक्तिर्विमिश्रिता । युक्तयः पूर्वपक्षेषु सुनिर्णीतास्तु तादृशाः ॥ युक्तयो निर्णयस्यैव स्वयं भगवतोदिताः ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥ श्लोकसङ्ख्या ॥ ४ ॥ ॥ ५३५ ॥ द्वितीयाध्यायस्समाप्तः ॥

॥ अथ तृतीयाध्यायः ॥

॥ ॐ ॥ स्वाभाविकान्यथानामसहभावान्यथोक्तयः । अविशेषविशेषौ च सहभावो विमिश्रता ॥ विरुद्धोक्तिः सहस्थानं वैयर्थ्यं चान्यथागतिः । युक्तयः पूर्वपक्षस्य[1] गुणाधिक्यार्थतो भवौ ॥ उपपत्तिर्द्विरूपत्वमाधिक्यमनुरूपता । योग्यता बलवत्त्वं च विभागः कारणाभवः॥ क्लृप्तिरन्या गतीश्चैव सिद्धान्तस्यैव साधकाः[2]॥ ॐ योनेः शरीरम् ॐ ॥ १ ॥ बीज[3]पूर्वयोनीनां [4]सङ्गातिनियमोज्झितिम् । [5]अथशब्देन भगवानाह [6]कारणतश्च ताम्[7] ॥ २० ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥ श्लोकसङ्ख्या ५ ॥ ५४० ॥

॥ ॐ ॥ पश्चाद्दृष्टयविज्ञानकालदुःखपृथग्भवाः । स्थानभेदो विरुद्धत्वं न्यायसाम्यं स्वतो भवः ॥ गुणसाम्यमयोगश्च तर्कबाधो विलोमता । नानाभावः प्रलोभश्च युक्तयः पूर्वपक्षगाः[8] ॥ अशक्यकर्तृताशक्तिः स्वतो बोधस्तथैव च । अमानक्लृप्तिसन्मानव्यवस्थास्वल्पताभवाः ॥ विशेषदृष्टिवाक्ये च पुंशक्तिः सुनिदर्शनम् । अलौकिकत्वमाधिक्यं स्वातन्त्र्यं निर्णय[9]प्रमाः ॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ १ ॥ ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ २ ॥ ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥ ३ ॥ [10]वासनाः सर्ववस्तूनामनाद्यनुभवागताः ।

---

[1] पूर्वपक्षाणां संबन्धिन्यः. [2] न्यायाः. [3] व्रीह्यादिकं रेतश्च. [4] सम्बन्धातिनियमाभावम्. [5] प्रकृतार्थादर्थान्तरवाचिना योनेः शरीरमापद्यते क्वचित्तदभावेऽपि इति. [6] क्वचिज्ज्ञानतपोयोगाद्यतिशयलक्षणेन कारणविशेषेण तां नियमोज्झितिम्. [7] आह. [8] पूर्वपक्षाणां सम्बन्धिन्यः. [9] सिद्धान्तनिर्णयार्थानि प्रमाणानि. [10] भावनापरनामकाः संस्काराः.

सन्त्येवाशेषजीवानामनादिमनसि स्थिताः ॥ त्रिगुणात्मकं [1]मनोऽस्त्येव यावन्मुक्तिस्सदातनम् । तत्रैवाशेषसंस्काराः सञ्चीयन्ते सदैव च ॥ सूक्ष्मत्वेन लये तच्च [2]प्राकृतैरुपचीयते । सृष्टिकाले यदा तन्न[3] कुतः संसारसंस्थितिः[4] ॥ संस्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत् । स्वप्नकाले दर्शयति भ्रान्तिर्जाग्रत्व[5]मेव हि ॥ अदृष्टे चाश्रुते [6]भावे न भाव[7] उपजायते । अदृष्टादश्रुताद्भावान्न भाव उपजायते ॥ इति श्रुति-पुराणोक्ति[8]रना[9]दित्वात्तु युज्यते । कदाचिद्दर्शनायोग्यं [10]यत्तत्रापि [11]विभागतः ॥ [12]दृष्टं समाधि[13]करणं दृश्यतेऽत्र न च भ्रमः । वासनामात्रमूलत्वाज्जाग्रद्वत्स्पष्टता न च ॥ [14]भेदोऽभेदोऽथ वा द्वन्द्व[15]मिति प्रश्नो न युज्यते । [16]द्रष्टुः स्वप्नस्य दृष्टत्वाद्भेदस्यैवाखिलैर्जनैः ॥ [17]प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः । सिद्धार्थता च वैफल्यं न तैः स्यात्तत्त्वनिर्णयः ॥ तत्त्वनिर्णयवैलोम्यं स्याद्वादेऽपि हि निग्रहः[18] । उद्भावनीयमेव स्याच्च कथावसितिर्भवेत् ॥ विजिगीषु-कथायां तु कथावसितिकारणम् । [19]परिहारेऽपि सिद्धत्वं दूषणं प्रतिवादिनः[20] ॥ प्रति[21]ज्ञायां, तद[22]न्यस्य सिद्धतैव हि साधिका । आश्रय[23]व्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् ॥ केषाञ्चिन्न च ते दोषा व्याप्तौ [24]सत्यां कथञ्चन । दोषो [25]व्याहतिरेवास्ति शून्यङ्गास्तित्व-साधने ॥ यत्र[26] व्याह[27]तता नास्ति कोऽतिसङ्गोऽस्य[28] साधने[29] ।

[1] जडं न तु स्वरूपभूतम्. [2] अहङ्कारायैः. [3] प्रलये न स्यात्. [4] आत्मनः संसारावस्थानम्. [5] घटादीनां बाह्यार्थक्रियाक्षमत्वज्ञानम्. [6] पदार्थे. [7] वासना. [8] उक्तिस्तु. [9] संसारस्य. [10] यत् स्वप्ने दृश्यते. [11] सामानाधिकरण्येन विना. [12] दृष्टं जागरे. [13] एक-स्थलवृत्तित्वम्. [14] अथ अद्वैतिव्याख्यानिरासः. [15] स्वप्नद्रष्टुः स्वाप्नैः पदार्थैः भेदाभेदौ. [16] स्वप्नस्य द्रष्टुः. [17] निष्फलप्रश्न. [18] निग्रहस्थानम्. [19] उत्तरे. [20] पक्ष न तु वादिनः. [21] अर्थस्य. [22] हेत्वर्थस्य. [23] व्यधिकरण. [24] अबाधितविपर्ययेण सति. [25] प्रत्यक्षप्रमाणविरोधः. [26] साध्ये. [27] प्रमाणबाधः, [28] अतिप्रसङ्गः. [29] असदाश्रयेण हेतुना क्रियमाणे.

प्रत्यक्षागममूलास्तु[1] न्यायास्सर्वे भवन्ति हि ॥ [2]न्यायाभासा[3] अमूलाः स्युर्न्यायस्यान्यस्य[4] तौ पुनः[5] । [6]अदृष्टे [7]व्यभिचारे तु साधकं [8]तदिति स्फुटम् ॥ ज्ञायते साक्षिणैवाद्धा मानबाधे न [9]तद्भवेत् । [10]यत्साक्षिणैव मानत्वं मानानामवसीयते ॥ अमानस्य तु मानत्वं[11] मानसत्त्वाचलं भवेत् । [12]उत्सर्गतोऽपि [13]यत्प्राप्त[14]मपवाद[15]विवर्जितम् ॥ व्यभिचार्यप[16]वादेन मानमेव भविष्यति । अतो हि भोजनादीनामिष्टसाधनताऽनुमा ॥ मानं व्यवहृतौ नित्यं व्यभिचारो हि तत्र च । व्याप्तत्वे व्याश्रयत्वं तु कथमेव हि दूषणम् ॥ रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः । इत्युक्ते साधनं नो किं न ह्याङ्गी[17]वात्र साधिका ॥ अन्यतसद[18]सतोविश्वमिति च व्याहतेरमा[19] । असिद्ध[20]-साधने दोषः को, व्याप्तिर्यदि विद्यते ॥ व्याप्तिश्च व्यतिरेकेण तत्र तैश्चावगम्यते । अप्रसिद्धस्य साध्यस्य साधकत्वं यदेष्यते ॥ लिङ्ग[21]-स्यो[22]क्तौ विशे[22]षोऽयं केन मानेन गम्यते । साधनं परमाण्वादेर्यद्यसिद्धस्य चेष्यते ॥ यथाऽनुभवमेवैतन्नाङ्गीकार्यं कुतस्तदा । यत्र नातिप्रसङ्गोऽस्ति मानं न च विपर्यये ॥ क्लिष्टकल्पनयैवात्र साध्यमित्यतिदुर्वचः । परिशेषो [23]मिथस्सिद्धिश्चक्रकस्याश्रयादयः ॥ असिद्धसाधकत्वेन पञ्चावयवतां विना । अङ्गीकार्याः समस्तैस्तत्रिपमः किं निबन्धनः ॥ सिद्धसाधनतायां च न कथाऽवसि[24]तिर्भवेत् । व्यभिचारो हेत्वसिद्धिरेक[25]पक्षेऽपि दूषणम् ॥ साध्यसाधनवैकल्यं[26] दृष्टान्तस्य[27]

1 एव. 2 अमूलाः. 3 एव. 4 प्रत्यक्षागममूलकन्यायादन्यस्य. 5 प्रत्यक्षागमौ एव मूलम्. 6 एव. 7 साध्यव्यभिचारे. 8 लिङ्गम्. 9 अदृष्टव्यभिचारित्वम्. 10 यस्मात्. 11 मानत्वग्रहणम्. 12 स्वभावतः. 13 लिङ्गम्. 14 निश्चितमपि. 15 साध्यव्यभिचार. 16 कारणविशेषेण. 17 समयमात्रम्. 18 सकाशात्. 19 अप्रमाणम्. 20 अप्रसिद्धसाध्यस्य 21 कर्तरि षष्ठी. 22 प्रयोगविशेषः 23 अन्योन्याश्रयः. 24 विशिष्टस्यासिद्धिरेव. 25 वादिप्रतिवादिनोः एकस्य पक्षे. 26 एव. 27 दूषणम्.

विशेषणे[1] । वैयर्थ्य[2]मेका[3]सिद्धौ च विशिष्टा[4]सिद्धिरेव हि ॥ अप्रयोजनता तत्र[5] प्रथमप्रश्नदूषणम् । सिद्धप्रश्नादिकं यत्तदाधिक्यान्तर्गतं भवेत् ॥ अर्थापत्त्युपमाऽभावा अनुमान्तर्गताः [6]क्वचित् । प्रत्यक्षान्तर्गतोऽभावः सुखादे[7]र्नियमेन च ॥ अन्यत्र[8] झटिति प्राप्तः[9] प्रारम्भा[10]द्याश्च युक्तयः । आगमार्थावमित्यर्था[11] नियतव्याप्तयोऽखिलाः ॥ वाक्यं प्रकरणं स्थानं समाख्या च [12]तथाविधाः । कुरुपाण्डवसत्त्वपाद्युपपत्तेः पृथगन्यः ॥ [13]स्वन्यायैः साधनं[14] कार्यं [15]परन्यायैस्तु [16]दूषणम् । [17]स्वन्यायैर्दूषणं च स्वात्माश्रितैः प्रतिवादिनः ॥ [18]प्रसङ्गार्थतया प्रोक्ता[19]: न सिद्धान्तस्य दूषकाः । छलं जातिरिति द्वेधा व्याह[20]त्यन्तरमिष्यते ॥ जातिः स्वव्याहतिर्ज्ञेया छलमर्था[21]न्तरोत्तरम् । एवं संशोधितन्यायसदागमनिरोधतः ॥ नानिर्वाच्यमिह प्रोक्तं मायामात्रपदेन हि । विलक्षणं[22] सदसतोरिति हि व्याहतं स्वतः ॥ प्रतियोगित्व[23]मप्यस्य ब्रह्मणोऽङ्गीकृतं भवेत् । मिथ्या चेत्प्रतियोगित्वं वैलक्षण्यं ततो न हि ॥ अविलक्षणत्वं सत्य स्यान्मिथ्यात्वं ब्रह्मणस्ततः । अनिर्वाच्यस्य सत्त्व वा, यदि धर्मा न केचन ॥ ब्रह्मणो, नैव जिज्ञास्यं[24] जिज्ञासा धर्मनिर्णय । इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् ॥ इत्थम्भावो हि धर्मोऽस्य[24] न

---

[1] दुष्ट सति [2] विशेष्यस्य विशेषणस्य वा वैयर्थ्ये तदपि हेतो दूषणमेव [3] विशेषणविशेष्ययोरेकस्य [4] विशिष्टस्यासिद्धिरेव
[5] प्रश्नदोषेषु [6] कदाचित्घटाद्यभावग्राहकं प्रत्यक्षान्तर्गतम् [7] अभाव
[8] सुखादिभिन्ने घटादौ सति [9] अभाव प्रत्यक्षम् [10] उपक्रमाद्य
[11] निर्णयार्था [12] वेदार्थ निर्णयार्था युक्तय एव [13] न केवलं परस्य किं [illegible] स्वस्यापि सिद्धन्यायै क्वचित्स्वमात्रसिद्धै साधिते
[14] स्वपक्षसाधनम् [15] उभयसिद्ध [16] खण्डन दूषणानुमानं [illegible] परमात्रसिद्धै [17] क्वचित् स्वमात्रसिद्धै [18] आपादनविषयतया
[19] निर्धूमत्वाद्य [20] व्याहतिप्रभेदः [21] प्रकृत स्वार्थान्तर परित्यज्य तन्योत्तरम् [22] सन्ध्यम्, स्वत [23] स्वाभमपञ्चं प्रति [24] ब्रह्म अन्य प्रमाण

चेन्न प्रतियोगिता[1] । इत्थम्भावात्मकान्धर्मानाहुश्च श्रुतयोऽखिलाः ॥ अदृश्यत्वादयोऽप्यस्य गुणा हि प्रगुणोदिताः । यदि स्युस्तादृशा धर्माः सर्वज्ञत्वादयो न किम् ॥ [2]अन्यापेक्षा यदि स्युष्टे[3] सत्तैवं[4] देशकालगा । देशकालानपेक्षा हि न सत्ता कापि दृश्यते ॥ सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते । मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणता ॥ अप्राप्तां भ्रान्तिमापाद्य किं वेदो मानतां व्रजेत् । न हि वेदं विना ब्रह्म वेद्यं धर्माश्च तद्गताः ॥ वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथम् । धर्मारोपोऽपि सामान्य[5]धर्मादीनां हि दर्शने ॥ [6]इदन्तदादिधर्मित्वे धर्मोऽन्यः कल्प्यतेऽत्र हि । सर्वधर्मविहीनस्य धर्मारोपः क्व दृश्यते ॥ तदर्थं यदि धर्माणामारोपः साऽनव[7]स्थितिः[8] । ईशतज्ज्ञानवेदाक्षजानुमामाद्[9]पूर्विणः ॥ भ्रान्तिविश्वस्य येनैव मानाभासेन कल्प्यते । तन्मात्रस्यान्यथा[10]भावे किं न स्याद्विश्वसत्यता ॥ येनेदं कल्प्यते भ्रान्तं भ्रान्तिस्तस्यैव किं न सा । भ्रान्तत्वे तस्य विश्वा[11]रेरीशाद्यभ्रान्तमेव हि ॥ भवेयुर्भ्रान्तयो नृणां नैवेशादेः कथञ्चन । सत्यत्वमक्षजं प्राप्तं यदि भ्रान्तमितीष्यते ॥ प्रामाण्यमागमस्यापि प्रत्यक्षादन्यतः कुतः । साक्षिप्रत्यक्षतो ह्येव मानानां मानतेयते ॥ साक्षिणः स्वप्रकाशत्वमनवस्था ततो न हि । [12]तात्कालिकं प्रमाणत्वमक्षजस्य यदा भवेत् ॥ ऐक्यागमस्य किं न स्यात्तस्याप्येतादृशं यदि । ऐक्यप्रमाणमिथ्या[13]त्वं यदा[14] विश्वस्य सत्यता ॥ ऐक्यवाक्यस्य मानत्वं यद्यबाध्यमितीष्यते । अक्षजस्यापि

[1] विरोधिता प्रपञ्चधर्मव्यावृत्तिमत्ता. [2] ब्रह्मभिन्नमिथ्याभूत सर्ववस्त्वपेक्षावत्तः. [3] स्युष्टे इति सुपामादिषु द्रष्टव्यम्. [4] एवं-परापेक्षा. [5] सामान्यरूप. [6] इदंत्वतत्त्वादिधर्मवत्वे दृष्टे एव. [7] सोऽप्येवमिति प्रसक्तः. [8] इति ब्रह्मणो निर्धर्मकत्वनिरासः. [9] प्रमात्. [10] अप्रामाण्ये. [11] विश्वमिथ्यात्वं प्रतिपादयतः गौडपादादेः. [12] व्यावहारिकम्. [13] आपद्यते. [14] एवं यदा तदा.

मानत्वं नावाध्यं किमितीष्यते ॥ अद्वैतहानिसामान्याच्च विशेषश्च[1] कश्चन । यदि स्वतस्त्वं प्रामाण्ये विश्वसत्ता कथं न ते ॥ प्रामाण्यस्य च मर्यादा कालतो[2] व्याहता भवेत् । कालान्तरेऽप्यमानं[3] चेदिदानीं मानता कुतः ॥ मिथ्यात्वमानं [4]मोक्षेऽपि मानं किं नेति भण्यताम् । मानत्वे द्वैतहानिः स्यादमानत्वेऽप्यमोक्षता[5] ॥ विश्वस्य पुनरापत्ति- र्मिथ्यामानं यदा न मां[6] । अस्तित्वेन्मुक्त्यवस्था च द्वैतापत्तिरतोऽ- न्यथा[7] ॥ अमुक्तत्वं[8] तथा [9]काले कालाधीना हि मुक्तता । काल एवागमोऽ[10]प्याह मुक्तिं [11]कालनिवर्तनं ॥ मुक्तेरपि निवृत्तिः[12] स्यात्संसारित्वमतो भवेत् । क्व च प्रत्यक्षतः प्राप्तमनुमाऽऽगमबाधितम्[13]॥ देहात्मत्वं यदि न तत्प्राप्तं प्रत्यक्षतः क्वचित् । मम देह इति ह्येव न देहोऽहमिति प्रमा ॥ उपचारश्च कृष्णोऽहमिति[14] कर्दम लेपने । वस्त्रस्य यद्वदेवं स्याद्यु[15]पाधिकृतं तदा ॥ [16]स्वतः शुक्लत्वच[17]रकार्ष्ण्यं न ममेति प्रतीयते । कथं च भेदो देहादेरात्मनो न प्रतीयते ॥ जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः[18] । भयाभयसुभोगादौ[19] कारणानि विजानते ॥ अस्मृतौ पूर्वदेहस्य विज्ञानं[20] तत्कथं भवेत् । अन्वय[21]व्यतिरेकादे[22]रनुसन्धानविस्मृतौ ॥ यदा देहान्त[23]रज्ञानं

[1] प्रत्यक्ष प्रामाण्यस्याबाध्यत्वे बहुमपञ्चापत्तिः आगमप्रामाण्या- बाध्यतायां तु नैवमिति कश्चन विशेषः न, व्यर्थत्वात्. [2] कालतो मर्यादा–व्यवच्छेदः, तात्कालिकत्वम्. [3] बाधितमानम्. [4] मोक्षसमये. [5] चिरक्षितावस्थायाः. [6] तदा विश्वस्य पुनरापत्तिः. [7] असत्त्वे. [8] आत्मनः. [9] तथा विकल्पस्य दोषो वाच्यः. [10] "तदा विद्वान् पुण्य पापे" इति. [11] कालासत्त्वे. [12] असत्यम्. [13] क्व दृष्टम्, नैयत्यर्थः. [14] व्यवहारस्तु. [15] देहादि. [16] चक्षे. [17] स्वतोर्नारूप पद्माहम्. [18] मीनाः. [19] सुरसादौ. [20] भयादिकारणज्ञानम्. [21] यद्य- स्तनपानं तदिष्टसाधनं यदिष्टसाधनं न तत्स्तनपानं न भवतीत्यादेः विस्मृतौ. [22] तथा चायमित्यनुसन्धानस्य विस्मृतौ. [23] पूर्वदेह- स्मरणम्.

देहैक्यावसितिः कुतः । व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात्[1] ॥ भेद[2]ज्ञानेऽपि चाङ्गार[3]वह्निवत्स्वा[4]विविक्तवत् । भवन्ति व्यवहाराश्च न हि प्रत्यक्षगानपि ॥ अर्थान्यथानुभवतः प्रतिपादयितुं क्षमाः । लोकास्ततो हि प्रत्यक्षसिद्धं नान्येन केनचित् ॥ शक्यं वारयितुं क्वापि [5]तच्चेन्नोत्तर[6]गोचरम् । कथमेवोत्तरः कालस्तद्वो मोक्षश्च गम्यते ॥ आगमोऽपि हि [7]सामान्ये सिद्धे प्रत्यक्षतः [8]पुनः । विशेषं[9] गमयेदेव कथं शक्ति[10]ग्रहोऽन्यथा[11] ॥ अतीतानागतार्थेषु जाते [12]शक्तिग्रहेऽखिलम्[13] । विशेषं[14] गमयेद्वाक्यं न तदज्ञातशक्तिके[15] ॥ शक्तिश्चेद्वर्तमाने स्यान्नातीतानागतं वदेत् । यदि शक्तिग्रहोऽन्यत्र[16] कथं स[17] स्यात्तदग्रहे ॥ [18]सामान्यं [19]दृष्टमेवासा[20]वन्यत्र[21] गमयेद्यदि । सामान्यवर्जितं वस्तु स्वरूपं गमयेत्कथम् ॥ न स्वरूपत्वसामान्यं केनाप्यङ्गीकृतं क्वचित् । [22]स्वरूपं चेदनुगतं व्यावृत्तं [23]तत्र किं भवेत् ॥ [24]सर्वानुगतधर्माणामन्ते हि स्वत्व[25]मिष्यते । किं व्यावृत्तमिति प्रश्ने स्वरूप[26]मिति केवलम् ॥ स्यादुत्तरं[27] ततोऽन्यच्चेत्तदेव [28]स्वयमेव[29] नः । एवं व्यावृत्त[30]रूपेऽपि यदा शक्तिग्रहो भवेत् ॥ तस्य सामान्यतो ज्ञानं विना स[31] च भवेत्कुतः । अतो विशेषसामान्यरूपं [32]सर्वमपीष्यते ॥

---

1 लोकानाम्. 2 देहाद्. 3 अङ्गारे ध्यात. 4 स्वाभिन्ने स्वसंसृष्टे यथा तथा. 5 साक्षिज्ञानम्. 6 वर्तमानमात्रगोचरं चेत्. 7 अन्वयसामान्यवति पदार्थसमूहे. 8 पश्चात्. 9 अन्वयविशेषवन्तं तमेव पदार्थसमूहम्. 10 पदानां तेषु वाचकत्वज्ञानम्. 11 पूर्वं पदार्थज्ञानाभावे. 12 पदानाम्. 13 वाक्यम्. 14 अन्वयविशेषम्. 15 सति पदसमूहे. 16 अतीतानागतयोरपि. 17 पदशक्तिग्रहः. 18 पूर्वं पदार्थज्ञाने सति. 19 वस्तुगतसामान्यधर्मं गोत्वादिकम्. 20 शब्दः. 21 कालान्तरे. 22 स्वरूपत्वम्. 23 वस्तुनि. 24 सर्वेषाम्. 25 स्वरूपत्वम्. 26 स्वरूपत्वम्. 27 भेदलक्षणं व्यावृत्तम्. 28 स्वरूपम्. 29 तर्हि. 30 निस्सामान्यस्वरूपे. 31 शक्तिग्रहः. 32 सर्वं वस्तु.

[1]व्यावृत्तं यच्च[2]सामान्यं तदेव स्याद्विशेषतः[3] । न चैकधर्मता तेन पदार्थानां परस्परम् ॥ [4]धर्माणां भेद[5]दृष्टचैव तत्सादृश्यस्य दर्शनात्[6] । अतः [7]सर्वे पदार्थाश्च सामान्यात्साक्षिगोचराः ॥ सर्वमित्येव विज्ञानं [*]सर्वेषां कथमन्यथा । किञ्चित्सादृश्यविज्ञानादखिलस्यापि वस्तुनः ॥ शब्दशक्तिग्रहश्च स्यात्तत्त[8]त्सादृश्यमानतः । [9]प्रत्यक्षं मानसं चैव [10]यदाऽतीतार्थगोचरम्[11] ॥ तदा[12] [13]स्मृतिप्रमाणत्वमतीतत्व-विशेषितम्[14] । आधिक्य[15]मनु[16]भूतात्तु यदा[17]तीत[18]त्वमिष्यते[19] ॥ मानता च कथं न स्यात्स्मृतेर्बाधश्च नात्र हि । मानत्वं प्रत्यभिज्ञाया अपि सर्वानुभूतिगम् ॥ अतीतवर्तमानत्व[20]धर्मिणी सा च दृश्यते[21] । न च सा [22]स्मृतिमात्रार्धा तदिदंत्व[23]ग्रहैकतः[24] ॥ अतो न वर्तमानैकनियमः स्याद्गृहेऽक्षजे । न च [25]प्रमाणतोऽन्या स्यात्प्र[26]मिति-र्नाम [27]कुत्रचित् ॥ मानाभावाद्गौरवाच्च कल्पनायाः किमेतया । मयैतज्ज्ञातमिति तु साक्षिगं ज्ञानगोचरम् ॥ ज्ञानमेव ततोऽन्या न प्रमितिर्नाम दृश्यते । मानमात्रप्रमेयाणां[28] [29]तद्व्युच्छि[30]त्तिर्न हि क्वचित् ॥ स्वामानामपि चैतेषां न बाधो दृश्यते क्वचित् । जाग्रत्त्व-मात्रमत्रैकमन्यथा दृश्यते स्फुटम् ॥ अतो मिथ्या न च स्वप्नो

---

[1] स्वरूपम्. [2] यदेव. [3] विशेषबलेन – अनुवृत्त बुद्धिजनकत्वेन सामान्यं रूपञ्च स्यात्. [4] शौक्ल्यादिधर्माणाम्. [5] प्रतिव्यक्ति भिन्नत्वदर्शनात् विशेषरूपत्वम्. [6] सामान्यरूपत्य. [7] वर्तमानातीतानागताः. [8] शाखादिमत्त्वादि सादृश्यानुसारेण. [9] मानसम्. [10] यस्मात्. [11] एव यत्स्मृतिकारणम्. [12] तस्मात्. [13] स्मृतेः. [14] अर्थस्मृतिः विपर्यासरीति. 15–16–17–18–19 अनुक्रम. [20] धर्मविशिष्टार्थविषया. [21] साक्षिणा. [22] स्मृतिरेव स्मृतिमात्रा, सा अर्धं यस्याः सा स्मृत्यनुभवरूपैकदेशसमुदायरूपा तथाच स्मृत्यनुभयात्मकैकज्ञानरूपाच. [23] तत्त्वेदन्त्वज्ञानयोः. [24] एकस्यानुभयात्. [25] ज्ञानतः. [26] ज्ञातता. [27] अतीतादाविव वर्तमानेऽपि. [28] तस्मात्. [29] तदात्मकविभ्रमस्य. [30] बाधः.

[1]जाग्रद्[2]जाग्रदेव च । आत्मवत्कचिदात्मा च स्यादेव [3]भ्रमगोचरः ॥ एतावता न मिथ्याऽसौ स्वप्ने जागरिते तथा । यद्यात्मन्यन्यथा[4]दृश्यं भ्रान्तमत्रापि तद्भवेत् ॥ अबाधितानु[5]वृत्तेस्तु स्वप्नादेर्भ्रान्तता कुतः । न च काचित्प्रमा विश्वभ्रान्तत्वे सर्वमेव च ॥ अभ्रान्तत्वे प्रमाणं तु कथं तद्भ्रान्तता भवेत् । किञ्च भ्रान्तत्ववादी स भ्रान्तत्वं स्वमतस्य च ॥ अङ्गीकरोति नियतं तत्र सम्प्रतिपन्नता । वादिनोऽस्तेन चाभ्रान्तं विश्वमेव भविष्यति ॥ भ्रान्तत्वभ्रान्तता चेत्स्यात्कथं नाभ्रान्तिसत्यता । अशेषदोषदुष्टं तन्मतं हेयं बुभूषुभिः ॥ येन[6] स्वमतहेयत्वं स्वयमङ्गीकृतं सदा । भ्रान्तिता[7]दुर्घटत्वस्य भूषणत्वाच्च केवलम् ॥ उन्मत्तोऽपि कथं तस्य मतं स्वीकर्तुमिच्छति । ईशशक्तेरचिन्त्यत्वान्महोन्मत्तैः प्रवर्तितम् ॥ अतः प्रज्ञाऽत्र [8]मायोक्ता जैव्यु[9]पादानमेव सा । निमित्तमैश्वरी मुख्या निर्मितं ज्ञातमेव च ॥ ताभ्यां [10]सहपृथक्[11]चैव मायामात्र[12]मितीर्यते । उभाभ्यां मातमैश[13]र्याद्यातं सहपृथक्ततः ॥ [14]प्रज्ञात्मकं मनो येन मनोरूपाश्च[15] वासनाः[16] । धीर्भीरिति मनस्त्वेवेत्याह च श्रुतिरञ्जसा ॥ चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः । तेनावस्था इमास्सर्वा जीवः पश्यति सर्वदा ॥ मनोविकारा विषयाः स्वाप्ना यद्वाह्यवच्च ते । स्थूला भवन्त्यतस्तेषां स्पष्टता न तथा क्वचित् ॥ कचित्स्पष्टा अपि स्युष्टे [17]वासना [18]मानसी च सा ॥ ३ ॥ १ ॥

---

[1] जाग्रता दृष्टशुक्तिकावत् न मिथ्या　[2] जाग्रत् स्वप्नश्च आत्मवन्नैव-मिथ्या　[3] क्षणिकोऽहमिति　[4] आरोपिताकारः.　[5] अद्राक्षमेवाह गज इति ज्ञानानुवृत्ते.　[6] कारणेन.　[7] भ्रमविषयत्वेनाङ्गीकृतत्वात्.　[8] माया इति　[9] जीवसम्बन्धिनीप्रज्ञा　[10] सहनिर्मितम्.　[11] केवल ईश्वरज्ञानेन रक्षितम्.　[12] धातुद्वयात् आतोऽनुपसर्गे कः इति कः.　[13] ईश्वर सम्बन्धिन्या.　[14] प्रज्ञोपादानम्　[15] मनउपादानका　[16] अत संस्कारज्ञानयोरेकोपादनकत्वाह्लक्षणा　[17] अस्थूलत्वस्य सत्वात्.　[18] सुपामादित्वात् पत्वम्.

॥ ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ॐ ॥ ५ ॥ ईशेच्छयाऽन्तर्दधाति[1] व्यज्यते च पुनस्तया। सृष्ट्वैव वासनाभिश्च प्रपञ्चं स्वाममीश्वरः॥ वासनामात्रतां तस्य [2]नीत्वाऽन्तर्धापयत्यजः ॥ ५ ॥ २ ॥

॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ ॥ ७ ॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ८ ॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ १० ॥ सुषुप्तिबोधमोहांश्च स्वप्नशस्त[3]इशं सदा। जीवं [4]नयति जीवेशो ॥ ४ ॥ ५ ॥ ७ ॥ ॥ ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ ॥ ९ ॥ नान्यः कर्ताऽस्य कश्चन ॥ ९ ॥ ६ ॥

॥ ॐ न [5]स्थानतोऽपि परस्योऽभय[6]लिङ्गं सर्वत्र हि ॐ ॥ ११ ॥ न स्थानभेदतोऽप्यस्य भेदः कश्चित्परेशितुः। सर्वत्राशेषदोषोज्झपूर्णकल्याणचिद्गुणः ॥११॥ ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ १२ ॥ तद्विरुद्धं तु यत्तत्र[7] मानं नैव क्वचिद्भवेत्। महातात्पर्यरोधेन कथं तन्मानमत्र तु[8] ॥ दुःखा[9]प्त्ययसुखानाप्तिहेतुत्वेनैव वेद्यतः। भवेन्मानं तदीशानात्प्रसन्नादेव नान्यथा ॥ प्रसन्नता गुणोत्कर्षज्ञानादेव हि केवलम्। निर्दोषतापरिज्ञानादपि नान्येन केनचित् ॥ 'यो मामशेषदोषोज्झं गुणसर्वैश्च बृंहितम्[10]। ज्ञानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा'॥ 'यो मामशेष[11]स्याधिकं विजानाति स एव माम्। विजानात्यखिलां-

---

[1] सन्ध्यम्. [2] इत्वा. [3] नीत्वा. [4] प्रापयति. [5] स्थानभेदतः.
[6] भिन्नस्वरूपत्नम. [7] तथार्थे. [8] विष्णोर्दोषित्यादौ. [9] नाद॰
[10] प्रत्येकमपि गुणानामनवधिकत्वोचिरनेन. [11] गुणैर्दोषाभावैश्च सर्वोत्तमम.

स्तस्य दद्यां कामान्परं पदम्' ॥ 'यो मामेवमसम्मूढः' 'किं मां निन्दन्ति शत्रवः'। इत्यादिवेदस्मृतिगवाक्यैरेवावसीयते ॥ लोक[1]तश्च प्रसादेन मुक्तिः सगुणवेदनात्। महा[2]तात्पर्यमुख्यस्य निरोधादत एव हि ॥ दोषित्वनिर्गुणत्वाल्पगुणत्वादि कथञ्चन। नार्थः श्रुतिपुराणादे[3]स्तद्विरुद्धोऽखिलस्य[4] च ॥ अर्थः [5]स्वयं विनिर्णीतो वासुदेवेन सादरम्। 'इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ॥ एतद्बुध्वा बुद्धिमान्स्यात्कृत[6]कृत्यश्च भारत'। इत्यतोऽखिलमच्छास्त्रविरुद्धत्वेन नानुमा ॥ वर्तते [7]तत्र तेनेशो निर्णीतोऽखिलसद्गुणः ॥ १२ ॥ ८ ॥

॥ ॐ अत[8] एव चोपमा[9] सूर्यकादिवत् ॐ ॥१८॥

न च चित्त्वादभिन्नत्वं[10] जीवस्येशवदा[11]प्यते। यत आभासतामेव श्रुतिरस्य वदत्यलम् ॥ 'यथैषा पुरुषे छाया एतस्मिन्नेतदाततम्'। 'छाया यथा पुंसदृशी पुमधीना च दृश्यते ॥ एवमेवात्म[12]काः सर्वे ब्रह्माद्याः परमात्मनः'। 'सत्ताप्रतीतिकार्येषु पुमधीनो यथेयते ॥ आभास[13] एवं[14] पुरुषा मुक्ताश्च परमात्मनः'। 'छाया विष्णो रमा तस्याश्छाया धाता [15]विशेषकौ ॥ तस्येन्द्रकामौ च तयोस्तयोरन्येऽखिला अपि'। 'हरेर्ब्रह्माऽस्य गी[16]स्तस्या विशेषाविन्द्र एतयोः ॥ [17]मारश्चाभासकाः सर्वे एतयोस्तदधीनतः। सर्वेऽल्पशक्तयश्चैव पूर्णशक्तिः परो हरिः ॥ चेतनत्वेऽपि भिन्नास्ते तस्मादेतेन सर्वदा'। इत्यादिश्रुतिवाक्येभ्यो जायते भेद एव हि ॥ आभासत्वं हि निर्णीतं जीवस्य परमात्मनः। तत्र युक्तं यदा[18]भास[19] उपाध्या[20]यत्त ईयते ॥

---

[1] लोकदृष्टान्तोपेतानुमानतश्चावसीयते [2] परममहातात्पर्यस्य [3] शास्त्रादेः. [4] श्रुत्यादे [5] इति [6] मुक्त. [7] परमेश्वरभेदादौ. [8] तदधीनत्वतत्सदृशत्वाभ्यामेव [9] सूर्यकादिवदित्युपमा न उपाध्यधीनत्वादिना [10] ब्रह्मणा [11] युज्यते [12] अल्पचेतना [13] दर्पणादि. [14] आभासा [15] शि. गरुड [16] गी, सरस्वती [17] मार, काम. [18] यस्मात् [19] सूर्यप्रतिबिम्बादि. [20] जलाद्युपाध्यधीन.

उपाध्यायत्ततामावादाभास[1]त्वनिरोधतः । चेतनत्वेन चांशत्वा[2]त्समु[3]-दायैक्यमा[4]पनेत् ॥ अतः पृथ[5]क्त्वमु[6]दितं समुदा[7]यांशयोर्भवेत् । ईशारुया[8] समुदाये[9] स्यादीश[10]रूपेष्विनोदिता ॥ अतो देहाद्युपाधीनामपाये समता भवेत् । ईशरूपैरथाभास मुख्यतः सूर्यकादिवत् ॥ यदा तदोपाध्यायत्तरूपाणा[11] नाशिता भवेत् । इत्याशङ्कानिवृत्त्यर्थमाह वेदाधिपः प्रभुः ॥ अत एवोपमेत्येन [12]चान्या[13]भासनिशेपिताम् । [14]यदुक्त तदधीनत्वं सर्वावस्थास्वशेषतः[15] ॥ जीवस्य सह[16]शत्व च चित्त्वमात्रं न चापरम्[17] । तावन्मात्रेण चाभासो [18]रूपमेषा चिदात्मनाम् ॥ नोपाध्यधीनतार्थैश्च नातिसाम्यं निदर्शने । किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते ॥ [19]तत आभासते[20] नित्यं [21]तद्दाभासनेऽपि च । [22]भानमस्ति[23]त्वमपि चैवा[24]ऽस्मत्तान्तद्यतस्ततः ॥ जीव [25]आभास उद्दिष्टः सदैव परमात्मन । न जलायत्तसूर्यादिप्रतिबिम्बोपमत्वतः ॥ तदधीनत्वमेवेति[26] किञ्चित्सादृश्यमेन[27] चः[28] । सम्प्रकाशयतः सूनगतानखिल[29]मानतः ॥ जीवेशभेदद्दृष्ट्यर्थेन समुदायैक्तता

[1] आभासत्वस्याभेदेन व्याप्तत्वात् भेद साधने विरुद्धत्वात् [2] अंशा त्वाच्च [3] सकलचेतनसमुदायाभिन्नत्व त तु समुदायात्परस्यैव [4] भवेत् [5] भिन्नत्वम् [6] श्रुत्याद्युक्तम् [7] समुदायस्यांशयो जीवेश्वरयो [8] ब्रह्मशब्द [9] चेतनानाम [10] मत्स्यादीना समुदाये विलक्षणताम [14] सन्ध्येसृष्टिगह हीन्यादौ [15] सर्वव्यापारेषु [16] परमात्मना [17] स्वातन्त्र्यादिकम् [18] स्वरूपम [19] ब्रह्माभास शब्दस्य यौगिकार्थमाह तत तेन निमित्तेन [20] प्रतीयते इति तदधीनत्वमुक्तम [21] अनेनन सदृशत्वमुक्तम [22] ज्ञानम [23] सत्त्व अस्ति इत्यादीनि पाठादस्मिन्शब्दोऽन्वयम [24] पूर्णानन्दत्वरूप सन्धौ इत्युक्ते। नाम्य प्रतिबन्ध . [25] आ च अभा च भासे आ-समर्थेना घनिष्ठौ भासे आभासे ब्रह्माधीन आभासे यस्य स [26] अयमेव शब्द [27] इत्यर्थम् (एव इति शब्दः) [28] च शब्दः. [29] मानं भेद इष्या

[11] जीवानाम् [12] भिन्नत्व चोपमेति [13] अन्यसादाभासात् सूर्यकादे

त्तुतः। अशेषदोषराहित्यं सर्वशक्तित्वतो हरेः॥ 'सर्वोपेते'ति कथितमत ऐक्यं क्व दोषिणा। अशेषशक्तियुक्तत्वेत्स्वातन्त्र्याद्दोषवान्कथम्॥ अनुसन्धान[1]रहितमैक्यं चेदेकता न [2]तत्। चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरम्॥ अनुसन्धानरहितं समुदायैक्यमेव[3] चेत्। चेतनेष्वस्तु तन्नाम[4]मात्रमेव यतस्ततः॥ मुक्तौ स्यादनुसन्धानमित्यपि स्यात्तु[5]दुष्करम्। [6]सर्वज्ञ एकतां नानुसन्धत्ते नैव सा[7] यतः॥ पश्चात्स्यादनुसन्धानं[8] चेन्मिथ्याज्ञानिता भवेत्। विद्यमानानुसन्धानं न चेदज्ञत्वमापतेत्॥ अस[9]दैक्यं भवेत्पश्चा[10]द्यदि स्यात्समो रसः। [11]समुदायैक्यमेत[12]स्मादूरतोऽपाकृतं सदा॥ अतोऽशेषगुणो[13]ऽद्वं निर्दोषं यावदेव हि। [14]तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित्॥ 'नेह नानास्ति किमपि[15] [16]हरयोऽप्यमयं[17] हि सः'। इत्यादिश्रुतिमानेन जीवांशाः[18] सर्व एव च॥ नियमेनानुसन्धानरन्धो यथेकता स्मृतः। [19]अंशिनोऽशेष[20]सन्धानमत्यल्पस्यापि विद्यते॥ क्वचि जातेन चांशेन सुखदुःखादि[21] तत्कृतम्। अनुभूयते विशेषस्तु[22] कश्चिदीशकृतो भवेत्॥ ईशस्याचिन्त्यशक्तित्वान्नाशक्यं[23] क्वापि विद्यते। सेशताऽनुपपन्नेन यदि जीवत्वमस्य हि॥ अनीशस्येशतत्वैव निरुद्धं सर्वमानतः। ईशत्वेनैव विज्ञातमनीश[24]त्वेन चेच्छ्रुतिः॥ अनीशत्वेन विज्ञातमीशत्वेनाथवाऽऽदिशेत्। उपजीव्यविरोधेन नैव मानत्वमेष्यति॥

[1] स्वीयतया दुःखादिमाशङ्कार. [2] तर्हि. [3] भात्यन्तैक्यम् [4] न यास्तवम्. [5] स्यात् प्रमाणाभावेन सन्दिग्धत्वात् [6] यतः. [7] एकता अतः सैव. [8] जीवस्वरूपस्य. [9] पूर्वं अविद्यमानम्. [10] ज्ञानोत्तरकाले. [11] सदा. [12] प्रमाणशून्यत्वात्. [13] गुणपूर्णं [14] मत्स्यादिरूपसमुदायः. [15] किञ्चन. [16] 'अयं च हरयः'. [17] 'अयमेव स योऽयमात्मा'. [18] इन्द्रादीनामंशा अर्जुनादयः. [19] अल्पस्यापि [20] -सन्धानपर्यानुसन्धानम्. [21] यत्र न तु सर्वम्. [22] सर्वानुसन्धानरूप. [23] स्वनियन्त्रणादि. [24] जीवत्वेन.

[1]अतएवेश[2]तासिद्धेर्न किञ्चि[3]च्छक्यमस्य[4] च । ईशत्वेऽनीशभेदेन श्रुत्या सम्यक्प्रकाशिते ॥ अयुक्तमपि चान्यत्र युक्तं भवति तद्बलात् । अतोऽन्यत्रापि यद्दृष्टं तदीशेनैव[5] कल्प्यते ॥ श्रुत्याऽऽभासा[6]समपि न[7] हीशत्व[8]परिपन्थि यत् । ईशोऽनीशो जगन्मिथ्या दुःखी मुक्तो भिदा न हि ॥ इति प्रतिज्ञाव्याघातः सर्वदोषाधिकाधिकः । इति हि ब्रह्मतर्कोक्तिरतिहेयमतोऽखिलैः ॥ बुभूषुभिर्मतमिदं जीवेशाभेदवादिनः । नायुक्तमीशितुः किञ्चिदीशत्वस्याविरोधि यत् ॥ यदीशत्वविरोधि स्यात्तदेवायुक्तमञ्जसा । ईशत्वस्याविरोधेन योजयित्वाऽखिलाः प्रमाः ॥ सिद्धे[9]शत्वेन चायुक्तमपि हीशेन योज[10]येत् । मानतः प्राप्तमखिलं नामानं योजयेत्क्वचित् ॥ इति हि ब्रह्मतर्कोक्तिरतो युक्तमिहोदितम् ॥ १८ ॥ १० ॥

॥ ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥१४॥

स चाप्राकृतरूप[11]त्वादरूपः स्वगुणात्मकम् । रूपमस्य शिरःपाणिपादाद्यात्मकमिष्यते ॥ अतो नानित्यता नैव श्रुतिद्वयविरोधिता । यथा हि तैजसस्यैव प्रकाशस्योज्झितावपि ॥ आत्मैव[12] ज्योतिरित्या[13]ह जीवस्येशं श्रुतिस्तथा[13] ॥ १४ ॥ ९ ॥

॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥२०॥ तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् । ब्रह्मादीनां च सर्वेषामानन्दादेर्यथाक्रमम् ॥ २० ॥ १२ ॥

---

1 जीवेऽस्त्यादेव 2 उक्तरूपशक्तेरसिद्धत्वात्. 3 ईशतानीशतयोरैक्यमतस्थानम्. 4 परमात्मनोऽपि. 5 ईशत्वेनैव. 6 आभास इव—विरुद्धमिव प्रतीयमानमपि यत् अणुत्वयौगपद्यादि. 7-8 ईशत्वाविरोधि तत्तदीशत्वेनैवरूपेण. 9 सिद्धमीशत्वं यस्यासौ तेन. 10 संयोजयेत्—ईश्वरोऽस्मीति जानीयात्. 11 प्राकृतरूपरहितमेव अप्राकृतरूपयुक्तम्. 12 आत्मैवास्य. 13 इति श्रुतिः (बृह.) ॐ मत्रादयश्चार्यपर्यमिति-ग्रन्थव्याख्या इयम्.

॥ ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ ३५ ॥ प्रतिबिम्ब[4]वदन्येषामानन्दोऽन्यगुणा[5] यथा[6] ॥ ३५ ॥ ॐ उपपत्तेश्च ॐ ॥ ३६ ॥ नारायणगुणा[7]धीनश्चात्यल्पस्तदपेक्षया । तस्माद्भिन्नश्च सततं अन्यज्ज्ञानं परस्य च ॥ अन्यज्ज्ञानं तु जीवानामन्य आनन्द ईशता । [8]मुख्येशता परेशस्य गौणी जीवस्य सा यतः । इतिश्रुतेः ॥ ३६ ॥ १७ ॥

॥ ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥२२॥ सृष्टिनाशौ तदधीनाविती‌रिते । स्वभावत्वास्थितेर्नैतदपेक्षेति न युज्यते ॥ यतस्स्वभावोऽप्यखिल ईशायत्तोऽ[9]खिलस्य च ॥ २२ ॥ १३ ॥

॥ ॐ तदव्यक्तमाह हि ॐ ॥ २३ ॥ अव्यक्तोऽपि स्वशक्त्यैव भक्तानां दृश्यते हरिः ॥ २३ ॥ १४ ॥

॥ ॐ उभय[11]व्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ ॥ २८ ॥ [12]तदभिन्ना गुणा नित्य[13]मपि[14] सर्वे विशेषतः[15] । गुणत्वेन गुणित्वेन भोक्तृभोग्यतया स्थिताः ॥ विशेषा[22]त्मतया तेषां[16] नित्यशक्त्या[18]त्मना [21]तथा । [19]नित्यं[20]स्थितेर्न [23]धर्माणां

पूर्वाधिकरणगत 'यथाक्रममित्यस्य श्रौतक्रमानतिरेकेणेत्यर्थः. [4] प्रसिद्धप्रतिबिम्बैस्तुल्यं वर्तते भगवदानन्दप्रतिबिम्बोभवतीति यावत्. [5-6] अन्येषांसाधनभूतानां भक्त्यादीनां वैचित्र्यानतिक्रमेण परस्परं विचित्रः. [7] आनन्दः. [8] ईशता मुख्य [9] सर्वपदार्थानां स्वभावः. [10] अव्यक्तोपि. [11] गुणात्मकेन गुणित्वेन च ग्रहण उक्तत्वात्. [12] तेन अत्यन्ताभिन्नाः धर्मा. [13] नियमेन. [14] तथापि. [15] विशेषशक्त्या. [16-24] अन्वयक्रमः. [22] विशेषात्मतया–व्यक्तिरूपेण, व्यवहार विषयतोपपत्तेः.

[17]क्रियादीनामनित्यता[24] ॥ न विशेषात्मता चेय[3]मनित्या शक्तिरूपता । [4]सैव [5]यत्सविशेषा स्या[6]द्विशेषोऽन्यो[7] न[8] चाप्ययम् ॥ स्वनिर्वा[9]कता-हेतोस्तथापि स्याद्विशेषता[10] । विशेष[11]त्वेन विज्ञातैः[12] प्रमाणै[13]रखिलै रपि[14] ॥ [15]ससर्ज [16]सञ्जहारेति विशेषो ह्यनगम्यते । श्रुत्यैव स स[17a] एवेति तदभेदश्च गम्यते ॥ [18]भेदो यदि विशेषस्य[19] स भेदो भेदिना[20] कथम् । भिन्नश्चेदनवस्था स्यादभिन्न[21]श्चेत्पुरा[22] न किम् ॥ विशेषोऽभिन्न एवेति तेन नाभ्युपगम्यते । अभिन्नो निर्विशेषश्चे-च्छेद[23]स्तद्भेदता कुतः॥ [24a]अनेनानेन[25] भिन्नोऽयमिति यत्स[26]विशेषतः । भेद एवैष बहुधा दृश्यते तत्कि[27]मुत्तरम् ॥ अभेदभेदयोश्चैव स्वरूपत्वं हि भेदिनः । तयोरप्यविशेषत्वे[28] पर्यायत्वं हि शब्दयोः ॥ अभेदभेदशब्दौ च पर्यायाविति को वदेत् । भेदोऽन्योऽन्यमभेदश्च भेदिना चेद्विशेषिता ॥ अविशेषे कथं भेदो भेदिनैकान्तथा भिदा । पुनस्तयोर्निभेदश्च भेदिमात्रस्ततो भवेत् ॥ भेदिनश्चैव भेदस्य विशेषो यदि गम्यते । अभेदाभेदिनोश्चैव किं भेदोऽभेदभेदयोः ॥ विशेषे-णैव [29]सर्वत्र यदि व्यवहृतिर्भवेत्[30] । कल्पनागौरवायैव किं भेदः[31]

---

[3] व्यवहारालम्बनत्वेनोक्ता [4] विशेषात्मता [5] यस्मात्
[6] सविशेषा भिन्नैव [7] भगवत भिन्न [8] नैव
[9] अनवस्थाभावात् [10] तस्यविशेषस्य [11] ज्ञानादिधर्माणा भगव द्धर्मत्वेन [12] तदभिन्नत्वेन च [13] ज्ञानत्वात् [14] उभयविधै
[15] सर्वमसृजत् [16] तदत्तुमध्रियत इति श्रुत्या [17a] आनन्दो ब्रह्म इति श्रुत्या [18] एतत्प्रपञ्चनार्थ उत्तरो ग्रन्थ । ब्रह्मणोभेद [19] ज्ञानादे र्ब्रह्मधर्मस्य [20] ब्रह्मणा ज्ञानादिना च [21] सविशेषश्च [22] धर्माणा धर्मिणा सविशेषाभेद , किं नाङ्गीक्रियते [23] तस्य तयोरप्यभेद इत्येवं भाव [24a] यस्मात् पटात् [25] स्तम्भात् [26] प्रतियोगि विशेष साहित्येन [27] अतो न भेद धर्मिस्वरूप इति परोक्तस्य, तस्य
[28] अभिन्नत्वे च [29] भेदभेदिनोरभेदाभेदिनोश्चाभेदेऽपि [30] चेत्
[31] भेदाभेदयो भेद

कल्प्यते[1] तदा ॥ ऐक्यप्रतीत्यभावेन भेद एव[2] गवा[3]श्वयोः । स एवेति [4]प्रतीतौ हि विशेषो नाम भण्यते ॥ सच्चिदा[5]देर[6]पर्यायसिद्ध्यर्थं [7]मायिनाऽपि हि । अङ्गीकार्यो विशेषोऽयं, यद्य[8]सत्यविशेषणम् ॥ [9]पृथक्पृथग्धारयितुं शब्दा[10]न्तरमितीष्यते । [11]मायाविशेषराहित्यविशेषणविशेषिता ॥ सत्यस्यापि भवेत्सा च तथा[12] चेदनवस्थितिः[13] । यदि सत्ये विशेषो न न [14]तदुक्तिर्भवेत्तदा ॥ लक्ष्यते चेत्तेन लक्ष्यमित्यपि स्याद्विशेषिता । पुनः पुनर्लक्षणायामपि स्यादनवस्थितिः ॥ यद्यभाव[15]विशेषित्वं स्यादङ्गीकृतमेव ते[16] । असार्वज्ञादिराहित्यमप्येवं ते भविष्यति ॥ तदा सार्वज्ञमेव स्याज्ज्ञायार्थत्वात्ननोर्द्वयोः । यदि नैतादृशं ग्राह्य[17]मसुखत्वानिवर्तनात् ॥ असत्त्वाज्ञानतादेश्च[18] स्यादसत्त्वादिकं तदा । अनृतादिविरोधित्वं यद्यस्या[19]भ्युपगम्यते ॥ अनैश्वर्यविरोधित्वमप्येवं किं निवार्यते । [20]अखण्डखण्डना[21]देवं विशेषोऽखण्डवादिना ॥ [22]खण्डितेनापि मनसा स्वीकार्योऽनन्यथागतेः । [23]अखण्डखण्डवादिभ्यां खण्डा[24]खण्डेन चैव तत् ॥ महादरेण शिरसि विशेषो धार्य एव हि । [25]निदर्शनत्रयेणातो भगवानत्य-

---

[1] कल्प्यते किम्. [2] स्वीक्रियते न विशेषः. [3] 'गवाश्वप्रभृतीनिव' इति निपातः. [4] अभेद. [5] पदसमूहस्य. [6] अपर्यायत्व. [7] क्रियादीनां मायिकत्वमङ्गीकुर्वतामपि. [8] असत्यत्वादि विशेषणम्, आरोपितम्. असत्यत्वाभावं प्रति विशेषणं वा. [9] सत्यत्वादि पृथगर्थवाची. [10] सत्यं ज्ञानमित्यादि. [11] कल्पितासत्यत्वादि विशेषणराहित्यलक्षणविशेषणविशेषिता. [12] आरोपिता. [13] वाक्यार्थस्य अन्यवस्था. [14] तच्छब्दप्रवृत्तिः. [15] अभावरूपधर्मवत्त्वम्. [16] मते, तृतीयार्थे अव्ययं वा. [17] तदा आनन्दादिपदानि असुखत्वादीनि न निवर्तयेयुः इति शेषः. [18] अनिवर्तनात्. [19] सत्यत्वादेः. [20] ब्रह्मणो निर्धर्मकत्वम्. [21] हेतोः. [22] उत्तरोत्प्रेक्षारहितेन. [23] अभेदवादिभेदवादिभ्याम्. [24] भेदाभेद इति वादिना अर्धाआदिभ्योऽच्. [25] अहिकुण्डलप्रकाश पूर्वत्वम्.

भिन्नताम्[1] ॥ गुणानामादरेणाह तच्च[2] नाभिहिता[3]न्वयः । [4]यदाऽशेषविशेषा[5]णामुक्तिः सामान्यतो भवेत् ॥ [6]पदैकेना[7]प्युत्तरेण[8] विशेषाव[9]गतिर्भवेत् । यतोऽशेषविशेषाणां वस्तुना[10]स्त्येव चैकता[11] ॥ अतः सामा[12]न्यतो [13]ज्ञातः पदान्तरबलात्पुनः । भवेद्विशेषतो[14] ज्ञातस्तेन [15]स्यादन्वितोक्तिता ॥ [16]स्वार्थ एवान्वितो यस्मात्केन चित्त[17]द्विशेषतः । [18]अनेनेति [19]तदुक्त्यैव ज्ञायतेऽ[20]नुभवेन[21] हि ॥ यद्यनन्वितमेवैतत्पदं[22] स्वार्थं वदेदिह । तथाऽन्यान्यपि सर्वाणि कः कुर्यादन्वयं पुनः[23] ॥ व्यापारो न हि शब्दस्य[24] परः[25] स्वार्थप्रकाशनात् । [26]पुमानप्येकवारोक्त्या कृतकृत्यो यदा भवेत् ॥ अन्वयस्य कथं ज्ञानं शब्दा[27]र्थत्वं यदास्य न । पदैर्यानन्वितार्थस्य[28] वचनं तैः पदैर्भवेत् ॥ अनन्वितस्याच्छब्दार्थो न [29]तदर्थो हि सोन्वयः[30] । निराकाङ्क्षपदान्येव वाक्यमित्युच्यते बुधैः ॥ तत्त[34]दर्थाभिधानेन सा निराकाङ्क्षता[33] च[32] मा[31] । अपूर्तेस्तावदर्थानामाकाङ्क्षा [35]पूर्तिमिष्यते ॥ कर्मकर्तृक्रियाणां तु [36]पूर्तौ कोऽन्योऽन्वयो भवेत् । [37]अपूर्तिश्चेत्पदैरुक्तैः किं नृश्रृङ्गेण[38] पूर्यते[39] ॥ व्यापार[42]श्चेत्पुन[41]स्तेषा[40]मनुक्ता[43]वपि किं न सः । [44]उक्ते [45]बुद्धि-

---

1 सविशेषाम्. 2 तत्सादेय. 3 पदाभिहितैः पदार्थैरन्वयबोधः. 4 यदि. 5 विशेषान्वितस्वार्थस्य. 6 पदेषु मुख्येन आद्यपदेन. 7 तथापि. 8 पदजातेन. 9 अन्वयविशेषज्ञानम्. 10 ब्रह्मणा. 11 विशेषस्य. 12 पदैकदा पदैः. 13 अन्विततया ज्ञातोर्थः. 14 अन्वितत्वेन. 15 अन्विताभिधायिता. 16 पदानाम्. 17 धर्मविशेषेणान्वयः. 18 सत्यत्वेन ज्ञानत्वेन वा अन्वित इति. 19 सत्यादिपदोक्त्यैव. 20 इति. 21 सिद्धम्. 22 वाच्यपदम्. 23 अन्वयज्ञानोपायत्वेन प्रसक्तान् अष्टौ पक्षानिराह. 24 पदस्य. 25 अन्यः. 26 वक्ता. 27 शब्दवाच्यत्वम्. 28 एव. 29 पदार्थानामर्थः. 30 सः पदार्थैः प्रतिपादितः. 31–32–33–34 अनुक्रम. 34 पदैः. 35 गवादिपदप्रयोगात्. 36 अभिधाने सति पदैः. 37 अन्वयस्यानभिधानात्. 38 तत्तुल्येन. 39 अभिधीयते. 40–41–42–43 अनुक्रम. 41–42 निरस्य व्यापारः. 43 अनुक्तानामपि. 44 उक्तौ. 45 बुद्धिविषयता.

स्वताहेतोर्यदि व्यापार इष्यते ॥ [1]बुद्धिस्थत्वाय यत्नं न कथं कुर्युः पुरैव च। पुरुषाधीनता तेषां यदि, [2]पश्चाच्च सा समा ॥ [3]पुमानेवान्वयायैषां यदि [4]पश्चाद्विचेष्टते । अनन्विताभिधानानां[5] स[6] एवार्थान्तरोक्तिषु[7] ॥ यततां शब्दशक्तिश्चेत्तत्रनैवान्वये[8] कथम् । तत्कल्पनागुरुत्वादि दोषेतोऽभिहितान्वयः ॥ अनुभूतिविरुद्धश्च त्याज्य एव मनीषिभिः । [9]कर्तृशब्दे ह्यभिहिते धर्मसामान्यवेदनात् ॥ विशेष[10]-धर्ममन्विच्छन् किमित्येव हि पृच्छति । गुणक्रियादिधर्माणां विशेषे कथिते पुनः ॥ निराकाङ्क्षो भवेद्यस्माच्छब्दा [11]अन्वितवाचकाः । अतोऽनन्तगुणात्मैको[12] भगवानेक एव तु ॥ उच्यते सर्ववेदैश्च ॥ २८ ॥ १५ ॥

॥ ॐ [13]परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥३२॥ ते[14] चाखिल[15]विलक्षणाः । सर्वे सर्वगुणात्मानः सर्वकर्तार एव तु ॥ तथापि सविशेषाश्च ॥ ३२ ॥ ॐ बुद्ध्यर्थः पादवत् ॐ ॥ ३४ ॥ [16]विद्वदुत्पत्तितोऽपि च । तैस्तैश्शब्दैश्च भण्यन्ते युज्यते चो[17]पदेशतः॥ अन्यानन्दादिसादृश्यमानु[18]कूल्यादि नापरम्[19] । पूर्णत्वादिमहत्तेषां वैलक्षण्यं श्रुतौ श्रुतम् ॥ "पूर्णोऽशेषनियन्ता च [20]सुस्वादुतम एकलः[21] । गुणोरुसमुदायोऽयं वासुदेवः सुनिष्कलः[22]" ॥

---

[1] पदार्थबोधनादिव्यापाराय. [2] अन्वयबोधने. [3] श्रोता. [4] पदार्थस्मरणानन्तरम्. [5] सहाय्येन. [6] पुमानेव. [7] तदन्यज्ञानेषु. [8] शक्तिरहितैस्तैः. [9] सम्बन्धि. [10] ज्ञानम्. [11] सामान्येनान्वितस्वार्थे. [12] अभिन्नः. [13] लोकविलक्षणं ब्रह्मानन्दादिगुणजातम्. [14] ते गुणाः. [15] लौकिकानन्दादिभ्यः. [16] भगवद्गुणसाक्षात्कारवताम्. [17] विदुषाम्. [18] निरुपाधिप्रियत्वमानन्दस्य. [19] अल्पत्वास्थिरत्वादि. [20] शोभनानन्दतमः. [21] एककी, परानपेक्षः. [22] सर्वथा विभक्तां रहितः.

वासुदेवश्रुतिश्चैषा गुणान्वक्ति हरेःपरान्[1] ॥ ३४ ॥ **ॐ [2]पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ** ॥ ४२ ॥ 'स एवाशेषजीवस्थनिःसंख्यानादिकालिकान् । धर्माऽधर्मान्सदा पश्यन्स्वेच्छया बोध[3]यत्यजः ॥ कांश्चित्तेषां फलं चैव ददाति [4]स्वयमच्युतः । न ते विशेषं कर्मापि प्रेरणादिकमच्युते ॥ कुर्युः कदाऽपि तेनायं स्वतन्त्रोऽनुपचारतः । कर्माणि तानि च पृथक् चेतनान्येव सर्वशः ॥ अचेतनशरीराणि स्वकर्मफलभाञ्जि च । प्रत्येकं तेषु[5] चानन्तकर्माण्येवं विधानि[6] च ॥ तानि चैवमितीशस्य[7] निःसीमा शक्तिरुत्तमा । एकैव ब्रह्महत्या हि वराहहरिणोदिता[8] ॥ ब्रह्मपारस्तवेनैव निष्क्रान्ता राजदेहतः । स्तोत्रस्य तस्य माहात्म्या[9]द्व्याधत्वं गमिता[10] पुनः ॥ प्राप्य ज्ञानं परं चाप तथाऽन्या[11]न्यपि सर्वशः । अनन्तान्युदितान्येवं[12] प्रभुणा कपिलेन हि ॥ संसारे पच्यमानानि कर्माण्यपि पृथक् पृथक्[13] । तस्मादनन्तमा[14]हात्म्य[15]गुणपूर्णो(र्णो) जनार्दनः ॥ भक्त्या परमयाऽऽराध्य[16] इति पादार्थ ईर्यते[17] ॥ ४२ ॥ २० ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥ २२१ ॥ २२६ ॥

॥ ॐ ॥ वैराग्यतो भक्तिदार्ढ्यं तेनोपास्ता यदा भवेत् । आपरोक्ष्यं तथा विष्णोरिति पादक्रमो भवेत् ॥ [18]युक्तितो ज्ञात-

---

1 विलक्षणान्. 2 पूर्वोक्तं ब्रह्मधर्मंच फलहेतुं मन्यते. 3 कांश्चित् सन्यापारी करोति. 4 स्वयमेव 5 कर्माभिमानिषु. 6 चेतनत्वाद्युक्तधर्मवन्ति. 7 एवं भूतानां कर्मणां दर्शनादिमतः. 8 वराहपुराणे, चेतनत्वादिरूपेण. 9 व्याधत्वादिप्राप्त्या चेतनत्वादिक गम्यते. 10 प्रापिता ब्रह्महत्या. 11 ब्रह्महत्यायाः, 12 चेतनत्वादिना. 13 उदितानि. 14 शक्ति. 15 आनन्दादि. 16 उपास्य. 17 ज्ञायते. 18 प्रथमसूत्रमारभ्य सर्वेषां अपि सूत्राणां सङ्गत्यर्थं सर्वानुवादः युक्तितः वेदविरोधियुक्तीः परस्य.

वेदार्थो निरस्य समयान्परान् । परस्परविरोधं च प्रणुद्याशेषवाक्यगम् ॥ अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः । बहुयुक्तिविरोधानां भानात्तत्संहितश्रुतेः ॥ विरोधं च निराकृत्य श्रुतीनां [1]प्राणतत्वगान् । परिहृत्य विरोधांश्च तत्प्रसादानुरञ्जितः ॥ देहकर्तृत्वमीशस्य ज्ञात्वा तत्पितृतास्मृतेः । विशेषस्नेहमापाद्य सर्वकर्तृत्वतोऽधिकम् ॥ निष्पाद्य बहुमानं च तदन्यत्रातिदुःखतः । उत्पाद्याधिकवैराग्यं तद्गुणाधिक्य-वेदनात् ॥ सर्वस्य तद्वशत्वाच दार्ढ्यं भक्तेरवाप्य च । यतेतोपासनायैव विशिष्टाचार्यसम्पदा ॥ कर्तव्या ब्रह्मजिज्ञासेत्युक्ते किमिति संशये । अत इत्युदितेऽप्यस्य विशेषानुक्तितः पुनः ॥ सृष्टिबन्धनमोक्षादि-कर्तृत्वस्य श्रुतत्वतः । यतो मोक्षादिदाताऽसावतो जिज्ञास्य एव वः ॥ इत्याह तत्परं ब्रह्म व्यासाख्यं ज्ञानरश्मिमत् । येनैव बन्ध[2]मोक्षः स्यात्स च जिज्ञासया [3]गतः ॥ सुप्रसन्नो भवेदीशो जिज्ञासाऽतोऽस्य मुक्तिदा । मोक्षादिदत्वमीशस्य कथमेवावगम्यते ॥ इति चेच्छास्त्र[4]-योनित्वाच्छास्त्रगम्यो हि मोक्षदः । प्रत्यक्षावसितेभ्यः स्याद्यदि मोक्षः कथञ्चन ॥ किमित्यनादिसंसारमग्नाः सर्वा इमाः प्रजाः । यस्मा-न्नियमतो दुःखहानिः प्रत्यक्षतो भवेत् ॥ धावन्त्येव तमुद्दिश्य राजाद्यमखिलाः प्रजाः । अनुमागम्यतो मोक्षो यदि स्यादनुमैव हि ॥ दृष्टपुरुषबन्मोक्षदातृतां विनिवारयेत् । तच्छास्त्रगम्य एवैको मोक्षदो भवति ध्रुवम् ॥ शास्त्रगम्यश्च नान्योऽस्ति मोक्षदत्वेन केशवात् । मोक्षदो हि स्वतन्त्रः स्यात्परतन्त्रः स्वयं सृती ॥ वर्तमानः कथं शक्तः परमोक्षाय केवलम् । अन्याश्रयेण यद्येष दद्यान्मोक्षं स एव हि ॥ तेन नानुसृतो मोक्षं न दद्यादन्यवाक्यतः । अतस्तदर्थमपि स ज्ञेयो विष्णुर्मुमुक्षुभिः ॥ "यमेवैष" इतिश्रुत्या 'तमेवेति' च सादरम् ।

---

[1] मुख्यप्राणेन्द्रियविषयकान्. [2] बन्धात् मोक्षः. [3] ज्ञातः. [4] मोक्षदत्वेन शास्त्रैकगम्यत्वात्. [5] अन्यस्य.

शास्त्रयोनित्वमस्यैव ज्ञायते वेदवादिभिः ॥ "य एनं विदुरमृता" इत्युक्तस्तु समुद्रगः। 'तदेव ब्रह्म परममि'ति श्रुत्याऽवधारितः ॥ 'यतः प्रसूते'ति ततः सृष्टिमाह ततो हरिः। "शास्त्रयोनि"र्न चान्योऽस्ति मुख्यतस्त्विति गम्यते ॥ शास्त्रयोनित्वमेतस्य ज्ञायते हि समन्वयात्। समिति ह्युपसर्गेण परमुख्यार्थतोच्यते ॥ एवं परममुख्यार्थो नारायण इति श्रुतेः। निर्धारणाय 'नाशब्दमि'ति वेदपतिर्जगौ ॥ कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम्। 'वेदा[1] ह्यनन्ता' इति हि श्रुतिराहाप्यनन्तताम् ॥ अनन्तवेदनिर्णीतिर्महाप्रलयवारिधेः। उत्तारणोपमेत्यस्मान्न ज्ञेयोऽत्र समन्वयः॥ इत्याशङ्कापनोदार्थं स आह करुणाकरः। अशक्योच्चारणत्वेऽपि ह्यागमापारवारिधेः ॥ निर्णीयते मयैवाय रोम[2]कूपलयोदिना। यद्यप्यशेषवेदार्थो दुर्गमोऽखिलमानवैः ॥ मज्ज्ञानाव्याकृताकाशे प्राप्नोति परमाणुताम्। [7]इति [8]प्रकाशयन्वि[9]श्वपतिराह[11] प्रमेयताम्[6] ॥ निखिल[3]स्यापि वेदस्य[4] गतिसामान्य[10]मञ्जसा[5]। को नाम गतिसा[12]मान्यमनन्तागमसम्पदः ॥ [13]ज्ञानसूर्यमृते ब्रूयात्तमेकं बादरायणम्। अन्योऽप्यल्पमतिः [14]शाखाचतुष्पञ्चगतं [15]वसु ॥ ज्ञानमनुमितत्वेन ब्रूयात्तस्य प्रमादतः। इति मुख्यतयाऽशेषगति[16]सामान्यवित्प्रभुः ॥ प्रतिजज्ञे दृढं यस्माद्वा[17]नामपि[18] [19]पूर्यते। अतो निखिलवेदानां सिद्ध एव समन्वयः॥ इति सुज्ञापितार्थोऽपि पृथक् चाह समन्वयम्। तत्र प्रथमतोऽन्यत्र[20] प्रसिद्धानां समन्वयः ॥ शब्दानां वाच्य एवात्र

---

[1] अनन्ता 'वै' वेदाः [2] उदमुदकमस्यास्तीति उदी-समुद्र रोमकूपल्योर्दी यस्य स तेन प्रलयसमुद्रसमानोऽपि वेदो मदीयज्ञानेऽन्तर्भवतीतिभाव [3 11] अनुक्रम [6] स्वेन ज्ञेयताम् [12] सर्ववेदजन्यज्ञानस्य अनिरुद्धत्वम् [13] ज्ञानेन सूर्य इव [14] चतुष्पञ्चशाखासु गतं षडादाविद्त्यात् परनिपात. [15] वसु - वित्तं तद्वेद्यवस्तुरूपम्. [16-17] उत्तमाधिकारिणाम्. [18] अपि-शङ्का. [19] निर्णीयते [20] प्रलय

महामहेशभङ्गवत् । इतोऽप्यस्यधिकत्वेऽपि तुर्यपादोदितस्य तु ॥ महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि । ब्रह्मैवाधिकृतस्तत्र मुख्यतोऽन्ये यथाक्रमम् ॥ दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽञ्जसा । अतोऽन्यत्रप्रसिद्धानां शब्दानां निर्णयाय तु ॥ प्रवृत्तः प्रथमं देवस्तत्रानन्दादयो गुणाः । ईशस्यैवेति निर्णीताः श्रुतियुक्तिसमाश्रयात् ॥ देवतान्तरगास्सर्वे शब्द[1]वृत्तिनिमित्ततः । विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः ॥ अन्यदेवान्वदन्तीह विशेष[2]गुणवत्कृतः । विष्णुमेव परं ब्रूयुरेवमन्येऽप्यशेषतः ॥ इत्यन्यत्रप्रसिद्धोरुशब्दराशेरशेषतः । ज्ञाते समन्वये विष्णौ [3]लिङ्गेष्वेप समन्वयः ॥ तेषामन्यगतत्वे तु न स्यात्सम्यक्समन्वयः । इत्येवाशेषलिङ्गा[4]नां ब्रह्मण्येव समन्वयम् ॥ आहोभयगतत्वं च स्यादतो लिङ्गशब्दयोः । इति संशयनुत्त्यर्थमुभयत्र प्रतीतितः ॥ शब्दानां वर्तमानानां सलिङ्गानां विशेषतः । समन्वयो हरावेव यन्नैवान्यत्र मुख्यतः ॥ शब्दा लिङ्गानि च यतो नैवान्यत्र स्वतन्त्रता । अस्वतन्त्रेषु शब्दस्य वृत्तिहेतुर्न मुख्यतः ॥ यतोऽतो यदधी[9]नास्ते[5] शब्दार्थत्वमुपागताः[10] । [6]अत्यल्पेनैव शब्दस्य[7] [8]वृत्तिहेतुगुणेन तु ॥ [13]अयो [14]यथा [15]दाहकत्वं [11]स एवेशः[12] स्वतन्त्रतः[16] । [17]मुख्यशब्दार्थ इति हि स्वीकर्तव्यो मनीषिभिः ॥ इत्याहैवं च शब्दानां नारायणसमन्वये । सिद्धेऽप्यशेषशब्दानां न कथञ्चन युज्यते ॥ विरोधादवरत्वादेरपि प्राप्तिर्यतो भवेत् । इति चेदवरत्वादि द्विविधं ह्युपलभ्यते ॥ परस्यावरताहेतुर्यः स्वयं पर एव सन् । सोऽपि ह्यवरशब्दार्थो यथा राजा जयी भवेत् ॥ अन्योऽवरत्वानुभवी तयोः

[1] प्रवृत्ति. [2] असाधारणगुणप्रतिपादकत्वात् [3] असाधारणधर्मैः. [4] धर्मबोधकानां यौगिकशब्दानाम्. [5] भगवतोऽन्ये पदार्थाः. [5-17] भनुक्रम. [9] सन्तः. [11] भगवानेव. [12] निरवधिकशब्दप्रवृत्तिमान्. [13] अन्याधीनं सत्. [15] दाहकशब्दार्थत्वमुपागतं यथा तथा शब्दार्थत्वमुपागताः. [16] च. [17] मुख्यः शब्दार्थः.

पूर्णोऽस्ति केशवे । द्वितीयो जीव एवाऽस्ति स्वातन्त्र्यात्रैव दूषणम् ॥ हरेरेवमशेषेण सर्वशब्दसमन्वये । उक्ते विरोधहीनत्र स्यात्समन्वयता यतः ॥ अतोऽशेषविरोधानां कृतेशेन निराकृतिः । समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णये ॥ किं मया कार्यमित्येव स्याद्बुद्धिरधिकारिणः । तत्र भक्तिविधानार्थमभक्तानर्थसन्ततौ[1] ॥ उक्तायां भक्तिदार्ढ्याय प्रोक्तेऽशेषगुणोच्चये । वक्तव्योपासना नित्यं कर्तव्येत्यादरेण[2] हि ॥ सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा चैव तदङ्गं धारणाधिकम् ॥ तथोभयात्मकं चैव पादेऽस्मिन्बादरायणः । आहोपासनमङ्गैव विस्तरात् श्रुतिपूर्वकम् ॥८॥

पृथग्दृष्टिरशक्यत्वमनिर्णीतिः समुच्चयः । विशेषदर्शनं कार्यलोपो नानोक्तिराश्रुता ॥ विभ्रमोपाकृतिर्लिङ्गमनवस्था विशेषिता । अप्रयोजनता चातिप्रसङ्गो दूरसंश्रयः ॥ विशिष्टकारणं चेष्टा दृष्टवैरूप्यमुन्नतिः । अनुक्तिरप्रयत्नत्वं दृढबन्धपराभवौ ॥ पुंसाम्यं प्राप्तसंत्यागः कारणानिर्णयो भ्रमः । विशेषदर्शितालापौ गुणसाम्यं पृथग्दृशिः ॥ अगम्यवर्त्मसन्धानमिष्टं फलमकल्पना । शुद्धवैरूप्यमङ्गत्वमविशेषदृशिः क्रिया ॥ युक्तयः पूर्वपक्षस्यास्सुज्ञेयत्वं विधिक्रिया । माहात्म्यमल्पशक्तित्वं यथायोग्यफलं भवः ॥ फलसाम्यं विशेषश्च गुणाधिक्यं प्रधानता । यथाशक्तिक्रियासन्धिः प्रमाणबलमानतिः ॥ कारणं कार्यवैशेष्यं स्वभावो वस्तुदूषणम् । प्रतिक्रिया विरोधश्च प्रतिसन्धिरनूनता ॥ संस्कारापाटवं स्वेच्छानियतिर्वस्तुवैभवम् । विशेषोक्तिरमानत्वं प्राधान्यं प्रीतिरागमः ॥ सुस्थिरत्वं कृतप्राप्तिरनादिगुणविस्तरः । साधनोत्तमता नानादृष्टिशिष्टिरनूनता ॥ अभिन्नत्वाविरोधौ च गुणवैशेष्यमागमः । सिद्धान्तनिर्णया ह्येता

[1] अभक्तानां पापिनां द्वेषिणां च नरकाद्यनर्थसमुदाये. [2] कर्तव्येति.

युक्तयो व्याहृताः सदा ॥ **ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥१॥** यथाशक्त्यखिलान्वेदान्विज्ञायोपासनं[1] भवेत् । तत्राखिलस्य विज्ञप्तिः सम्यग्ब्रह्मण एव हि ॥ तदन्येषां यथायोगमखिलज्ञप्तिरिष्यते । तावतोपासने योग्यो भवेदेवाखिलः पुमान् ॥ महत्त्वस्य परं पारं विदित्वैव जनार्दनः । स्तोष्यतामेति तुष्टत्वमिति नास्त्येव नारद ॥ किं तु निश्चलया भक्त्या ह्यात्मज्ञानानुरूपतः । यः स्तोष्यति सदा भक्तस्तुष्टस्तस्य सदा हरिः ॥ इत्यादिवाक्यसन्दर्भाद्यथायोग्याऽखिलज्ञता । आत्मज्ञानानुरूपत्वं यथाशक्ति विचारणात् ॥१॥ **ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ॥ ३ ॥** वेदः कृत्स्नोऽधिगन्तव्यः स्वाध्या[2]याध्ययनं भवेत् । इत्यादिवाक्यवैयर्थ्यमन्यथा न निवार्यते ॥ अद्यापि तेन देवाद्याः शृण्वते मन्वते सदा । ध्यायन्ति च यथायोगं तथाप्यावस्तुनिर्णयात् ॥ श्रवणं मननं चैव कर्तव्यं सर्वदैव हि । मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः ॥ वेत्ति तस्योक्तमार्गेण कुर्वतः स्याद्धि दर्शनम् । श्रवणं ह्येतत्त्वस्य मननं ध्यानमेव च ॥ [3]विशेषानन्दसम्प्राप्त्या[4] अन्यसेवानि [5]इष्टये । यदि तादृग्गुरुर्नास्ति निर्णीत[6]श्रवणादिकम् ॥ [7]सत्सिद्धान्तानुसारेण निर्णयज्ञात्समाचरेत् । श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित् ॥ अत्यशक्ये तु निद्रादौ पुनरेव समाचरेत् । अभावे निर्णयज्ञस्य सच्छास्त्राण्येव सर्वदा ॥ शृणुयाद्यदि सज्ज्ञानप्राचुर्यमुपलभ्यते । महद्भ्यो विष्णुभक्तेभ्यो यथाशक्ति च संशयान् ॥ छिन्द्यात्स्वतोऽधिकाभावे स्वयमेव समभ्यसेत् । ब्रूयादपि च शिष्येभ्यः सत्सिद्धान्तमहापयन् ॥ अशेषगुणपूर्णत्वं सर्वदोष-

---

[1] कुर्वाणो. [2] स्वाध्यायोऽध्येतव्यः. [3] मोक्षे. [4-5] युज्यते.
[6] ब्रह्मसूत्रादिकस्य. [7] सर्वेषानाम्.

समुज्झितिः। विष्णोरन्यच्च तत्तन्त्रमिति सम्यग्विनिर्णयः ॥ स्वतन्त्रत्वं सदा तस्य तस्य भेदश्च सर्वतः। अदोषत्वस्य सिध्यर्थं[1] यद्[2]भेदे [3]तदन्वयः ॥ तत्तन्त्रत्वं च मुक्तानामपि तद्गुणपूर्तये[4]। मुक्तानामपि भेदश्च न हि भिन्न[5]मभिन्नताम् ॥ गच्छद्दृष्टं क्वचि[6]त्तस्याप्यभावोऽनुभवोपगः[7]। [8]पूर्वाभेदे दोषवत्त्वमीशस्येत्यतिभिन्नता ॥ नारायणेन मुक्तानामपि सम्य[9]गिति स्थितिः[10]। [11]भेदाभेदेऽप्यभेदेन दोषाणामपि सम्भवः ॥ निर्दोषत्वं रमायाश्च [12]तदनन्तरता तथा। ब्रह्मा सरस्वती वीन्द्रशेषरुद्राश्च तत्स्त्रियः ॥ शक्रकामौ तदन्ये च क्रमा[12]न्मुक्तावपीति च। सत्सिद्धान्त इति ज्ञेयो निर्णीतो हरिणा स्वयम् ॥ एतद्विरोधि यत्सर्वं [14]तमसेऽन्धाय[15] [13]केवलम्। अन्धन्तमो विशन्तीति प्राह श्रुतिरतिस्फुटम् ॥ इत्येव श्रुतयोऽशेषाः पञ्चरात्रमथाखिलम्। मूलरामायणं[16] चैव[17] भारतं स्मृतयोऽखिलाः ॥ वैष्णवानि पुराणानि साङ्ख्ययोगौ परावपि। ब्रह्मतर्कश्च मीमांसेत्यनन्तः शब्दसागरः ॥ अनन्ता युक्तयश्चैव प्रत्यक्षागममूलकाः। प्रत्यक्षमैश्वरं चैव रमादीनामशेषतः ॥ मुक्तानामप्यमुक्तानामेतमेवार्थमुत्तमम्। अन्यायकारारहितं प्रकाशयति सादरम् ॥ एतदेव च सच्छास्त्रं दुःशास्त्रं तु ततः परम्। सच्छास्त्रमभ्यसेन्नित्यं दुःशास्त्रं तु परित्यजेत् ॥ असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनम्। सम्यग्विषम[18]विज्ञान[19]तारतम्यानुसारतः ॥ फलं भवेत्तारतम्यात्सुखदुःखात्मकं

[1] अङ्गीकार्यः. [2] यस्मात् जगतोऽभेदे. [3] दोषसम्बन्धः तस्मात्. [4] अङ्गीकार्यम्. [5] पूर्वम्. [6] नहिभिन्नमभिन्नतां गच्छतीत्यस्यार्थस्य. [7] विषयः. [8] संसारदशायाम्. [9-10] सत्सिद्धान्तः. [11] भेदसहिताभेदे. [12] प्रोक्तक्रमात्तिष्ठन्ति. [13-14-15] अनुक्रम. [15] भवति. [16-17] अथान्तररामायणानामध्यात्मवाल्मीकिरामायणानां मुख्यत्वनिरासः (श्री. ती. टि.) [18] विपरीत. [19] ज्ञान.

नृणाम् । सम्यक् चाधिकविज्ञानात्सुखाधिक्यं भवेन्नृणाम् ॥ अतो यथा[1]त्मशक्त्यैव श्रवणं मननं तथा ॥ ३ ॥ १ ॥

॥ ॐ [2]उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥६॥ कृत्वाऽथ कुर्वन्नपि वा निदिध्यासनमाचरेत् ॥ ६ ॥ २ ॥

॥ ॐ [3]अनुबन्धादिभ्यः ॐ ॥ ५१ ॥ विषयेषु च संसर्गाच्छाश्वतस्य[4] च संशयात् । मनसा चान्य[5]दाकाङ्क्ष[6]त्परं न प्रति[7]पद्यते ॥ इति भारतवाक्यं हि तेनैतद्दोषवर्जितः । सदोपासनया युक्तो वासुदेवं प्रपश्यति ॥ दोषा अनादिसम्बद्धास्ते मुक्तिपरिपन्थिनः । सन्त्येव प्रायशः पुंस्सु तेन मोक्षो न जायते ॥ सर्वे त एते जीवेषु दृश्यन्ते तारतम्यतः । ऋजूनामेक एवाऽस्ति [8]परमोत्साहवर्जनम् ॥ [9]स गुणा[10]ल्पत्वमात्रत्वान्न[11]र्जुत्वेन विरुध्यते । अतो विष्णौ परा भक्तिस्तद्भक्तेषु रमादिषु ॥ तारतम्येन कर्तव्या पुरुषार्थमभीप्सता । [12]स्वादरः सर्वजन्तूनां संसिद्धो हि स्वभावतः ॥ ततोऽधिकः स्वोत्तमेषु तदाधिक्यानुसारतः । कर्तव्यो वासुदेवान्तं सर्वथा शुभमिच्छता ॥ न कदाचित्त्यजेत्तं च क्रमेणैनं विवर्धयेत् । समेषु स्वात्मवत्स्नेहः सत्स्वन्यत्र ततो दया ॥ कार्यंवमपरोक्ष्येण दृश्यते क्षिप्रमीश्वरः । [13]तत्तमोऽन्धं व्रजेद्विष्णुसमत्वं योऽनुपश्यति ॥ रमाब्रह्मशिवादीनामपि मुक्तौ कथञ्चन । किमुताधिक्यदृष्टेस्तद्गुणाभावमतेरपि ॥ दोषवेत्तुरभेदस्य द्रष्टुर्द्रष्टुस्तयोभयोः । इत्याह सत्श्रुतिस्तेन सम्प्रोक्तगुणसंयुतः ॥ उपासीत हरिं दृष्ट्वा मुक्तिस्तेनैव

---

[1] यथात्मशक्ति+आ-सम्यक् श्रवणं कृत्वा. [2] सर्वगुणानामेकत्रुपसंहारः तत्साध्यं ध्यानं च कार्यम्. [3] हरिगुरुभक्तिशमदमादिभ्यश्च ब्रह्मसाक्षात्कारः. [4] ब्रह्मणः. [5] मोक्षादन्यद्विषयजातं प्रति. [6] आकाङ्क्षादितिघञन्तः. [7] पद्यति. [8] मोक्षार्थं. [9] सः-दोषः. [10] उत्साहरूपगुणैर्न्यूनता मात्रत्वात्. [11] निर्दोषत्वेन. [12] स्वस्मिन्. [13] प्रसिद्धम्.

जायते । द्वेषाद्यन्मुक्तिकथनं श्रुतिवाक्यविरोधि तत् ॥ [1]रिपवो ये तु रामस्य विमुखत्वान्नि[2]रामिणः । [3]अभिद्रोहपदे नित्यमन्धे तमसि ते स्थिताः ॥ 'हरिद्विषस्तमो यान्ति ये चैव [4]तदभेदिनः । तन्निर्गुणत्ववेत्तारस्तस्य दोषविदोऽपि च' ॥ इत्यादिश्रुतिसन्दर्भा-द्वेषिणस्तम ईयते । 'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ॥ विविक्षु[5]रत्यगात्सूनोः प्रह्लादस्यानुभावतः' । 'यदनिन्दत्पिता [6]मह्यं त्वद्धक्ते मयि चाघवान् ॥ तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात्' । निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः । '[7]अवजानन्ति मां मूढा [8]मानुषीं तनु-माश्रितम् ॥ परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥ राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः । मामात्मपरदेहेषु[9] प्रद्विषन्तोऽभ्यसूयकाः ॥ तानहं द्विषतः क्रूरान्संसारेषु[10] नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव[11] कौन्तेय ततो यान्त्यधमां गतिम्' ॥ 'यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् । कथं स न भवेद्वेष्य [12]आलोकान्तस्य कस्यचित् ॥ यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः' ॥ इत्यादिवाक्यसन्दोहाद्द्वेषिणस्तम एव तु ॥५१॥३१॥

---

[1] मानःस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः इति श्रुतिमर्थतः पठति. [2] रामः, रमणं अस्यास्तीति. रामी, रामः विष्णुः तस्मान्निष्क्रान्ताः विमुखाः. [3] अभितः द्रोहस्यस्थानम्. [4] तस्य हरेर्जीवाद्यभेदवादिनः. [5] प्रवेष्टुम सम्यगनाधिगम्यः. [6] मन्निमित्तं त्याम. [7] ये. [8] मनुष्यसदृशीम्. [9] प्रेरकत्वेन स्थितम्. [10] सम्सर-न्त्यत्रेति संसाराः देहाः तस्य विवरणं आसुरीष्वेवेत्यादि. [11] अप्राप्यै-वेत्युभया अन्धन्तम उक्तम्. [12] जनस्यान्तः चण्डालादिस्तत्पर्यन्तस्य.

## ॥ ॐ विद्यैव[1] तु निर्धारणात् ॐ ॥ ४८ ॥

नैव मोक्ष इति प्राहुर्लोकायतमते स्थिताः । भोगः शरीरपर्यन्तं भस्मीभावस्ततो भवेत् ॥ इति तत्केन मानेन दृष्टं प्रत्यक्षवादिना । न हि प्रत्यक्षमानेन मोक्षाभावोऽवसीयते ॥ घटते मुक्तिदृष्टिस्तु पुरुषेण महीयसा । नेति वक्तुर्महत्त्वं तु कथञ्चन न विद्यते ॥ साधयन्सर्वसामा[2]न्यं कथमेव विशेषवान् । दृश्यन्ते पुरुषा[3] लोके परापरविदोऽपि च ॥ अपरोक्षदृशो योगनिष्ठाश्चामलचक्षुषः । प्रत्यक्षं देवतां दृष्ट्वा तत्प्रसादात्प्रभूतयः ॥ ज्ञानविज्ञानपारज्ञा निषिध्यन्ते कथं नृभिः । दृश्यते चातिमाहा[4]त्म्यं तेषामतिमहौजसाम् ॥ यदि तेऽपि निषिध्यन्ते किं नोक्तिस्ते निषिध्यते । यदुक्तवाक्यप्रामाण्यं प्रत्यक्षेणोपलभ्यते ॥ वरादयोऽपि तद्दत्ताः सदा सत्या भवन्ति हि । अप्रामाण्यं तदुक्तेश्च [5]वृथा वाचाऽवसीयते ॥ न हि प्रयोजनं किञ्चित्परलोकनिवारणात् । [6]वृथावाचं वृथा हन्याद्यदि तस्य किमुत्तरम् ॥ स्वजीवनविरोधाय यदर्कि नाम बुद्धिमान् । प्रामाण्ये संशयः किं स्यात्तयोः पुरुषयोरपि ॥ स्वजीवनविरुद्धोक्ति[7]रज्ञो दृष्टस्य चापि यः । यथा[8]तीन्द्रियदेशोक्तिश्रोता दृष्टपरावरः ॥ अतीतानागतं सर्वं लोकानु[9]भवमापयन् । अतः प्रत्यक्षगम्यत्वाद्वेदमात्वस्य च स्फुटम् ॥ यद्यागमस्य नो मात्वमक्षजस्य तथा भवेत् । यद्यक्षजस्य मात्वं स्यादागमस्य कथं न तत् ॥ लोक[10]वाक्याद्विशेष[11]श्चाप्यभि[12]चारेण सिध्यति । अस्ति मोक्षोऽपि धर्मेण यथार्थज्ञानतोऽपि च ॥ प्रामाण्यमनुमायाश्च जिनस्याप्तत्वसाधने[13] । तद्वाक्याद्धर्मसज्ज्ञान-

---

[1] ज्ञानमेव मोक्षसाधनं न कर्मादिकम्. [2] सर्वपुरुषाणां समानत्वम्. [3] वसिष्ठादयः. [4] विन्ध्यस्थगनसमुद्रपानादि. [5] व्यर्थत्व. [6] वृथा वाग् यस्य सः तम्. [7] उक्तिमान्. [8] यत्र तयोः प्रामाण्ये. [9] विश्वासं प्रापयन्. [10] उन्मत्त. [11] वैलक्षण्यम्. [12] बाधाभावेन. [13] सति.

निवृत्तिर्भवतीति च ॥ धर्मोऽहिंसा[1]परो [2]नान्यो ज्ञानं पुद्गल[3]दर्शनम् । इति जैनाः कथं [4]तत्स्यात्प्रमाणमनुमानतः ॥ विषयान्प्रति स्थितं ह्यक्षं प्रत्यक्षमिति गीयते । प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता ॥ आसमन्ताद्गमयति[5] धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं त्वन्यत्ते-नामागमः स्मृतः ॥ एतेन कारणेनैव तत्तन्मानत्वमिष्यते । स्वरूपं हि तदेतेषामन्यथाऽसिद्धि[6]मानतः ॥ अतोऽनुमा कथं धर्मं पुद्गलं चापि दर्शयेत् । स्वरूपे [7]पुद्गलस्योक्ता दोषा [8]आनन्दमेव च ॥ न मन्यते पुद्गलं स दुःखाभावः सुखं स्थिति । [9]मात्रभोगातिरेकेण सुखाधिक्यस्य दर्शनात् ॥ सुखस्याभावता केन न च स्यात्किं विपर्ययः[10] । यदि[11] [13]भावोऽपि [12]कश्चित्स्या[14]त्तस्यैवाभावता कुतः ॥ यदि[15] सर्वेऽप्यभावाः[16] स्युरन्योऽ[17]न्यमिति [18]भावता । [19]अभावा भावतैव स्यात्किमश्छिन्नं तदा भवेत् ॥ भावत्वं विधिरूपत्वं निषेधत्व-मभावता । निषेधस्य निषेधोऽपि भाव एव बलाद्भवेत् ॥ प्रथम-प्रतिपत्तिस्तु भावाभावनियामिका । न च पुद्गलविज्ञानं मोक्षदं भवति क्वचित् ॥ अस्वातन्त्र्यात्पुद्गलस्य ज्ञातोऽपि सुखदो न हि । न हि दुःखिपरिज्ञानाद्दुःखित्वं विनिवर्तते ॥ यदि पुद्गलविज्ञानाददुःखी स्यात्कथञ्चन[20] । [24]देहवानपि [25]नादुःखी किं [21]ज्ञानादुत्तरं[22] सदा[23] ॥

[1] अहिंसा परा, प्रधानभूता यस्य सः. [2] हिंसासहितः. [3] जीवस्य देहस्य वा तद्विविक्तत्वेन [4] जिनवाक्यम्. [5] प्रादिसमासोऽयं नान्यर्थाभावः प्रत्यक्षस्येति प्रयोगात्. गम्यतेनेन इत्येव विग्रहः करणार्थे एव प्रत्ययोक्तेः। इदं त्वर्थप्रदर्शनमात्र इति 'स्वतएवागमस्य-र्था'स्वम परिमळे. [6] रूपप्रकारान्तरेण निरूपयितुमशक्यत्वादित्यर्थः. [7] जीवस्य. [8] आनन्दरूपम् [9] भीयन्त इति शब्दादिविषयाणाम्. [10] सुखाभावः दुःख इति. [11–12–13–14] अनुक्रम. [12] पदार्थः. [13] भाव-रूप [14] सुखस्य. [15] पदार्थाः. [16-17] अन्योन्याभावः. [18] यतः. [19] भावतैव स्यात्. [20] दुःखात्म भानयोर्विरुद्धत्वेन. [21–25] अन्वय-क्रम. [22] उत्तरकालम् [23] स्यात्.

ईशसङ्कल्प्स्य[1]नुसारेण स्यात्काला[2]दीशवादिनः । कर्महेतु[3]त्वमपि तु निश्चितन्यान्नहि क्वचित् ॥ अशेषदुःख[4]विलये [7]नेदानीं[5] [8]कारणं [6]यथा । तथोत्तरं[9] न चैव स्याद्दृष्टि[10]पूर्वानुमा यतः ॥ शक्तस्यान्यस्य विज्ञानं तत्प्रीतिजनकं यदि । तयैव बन्धहानिः स्यादिति[11] किं नाम दूषणम् ॥ स्वज्ञानाद्बन्धहानिस्तु दृश्यते कस्य कुत्रचित् । अहिंसायाश्च धर्मत्वं केन मानेन गम्यते ॥ हिंसाया एव धर्मत्वमित्युक्ते स्यात्किमुत्तरम् । धर्मस्य [12]सुखहेतुत्वमपि केनावगम्यते ॥ हत्याया मोक्षहेतुत्वं कुतो मानान्निवार्यते । न च [13]शून्यपरिज्ञानाच्छून्य[14]भावनयाऽपि च ॥ मोक्षः कथञ्चन भवेद्यदीदानीं कथं न सः । परप्रसादनेच्छोस्तु विलम्बो नाम युज्यते ॥ प्रुमिच्छाधीनता नो चेद्विलम्बः किं कृतो भवेत् । [15]अन्यत्रापि विलम्बास्तु स्युरीशेच्छानिमित्ततः ॥ [16]अन्यथा कारणं चेत्स्यात्किं कार्यं नोपजायते । कारणे सति कार्यस्य [17]भावः सुनियतोऽस्य[18] हि ॥ विज्ञानवादिनश्चैव विज्ञानाद्वैत[19]वेदनात् । विज्ञानभावनाच्चैव मोक्षो न घटते क्वचित् ॥ [20]अन्तर्ज्ञानस्य बाह्य[21] च क्षणिकत्वस्य वेदनात् । भावनाचोक्तमार्गेण मानाभावान्न मुच्यते ॥ [22]प्रकृतेः [23]पुरुषस्यापि विवेको[24] मुक्तिसाधनम् । इति साङ्ख्या न चैतस्मिन्मानमीशा[25] प्रसादतः ॥ श्रुतयः स्मृतयश्चैव यदेशस्य प्रसादतः । वदन्ति नियमान्मुक्तिं तमृतेऽतः कुतो भवेत् ॥ कणादयोगाक्षपादा

---

1 सङ्कल्प. 2 कश्चित्कालमतियाह्य मुक्तिः स्यात्. 3 मोक्षं प्रतिकर्मणो-हेतुत्वम्. 5-8 अन्वयक्रम. 4 प्रलये. 7-8 न मोक्षस्य कारणं कर्म. 7 इदानींतनं कर्म. 10 प्रमाणगृहीतव्याप्त्यादिमति. 11 इति यद्यनु-मीयते तदा. 12 मोक्षम्. 13 शून्यतत्त्वस्य. 14 ध्यानेन. 15 मोक्षात्. 16 ईश्वरेच्छाया अकल्पने. 17 उत्पादः. 18 बौद्धस्य मते. 19 द्वितैव द्वैतं, न द्वैतं अद्वैतं. विज्ञानस्याद्वैतं-एकत्वम्. 20 शरीरान्तः स्थितस्य. 21 स्थितस्य घटादेः. 22 अन्तःकरणादिरूपायाः. 23 जीवस्य. 24 भेद-दर्शनम्. 25 ईशप्रसादं विना मोक्षसाधनमित्यर्थः.

अपीशस्य प्रसादतः । मुक्तिं ब्रुवाणा अप्याहुर्भोगादेव च कर्मणाम् ॥ क्षयं प्राहुः श्रुतयस्तत्प्रमत्ते जगदीश्वरे[1] । भिद्यते [2]हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे [3]परावरे[4] । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे[5] । इति श्रुतिपुराणादिवचनेभ्योऽन्यथा[6] गतेः ॥ न च पाशुपताद्युक्त[7]शिवादीना[8]मनुग्रहात्[9] । 'नान्यः पन्था' इति ह्युक्तं पुरुषज्ञानतः [10]श्रुतौ ॥ 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि[11]' । एवं पुरुषशब्दश्च प्रयुक्तोऽखिलशब्दे हरौ ॥ 'न तस्येशे[12] कश्चन तस्य[14] नाम[16] [13]महद्यशः[15]' । इति चाधिपतिस्तस्य प्रतिषिद्धः स्वयं श्रुतौ ॥ 'विश्वतः [17]परमं नित्यं विश्वं[18] नारायणं हरिम्[19]' । इति सर्वाधिकत्वोक्त्या समोऽपि विनिवारितः ॥ समाधिकस्य[20] राहित्याच्चोपचार-प्रमानमौ । '[22]पुरुष एवेदं सर्वं यद्भूतं यच्च [21]भव्यम् ॥ [23]उतामृत[27]त्वस्ये[28]शानो [24]यदन्ने[25]नातिरोहति[26]' । मुक्तामुक्तपरेशत्वमिति तस्याह सा श्रुतिः ॥ अमृतेशानवचनात्सर्वस्येशानतोदिता । यदि सर्वत्वमुदितमुतेश इति [29]तद्व्यथा ॥ उतशब्दो वदेदेष हीशत्वस्य समुच्चयम् । पुरुषेणेदं व्याप्तमिति ब्राह्मणं चाह तं प्रति ॥ एतावानस्य महिमेति महिम्नो वचो हि तत् । सोऽमृतत्वस्यामयस्येशो मर्त्यमन्नं यदत्यगात्[30] ॥ इत्यमुक्ताधिपत्यं तु पूर्वार्धोक्तमनूद्य च ।

---

[1] कर्मणा क्षयोक्ते [2] अविद्या [3] परा अन्यवरा यस्मात् स तस्मिन्. [4] कठोपनिषत् [5] भागवते. [6] अन्यथैवोपपत्ते. [7] उक्तात्. [8] 'पद्मया आप्नोति' इत्युक्तुः [9] मोक्ष. [10] अमृतत्वम् [11] नारायणोपनिषदि [12] ईश-ईष्टे-नियामकः. [13] 14-15-16 अन्वयक्रम. [13] महत् इति. [15] यश इतिच. [16] ना. उ. [17] परमश्चासौ अश्च परमा त अ -अकार वाच्य. [18] पूर्णं. [19] ना उ [20] द्वन्द्वेदपद्वान [21] भविष्यत् सत्यर्थम् [22] पुरुषाधीनमेव [24] यस्मात्. [25] अर्थ, अदनीयममुक्तवर्गम् [26] अतिक्रमति अत्र कस्यार्थास्य [27] मुक्तवर्गस्य. [29] उक्तपदम् [30] भागवते

उतामृतस्येश इति विधत्ते मुक्तिगेशताम् ॥ अतो विष्णुपरिज्ञानादेव मुक्तिर्न चान्यतः । तद्यथेति श्रुतेश्चैव [1]ततः कर्मक्षयो भवेत् ॥ यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ [2]सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ इत्यादिभगवद्वाक्यैरुक्तार्थश्चावसीयते । नित्यनैमित्तिकं[3] कर्म कुर्वन्नन्य[4]त्परित्यजन् ॥ मुच्यते संसृतेश्चैतदप्येतेन निराकृतम् । विधैवेतीममेवार्थं स्वयमेवाह वेदराट् ॥ विना [5]कर्म न मोक्षः[6] स्याज्ज्ञानेनेत्यपि सा श्रुतिः । नान्यः पन्था इति ह्येव निवारयति सादरम् ॥ अन्यथोपासनमपि [7]तमेव[8]मिति वादिनी । निवारयत्यादरेण न प्रतीक इति प्रभुः ॥ 'अन्धन्तमः प्रविशन्ति ये त्वविद्यामुपासते' । इति श्रुतिविरोधाच्च नान्यथोपासनं भवेत् ॥ न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यते । इति सर्वं प्रविज्ञाय सर्वैस्तर्कैः सदागमैः ॥ उपासीत हरिं नित्यं गुणैरेव स्वयोग्यतः । ब्रह्मा [9]सर्वगुणैश्चैव क्रियासामान्यतश्च[10] गीः[11] ॥ गुणसामान्यतो रुद्रो द्रव्य[12]सामान्यतः परे ॥ ४८ ॥ २९ ॥

॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ ३३ ॥ अधिकार[13]विशेषेण भक्तिज्ञानसुखादिभिः । विशेषो देवतादीनां मोक्षे [14]चैव विशेषतः[15] ॥ ३३ ॥ ॐ अक्षरधियां त्वविरोधः [16]सामान्य[17]तद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ॥ ३४ ॥ न तावता विरोधोऽस्ति निर्दोषत्वात्समस्तशः ।

[1] विष्णुज्ञानात्. [2] अवैष्णवान् 'मन्मना भव'इत्यादिविधानात्. [3] पितृश्राद्धादि. [4] काम्यं निषिद्धं च. [5] ध्यानेन. [6] आनन्दवृद्धिः संसारनिवृत्तिश्च. [7] तं-सहस्रशीर्षेत्यादिधर्मोपितम्. [8] एवं-यथास्थितेनैव प्रकारेण न त्वन्यथा. [9] वेदोक्तैः. [10] सङ्कोचेन. [11] सरस्वती. [12] रूप. [13] योग्यता. [14] च=तु. [15] एव. [16] निर्दोषत्वेनसमानत्वात् सर्वेषाम्. [17] उत्तमेभ्योऽधमानामुपकार सत्त्वात्.

आभा[3]सत्वा[2]त्परेषां [1]तद्वराणां च सर्वशः ॥ यतोऽवराणां सर्वेऽपि गुणाः सर्वाः क्रिया अपि । नियमेनैव पूर्वेषां सुप्रसादनिबन्धनाः ॥ अतः सच्छिष्यवत्तेषां नैर्ष्यादिः कथञ्चन । न च संसारिदेवानां कालेयत्तापरे इमे ॥ सूत्रे ह्यारब्धमात्रस्य भोगेनैव क्षयो ध्रुवः । अनारब्धस्य[4] भोगेन त्वितरे [5]इति चोदितः ॥ पौनरुक्त्येन तेनैते उक्तार्थे इति निश्चयः ॥ ३४ ॥ २० ॥

॥ ॐ इयदामननात् ॐ ॥ ३५ ॥ [6]उपास्याहा च [7]पर्जन्यो [8]मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ॥ उत्तरोत्तरतस्त्वेते गुणैः सर्वत्र मुक्तिगाः । सूर्यधर्मौ यथा सोमो मनुर्दक्षो बृहस्पतिः ॥ शची रतिश्चानिरुद्धसमास्तारा च मित्रवत् । सोमवच्छतरूपा तु [9]प्रसूतिर्वह्निवद्विराट्[10] ॥ पर्जन्यवद्वारुणी[11] च तथा संज्ञा[12] च रोहिणी[13] । [14]धार्मीच मित्रवत्त्वेष प्रावही परिकीर्तिता ॥ मित्रपर्जन्यमध्यस्थावश्विनौ विप्रवित्तपौ । भृगुरग्निसमो मित्र[15]स्तन्मध्ये ब्रह्मपुत्रकाः ॥ वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् । कामः सुपर्णी चोमा यद्वीन्द्रो रुद्रवदीरितः ॥ निर्ऋतिर्मित्रसदृशो विश्वामित्रः[16] कन्न[19]नुवत् । वैवस्वतो[17] मनु[18]श्चाग्निपश्चादन्ये ततोऽवराः ॥ [20]च्यवनोचथ्य[21]वैन्याश्च शशबिन्दुश्च हैहयः । तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ॥ तद्वत्प्रियव्रतश्चापि तदन्याः [22]शतदेवताः । पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः ॥ एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः । तत्समो नास्ति परमो

---

1-2-3 अन्वयक्रम. 2 उत्तमानाम्. 4 कार्ये एव तु पूर्वे. 5 क्षपयित्वाऽथ-सम्पत्स्यते. 6 छान्दोग्योक्तानां नामवागादीनाम् 7-8 आदित्यौ एवं समान् मध्येस्थितांश्चाह. 9 दक्षभार्या. 10 अनिरुद्धभार्या. 11 वरुण-स्येयम्. 12 सूर्यभार्या. 13 चन्द्रभार्या. 14 धर्मस्येयम्. 15 अग्नि. 16-19 अन्वयक्रम. 20-21 विप्रौ अन्ये राजन्याः. 22 सोमाद्याः.

हरिरेव न चापरः ॥ संहितायां[1] बृहत्यां[2] तु स्वयं भगवतोदितम् । तदेतदखिलं प्राण आहङ्कारिक एव च ॥ इन्द्रादनन्तरो ॥२५॥ २१ ॥

॥ ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥५२॥

[3]दृष्टिरपि योग्यानुसारतः ॥ ५२ ॥ २२ ॥

॥ ॐ [4]प्रदानवदेव हि तदुक्तम् ॐ ॥ ४४ ॥

॥ ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥ ४५ ॥

सम्यग्गुरुप्रसादश्च मुख्यतो दृष्टिकारणम् । श्रवणादि च कर्तव्यं नान्यथा दर्शनं क्वचित् ॥ ४४, ४५ ॥ २६, २७ ॥

॥ ॐ [5]पूर्वविकल्पः [6]प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ ४६ ॥ गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचित् । विपर्ययस्तु कर्तव्यः सर्वथा शुभमिच्छता ॥ समे विकल्प एव स्यात्पूर्वानुज्ञा च सर्वथा । तदुत्तमगुरुप्राप्त्यै पूर्वानुज्ञा न मृग्यते ॥ गुरुर्ब्रह्माऽखिलानां च विद्या[7] चैव सरस्वती । देवता[8] भगवान्विष्णुः सर्वेषामविशेषतः ॥ तत्प्रसादेन मुक्तिः स्यान्नान्यथा तु कथञ्चन । स्वोत्तमास्तु[9] क्रमेणैव सर्वेषां गुरवः स्मृताः ॥ उपदेशो ब्रह्मणस्तु सर्वेषामेव मुक्तये ॥ ४६ ॥ २८ ॥

॥ ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ ५४ ॥ साधनेभ्योऽधिका भक्तिर्नैवान्यत्तादृशं क्वचित् । भक्तिश्चैव हरावेव मुख्याऽन्यत्र यथाक्रमम् ॥ स्वाधिक्येन

[1-2] बृहत्संहितायाम्. [3] अपरोक्षज्ञानम्. [4] प्रमादपूर्वकगुरोर्विद्यादानं तदुक्तं श्रवणादि. [5] पूर्वप्राप्तेन गुरुणाऽऽगमनस्य पश्चात्तनस्य विकल्पः. [6] प्रकरणानुग्रहमपेक्ष्य गुरोः स्वीकर्तव्यत्वात्. [7] विद्याभिमानिनी. [8] विद्याप्रतिपाद्या. [9] विद्यासम्प्रदायप्रवर्तकत्वेन् वरत्वेन न चेदनुमादकत्वादिना गुरवः

सर्वत्र स्वोत्तमेषु क्रमेण च । अनुवर्तते च सा भक्तिर्मुक्तावानन्दरूपिणी ॥ तत्पूर्विकोपासनैवं कर्तव्या मुक्तये गुणैः ॥ ५४ ॥ ३४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥ २११ ॥ ४३७ ॥

॥ ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ॥ १ ॥ एवमुत्पन्ननिर्दोषभगवद्दर्शनात्सदा । अपेक्षितफलप्राप्तिरारब्धस्यानतिक्रमात्[1] ॥ देवर्षिमानुषादीनां तत्तज्ञा[2]त्यनुसारतः । जैमिन्युक्तं[3] मानुषाणां [4]तद्विशेषाश्च केचन ॥ सामान्यं भगवत्प्रोक्तं देवादीनां[5] विशेषतः[6] । बलवद्विरोधिसद्भावे[7] जैमिन्याद्युक्तिरिष्यते ॥ १ ॥

॥ ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ १४ ॥ [8]विकर्मलेपो नैवाऽस्ति सम्यग्दृष्टिमतां क्वचित् । गुणहानिश्च नैवास्ति ब्रह्मणस्त्वविकर्मतः[9] ॥ देवानामपि न प्रायः कृत्स्नस्य तु कथञ्चन । [10]प्राप्तह्रासो भवेत्क्वापि महता तु विकर्मणा ॥ तथापि तत्कृतमेव तस्मान्न [11]नियमोज्झितिः । चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् ॥ प्राप्तहानिरभून्नैव कृत्स्नहानिः कथञ्चन । ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा ॥ भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः ॥ १४ ॥

॥ ॐ कामकारेण चैके ॐ ॥ १५ ॥ ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते । अशुचित्वादिकं[12] चास्य न भवेदिति तत्फलम्[13] ॥

---

[1] अतिक्रममकृत्वा. [2] योग्यता. [3] स्नानाङ्गस्य कर्मण एव स्वर्गादिसाधनत्वम्. [4] स्वतन्त्रस्नानस्य तथात्वमित्यंशो समानाः जैमिनिमतैकदेशाः । [5] देवादिविषयं व्यवतिष्ठते. [6] अपवादैरपोदितं सत्. [7] प्रतिबन्धक, अप्रतिबद्धज्ञानविषयकं व्यासमतम्. [8] निषिद्धकर्म. [9] निषिद्धकर्मणएव राहित्यात्. [10] प्रमत्तस्य. [11] शास्त्रस्य. [12] असम्भाष्यत्वादिकम्. [13] ज्ञानोत्तरपापस्य.

अत्र ज्ञानफलस्यैव मुक्तेर्नियतताेच्यते ॥ १५ ॥ **ॐ उपमर्दं च ॐ ॥ १६ ॥** प्रारब्धकर्मजस्यैव विषभक्षान्मृतेरिव । [1]प्राप्तस्याप्य-[2]निवर्त्यस्य किञ्चिद्भुक्तस्य संविदा ॥ उपमर्द इह प्रोक्तो देवादीनां यथाक्रमम् । सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मणः ॥ न ब्रह्मदर्शिनोऽपि स्यात्फलह्रासस्तु विद्यते । सर्वात्मना[3] फलह्रासो यदि नारब्धकर्मणः ॥ स्यात्काम्य[4]विधिर्वैयर्थ्यमि[5]त्युक्तनियमो भवेत् । एवमाद्यपि सम्प्रोक्तं तन्त्रभागवते स्फुटम् ॥[6] तारतम्यं फले नो चेद्ब्रह्मादीनां कथं श्रुतिः । अवृजिनोऽकामहत इति मुक्तिं निगद्य च ॥ आनन्दतारतम्यं च तेषां ब्रूयात्पृथक् पृथक् । संसार एव चेदेत-त्तारतम्यं न मुख्यतः ॥ अकामहतशब्दार्थोऽवृजिनत्वं च नो भवेत् । कामस्य यत्राप्ताः[7] [8]कामास्तत्र माममृतं कृधि ॥ इति [9]यल्लक्षणं मुक्तेः श्रुतिराह बलीयसी । कामाहतिः कुतोऽ[10]न्यत्र प्राप्तकामस्य सा भवेत् ॥ अप्रयत्नेन कामानामवाप्तिः सा यदा भवेत् । तदैवाकामहतता कुत एवान्यथा भवेत् ॥ चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामता । अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोः ॥ यत्कामः[11] स्वाप-माप्नोति तदैवोत्थापितः पुनः । अवशोऽपि व्याहरति[12] कुतः सुप्ताव-कामता ॥ [13]सर्वकामानवाप्नोति ब्रह्मणा सह मुक्तिगः । [14]पर्यंति तत्र [15]जक्षंश्च क्रीडन् रतिमवाप्नुयात् ॥ कामान्नी कामरूपी सन्निमाँल्लोकांश्च सञ्चरन् । आस्ते गायन्साम मुक्त इत्यादिश्रुतिसद्बलात् ॥ अकाम-स्स्यात्कथं मुक्तः कामा येऽस्य हृदि श्रिताः । इत्यन्तःकरणस्थानां

---

[1] प्रसक्तस्यापि. [2] अनिवर्त्यतया. [3] ईषदपि. [4] ब्रह्महत्यादिकर्म-विपाकक्षयरोगादिनिवृत्त्यर्थानां प्रायश्चित्तविधीनां व्यर्थता. [5] तस्मात्.
[6] यावदधिकारमित्यधिकरणस्य विस्तारोऽयम् रामानुजमतनिरासः.
[7] प्राप्ताः. [8] विषयाः. [9] यतः. [10] मुक्तान्. [11] यदिच्छावान्.
[12] यतस्ततः. [13] मोऽश्नुते. [14] स तत्र पर्येति. [15] धैदिकत्वात्साधुः.

कामानां मोक्षमेव हि ॥ आह श्रुतिर्हृदीत्येव न चेद्व्यर्थं विशेषणम् । हृद्येव तेषां श्रयणमिति पक्षो न भासते ॥ मुक्तानां कामितामाह पृथक्शाखासु यच्छ्रुतिः । अतोऽकामहतत्वं तु मुक्तानामेव मुख्यतः ॥ मुख्यार्थस्य वृथा त्यागो मायिनामेव भूषणम् । [4]अपापत्वमदुःखत्वं[5] [6]चावृजि[3]नत्व[2]मिहोदितम्[1] ॥ अप्रियं वृजिनं दुःखमर्कं तोद[7] इतीर्यते । तत्कारणत्वात्पापं वा वृजिनं नाम कथ्यते ॥ इत्युक्तः स्वयमीशेन [8]नामार्थः शब्दनिर्णये । अपापत्वं च नैवास्ति यावत्संसारमस्य हि ॥ आरब्धपापमस्त्येव दुःखं च ज्ञानिनोऽपि हि । तस्मात्तस्मा[9]दकामत्व-मिति चाश्रुतकल्पना ॥ अकामहत इत्युक्तेरश्रुत[10]हानिरपि स्फुटा । [11]कुत्रचित्कामिनः[12] पुंसः[13] कामा[15]भावात्कचित्[14] कचित् ॥ इन्द्रादि-[16]सुखभोगोऽस्तीत्यनु[17]भूतिर्हि [18]कुप्यति । तस्मादमुक्तसुखगं तारतम्यं पृथक्[19] पृथक् ॥ उक्त्वा[20] यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः । आहेति पैङ्गलं तच्च चशब्दादेव गम्यते ॥ राद्धः संसिद्ध[21] इत्येव [22]मुक्त एवावगम्यते । साधुना निपुणा युक्तो मुक्तः [23]साधुयुवा मतः ॥ यौवनं नित्यमेतस्य मुक्तस्येति युवा स च । फलमध्ययन-स्यासं तेनाध्यायक ईरितः ॥ निर्ह्रासानन्दसम्प्राप्त्या चाशिष्ठ इति गीयते । स्थितस्यानन्यथा प्राप्तेर्दृढिष्ठ इति चोदितः ॥ बलिष्ठश्च समाधेन मुक्तो भवति केवलम् । तस्येयं पृथिवीत्यादि पूर्वमान-व्यपेक्षया ॥ स एक इति संसारगतमुक्त्वा सुखं पुनः । श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मताम् । संसारगाच्च संसारगतस्यैव शताधिकम् ॥

---

[1–6] अन्वयक्रमः. [7] तुदव्यथने तत्कारणम् [8] वृजिन [9] पूर्वपूर्व-निर्दिष्टादतिशयेनोत्तरस्य. [10] अकाम इति परेण व्याख्याततेन, हत शब्दस्य त्यागः. [11–15] अन्वयक्रमः. [11] इन्द्रादिपद व्यतिरिक्ते. [16] इन्द्रादिपदं. [17] इन्द्रादिसमान. [17] इति व्याख्याने. [18] राज्या-निच्छोः तत्सुखादर्शनात्. [19] ते ये शतं इत्यादिना. [20] श्रोत्रियस्य-चाकामहतस्य. [21] समृद्धः शुद्ध. [22] मुक्तः मनुष्यः. [23] संधि.

मुक्तान्मुक्तस्य युक्तं स्याच्छ्रुत्युक्तमभिवीक्षतः[1] । युक्तं च साधनाधिक्यात्साध्याधिक्यं सुरादिषु ॥ नाधिक्यं यदि साध्ये स्यात्प्रयत्नः साधने कुतः । यत्नश्च दृश्यते तेषां महानेव महात्मनाम् ॥ यत्र साधनबाहुल्यं साध्यबाहुल्यमत्र च । दृष्टं नियमतो नो चेन्न यत्नं कुर्युरञ्जसा ॥ कृच्छ्रेण साधनादेव न [2]मुक्तवदुदीर्यते । 'दश[3]कल्पं तपश्चीर्णं रुद्रेण लवणार्णवे ॥ त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा । शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ॥ वर्षायुतं च सूर्येण तपोऽवाक्[4]शिरसा कृतम्। सुदुःखेन सुखं त्यक्त्वा धर्मेणाकाशशायिना ॥ पीता मरीचयो वर्ष[5]साहस्रमतिसादरम् । अतिकृच्छ्रेण कुर्वन्ति यत्नं ब्रह्मविदोऽपि च' ॥ इत्येतदखिलं मोक्षविशेषाभावतः कथम् । दैवीसंप[6]द्विमोक्षाय[7] निबन्धा[8]यासुरी मता ॥ इति मोक्षविशेषश्च स्वयं भगवतोदितः । '[9]तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः ॥ अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारा[10]वसितार्थसिद्धये' । 'अक्षण्वन्तः कर्णवन्तः सखायो [11]मनोजवेष्वसमा[12] बभूवुः ॥ आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे' । इत्यादीनि च वाक्यानि तारतम्यं विमुक्तिगम् ॥ व्यक्तं वदन्ति तत्केन साम्यं मुक्तेषु गम्यते । दुःखाद्यभावसाम्यं च साम्यवाक्यार्थ ईयते ॥ भक्त्यादिगुणसद्भावे [13]ह्यतुल्यत्वं च भारते ।

---

[1] अभिवीक्षमाणस्य 'यततामपि सिद्धानां' इति गीतायां काङ्क्षतः-कर्मणमित्यत्र काङ्क्षमाणा इति रामानुजभाष्ये "रोदमान" इति शाङ्करस्तुतौ च प्रयोगात् चान्द्रादयस्तु मन्यन्ते सर्वसाधुमयं पदम्. [2] मुक्तानां लीलयैव. [3] ब्रह्मदिन. [4] अधःकृत. [5] सहस्रं परिमाणमस्येति सङ्ख्या. [6] योग्यता. [7] विशिष्ट मोक्षाय. [8] नीचस्थानेऽन्धेतमसि बन्धाय. [9] विष्णुम्. [10] योग्यतानुसारेण निश्चितस्य मोक्षस्य लाभाय. [11] प्रज्ञातिशय ज्ञानादिगुणेषु. [12] तारतम्योपेताः. [13] असमर्त्वं मोक्षफलस्य.

उक्तं साधनवैचित्र्यमपि सर्वत्र कथ्यते ॥ 'दुर्ज्ञेयं घोररूपस्य त्रैलोक्यध्वंसिनः [1]प्रभोः । दैवतैर्मुनिभिः सिद्धैर्महायोगिभिरेव च ॥ नित्ययुक्तैर्महाभागैर्विमोहक्लेशसाध्वसैः । महोत्साहैर्महाधैर्यैः सत्त्वस्थैर्व्यवमायिभिः ॥ अतीतानागतज्ञानप्रभावाप्ययवेदिभिः । शौचस्वाध्यायसन्तोषतपःसत्वदयान्वितैः ॥ किमु मर्त्यैर्भयभ्रान्तिध्वंसमोहरुजान्वितैः । अल्पायुर्वीर्यधीसत्त्वव्यवसायश्रुतिव्रतैः[2]' ॥ 'कस्त्वं मदा[3]मदं देवं मदन्यो ज्ञातुमर्हति । ब्रह्मैव किञ्चिज्जानाति न तदन्यो हि कश्चन' ॥ 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते' ॥ 'इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद' ॥ 'यः [4]स्वात्ममायाविभवं स्वयं [5]गतो नाहं नभस्वांस्तमथापरे कुतः । ब्रह्माऽपि [6]यं वेत्ति न वेद[7] सम्यगन्ये कुतो देवमुनीन्द्रमर्त्याः' ॥ 'नमस्तेऽमिततत्त्वाय[8] ब्रह्मादीनां च सूतये[9] । निर्गुणाय च यत्काष्ठां[10] नाहं वेदापरे कुतः' ॥ 'नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्वि[11]रचितं खलु सत्त्वसङ्घाः । यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः' ॥ 'अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः । आदित्यविश्वेवसवोऽथ साध्या मरुद्गणाः रुद्रगणाः ससिद्धाः ॥ अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः । यस्येहितं[12] न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये' ॥ 'सर्वस्मादौ[13] स्मृतो ब्रह्मा तस्माद्देवादनन्तरः । जानाति देवप्रवरं [14]भूय[15]श्चातोऽधिकं

[1] ध्यानचर्म नृसिंहस्य. [2] वैहायससंहितावाक्यमिदम्. [3] पठ. सुरासुराणां सुखदुःखहेतुम्. [4] स्वरूपमहिम्नो विस्तारम्. [5] ज्ञातवान्. [6] हरिम्. [7] जीवेषु. [8] स्वरूपाय. [9] कारणाय. [10] सम्यग्दिग्भागम्. [11] यस्य चरित्रम्. [12] चेष्टितम्. [13] आद्यत्वेन. [14] अतिशयेन. [15] ज्ञानियर्गात्.

नृप ' ॥ 'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन । मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि ' ॥ 'यथाभक्तिविशेषोऽत्र[1] दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने[2] ' ॥ 'सायुज्यं समनुप्राप्ता अपि देवादयोऽखिलाः । तारतम्याद्धि तिष्ठन्ति तारतम्यं हि साधने ' ॥ 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये[3] । यततामपि सिद्धानां कश्चिन्मां वेत्ति [4]तत्त्वतः ' ॥ '[5]य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः । भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ श्रद्धावाननसूयश्च शृणुयादपि यो नरः । सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ' ॥ 'ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना । अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ' ॥ '[6]सुसूक्ष्मैरप्यशेषैश्च विशेषैः सह पश्यति । स्वात्मानं भगवान्विष्णुः सर्वरूपोऽपि सर्वदा ॥ सर्वत्र [7]चान्यदप्येवं तेनादृष्टं न हि क्वचित् । सर्वत्र सर्वदैवेशं पश्यत्येव रमाऽपि तु ॥ न तु सर्वविशेषैस्तं पश्यन्त्यप्यन्यतोऽधिकम् । स्वात्मानमन्यच्चाशेषं पश्यत्येव हि सर्वदा ॥ ब्रह्मा तु सर्वगं पश्येद्गुणानप्यन्यतोऽधिकम् । न तु सर्वेषु कालेषु तथा पश्यत्यमुक्तिगः ॥ मुक्तस्तु सर्वदा पश्येत्सर्वगत्वेन चापि तु । न रमावद्विशेषाणां दर्शनं शक्नुयात्कचित् ॥ *स्वात्मानमन्यच्च सदा विशेषैरखिलैरपि । पश्यत्यजस्तथा वाणी*

---

[1] संसारे. [2] लिङ्गशरीरभङ्गे जाते सति. [3] ज्ञानाय. [4] प्राचुर्येण एकं च तत्त्वतो ज्ञातुमिति यथा. [5] व्याख्यातुरध्येतुः श्रोतुश्चतारतम्यमुक्तमत्र. [6] अत्र सर्वेषां ज्ञानतारतम्यमुच्यते. [7] विभ्रम

विशेषांस्तावतो न तु ॥ त्रैगुण्यात्परतः पश्येद्ब्रह्मा शतगुणं हरिम् । गिरिशो गरुडश्चैव तमोमात्रगतं हरिम् ॥ पश्येद्विशेषानपि हि वाणीदृष्टान्न पश्यति । उमा सुपर्णी च महत्तत्त्वं यावत्प्रपश्यति ॥ रुद्रदृष्टान्विशेषांश्च नैव पश्येत्कदाचन । स्वरूपमन्यरूपं च मुक्ता देवाः समस्तशः ॥ जानन्तीन्द्रश्च कामश्च ब्रह्म यावदहङ्कृतिः । पश्यन्तो मनुदक्षाद्या बुद्धितत्त्वस्थितं हरिम् ॥ पश्यन्ति सोमसूर्यौ तु मनस्स्थं परमेश्वरम् । अन्ये भूतस्थितं विष्णुं देवाः पश्यन्ति सर्वदा ॥ बहुसाहस्र[1]वर्षेण महत्तत्त्वे कचित्कचित् । अन्ये चैव यथा योगमण्डलान्तर्वर्तिनं हरिम् ॥ श्वेत[2]द्वीपपतिं चैव हृद्येवान्ये तु केचन । कदाचिदेव [3]तत्रापि केचित्पश्यन्ति केशवम् ॥ उमा यावदनन्तांशान् पूर्वदृष्टेभ्य[4] एव तु । विशेषान्वासुदेवस्य पश्चादुक्तान्विचक्षते ॥ शक्रकामादयश्चैव विशेषान्ब्रह्मणि स्थितान् । उमादिभिः[5] प्रबुद्धेभ्यः शतांशानेव [6]चक्षते' ॥ इत्यादिवेदस्मृतिगवचनेभ्यो यथा[7]र्थतः । तारतम्यं च मुक्तानां[8] साधनानां च दृश्यते ॥ साध्यसाधनवैरूप्य[9]-मदृष्टं केन कल्प्यते । वैषम्यं निर्घृणत्वं च तेन[10] स्यातां परस्य च ॥ सापेक्षत्वादिति च तौ विद्याधीशेन वारितौ । तार[12]तम्यात्साध[11]नानां साध्य[15]तादृक्त्वमीशतः[14] ॥ अवैषम्या[17]दिहेतुः स्यात्सदैव[13] परमेश्वरे[16] । [19]स्वातन्त्र्ये [20]विद्यमानेऽपि साधनादौ[18] परेशितुः ॥ अपेक्ष्या[21]नादि[22]-वैचित्र्यं न दोष इति तद्वचः । नानादित्वादिति ह्युक्तमुपपद्यत इत्यपि ॥ अपेक्ष्यो[23]पायवैषम्यमुपेयस्य[24] तथा स्थितिः । मया कया विरुद्धा स्याद्राजादावपि दृश्यते ॥ त्यागो दृष्टस्य चादृष्टकल्पनेति सुदुष्करी ।

[1] सहस्रवर्षानुष्ठितसाधनेन. [2] केचन श्वेतद्वीपपतिमेव. [3] हृद्यपि. [4] पूर्वपूर्वदृष्टानाम्. [5] पदद्वये स्रातानाम्. [6] पश्यति. [7] न तु परमतानुवादरूपेण. [8] च. [9] साध्यस्यावैचित्र्ये साधनस्य वैचित्र्यम्. [10] वैरूप्येण. [11-20] अन्वयक्रमः. [21] स्वेच्छयापेक्ष्य प्रेरकत्वम्. [22] अनादियोग्यता. [23] साधन. [24] साध्यस्य.

मायिभ्योऽन्येन केनापि [1]तत्किमन्यैश्च वादिभिः ॥ मायिनोऽप्यानुगम्यन्ते श्रुतहान्यश्रुतग्रहौ । अप्यत्र मायिनां लिङ्गे [2]तत्के दोपास्ततोऽधिकाः ॥ निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादिस्ततः कुतः ॥ भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते । तप्यमानाः समान्दृष्ट्वा द्वेषेर्ष्यादियुता अपि ॥ दृश्यन्ते बहवो लोके दोषा[3] एवात्र कारणम् । यदि निर्दोषता [4]तत्र किमाधिक्येन दूष्यते ॥ यद्यन्यदर्शनाभावादीर्ष्यादिर्विनिवार्यते । अदर्शनादरत्यादिः कथं तेन निवार्यते ॥ ब्रह्मणोऽप्यरतिर्दृष्टा पूर्वमेकाकिनः श्रुतौ । नैव रेमे स[5] चैकाकी तस्मान्न रमते क्वचित् ॥ [6]द्वितीयमैच्छत्तेनासाविति श्रुतय ऊदिरे । यदीच्छा नैव [7]तत्रास्तीत्येन [8]तत्कल्प्यते मृषा ॥ श्रुत्युक्तनिर्दोषतैवं किं नाङ्गीक्रियते स्वयम् । तारतम्यं च कामं च श्रुतमेवातिहाय तु ॥ अश्रुता समता केन कल्प्यते युक्तिमानिना । किं तन्मानं समत्वे ते मुक्तानामुपलभ्यते ॥ वृथाऽयमाग्रहः केन श्रुतहान्य[9]श्रुतग्रहे । मोक्षेऽपि तारतम्येत[10]श्चेतनत्वाद्यथा पुरा ॥ इत्युक्त उत्तरं किं ते कल्पनामात्रवादिनः । न च दुःखादिकं कल्प्यं निर्दुःखत्वश्रुतेर्बलात् ॥ शोकं [11]तरत्यात्मवेत्ता[12] तीर्णः [13]सर्वान्[14]दुःखभाक्' । 'येनानन्द्येव भवति[15] न शोचति कदाचन' ॥ 'किल्बिष[16]स्पृत्पितु[17]षणिरं हित[18] इहेश्वरः' । 'यं

[1] स्वीक्रियते. [2] प्रकृत दोषेषु [3] दोषाणां समुदितानामेव कारणत्वमित्येकवचनम्. [4] मुक्तेषु. [5] तस्मादेकाकी न रमते. [6] स. [7] मुक्तौ. [8] अन्यदर्शनविषये. [9] हानिसहित. [10] तारतम्येन इतः प्राप्तः तद्वान्. [11] तरति शोकमात्मवित्. [12] वेदिता विचारणार्थस्य विन्दतेर्वा रूपमेतत्. [13] 'तीर्णो हि तदा शोकान्'. [14] 'नानानन्दं कश्चिदुपस्पृशति'. [15] 'तीत्ययो'. [16] मुक्तानां दुःखं न सहते स्पर्धते इति. [17] अन्नदाता. [18] अत्यमत्यर्थं हितकरः.

यमन्त[1]मभिप्रेप्सुः स सङ्कल्पाद्भवेदिह[2] ॥ इत्यादिश्रुतयो मानं निर्दुःखत्वादिसम्पदि[3] । अतो दुःखाद्यनुमया नावकाशोऽत्र[4] लभ्यते ॥ तारतम्यानुमा तस्माद्भवेन्नातिप्रसङ्गिनी । श्रुतियुक्तिबलादेव तारतम्यं विभाव्यते[5] ॥ मुक्तावपि ततः [6]केऽत्र विरोधं कर्तुमीशते ॥१६॥४॥

॥ ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ ॥ ३४ ॥ ॐ न चाधिकारिकमपि पतनानुमाना-त्तदयोगात् ॐ ॥ ४१ ॥ अनादियोग्यतां चैव कलि-वाणीश्वरा[7]वधिम् । को निवारयितुं शक्तो युक्त्यागमबलोद्धताम्[8] ॥ ब्रह्मणो[9]ऽन्यत [10]आधिक्य[11]युक्तः कालो विवाद[12]वान् । [13]कालो ह्ययं यथेत्यादि माऽनुमा मानिनो [14]भवेत् ॥ अन्यशब्दो हरिश्रीत्वसमे-भ्योऽन्यविवक्षया । प्रयुक्तो नैव दोषाय रुद्रादिषु च [15]युक्तितः ॥ उत्तमत्वं तु मुक्तानामपि न ब्रह्मणो [16]भवेत् । व्यक्तिः सुखस्य तु भवेन्न त्वाधिक्यं सुखस्य च ॥ बलज्ञानाधिकत्वं तु तेभ्यो हि ब्रह्मणः सदा । आधिक्यस्य त्वनित्यत्वे न किञ्चिन्मानमीयते ॥ शृण्वे वीर[17] उग्र[19]मुग्रन्दमा[20]यन्न[21] न्यमन्यमतिनेनीय[22]मानः । एधमान[23]-द्विळ्[24]भयस्य [25]राजा चोष्कू[28]यते विश[27] इन्द्रो[18]मनु[26]ष्यान् । [31]परा पूर्वे[29]षां सख्या[30] [32]वृणक्ति [33]वितर्तुराणो [34]अपरेभिरेति[35] ॥

---

[1] 'मभिकामः' अन्तं स्थानम्. [2] मुक्तौ. [3] मुक्तानाम्. [4] मुक्तेषु. [5] सम्यगनुभूयते. [6] के, वादिनः. [7] चतुर्मुख. [8] अप्रतिहताम्. [9] विमतः मानेन. [10-12] ब्रह्मनिष्ठं अन्यप्रतियोगिकाधिक्यं यत् तेनोपेतः. [13] काल-त्वात्. [14] प्रति. सर्वोत्कृष्टानादियोग्यतासिद्धियत्. [15] युक्त्या योग्यता साधनीया. [16] सकाशात्. [17] आरब्धान्तगामी. [18] परमेश्वरः. [19] दुष्टमतिर्दृस्थान्. [20] तमः प्रापयन्. [21] सर्वान् सत्स्वभावान्. [22] उत्तमलोकं प्रापयन्. [illegible] स्वयोग्याधिकस्य नाशकः. [27] प्रजाः. [28] संसारे परिवर्तयति नित्यम्. [17-35] अन्वयक्रमः.

अनानु[1]भूतीरवधून्वानः[2] [4]पूर्वीरिन्द्रः[3] शरद[5]स्ततर्[6]रीति । दिवे दिवे[8] [9]सदृशी[12]रन्य[13]मर्धं [10]कृष्णा असे[16]धदप[15]सद्म[14]नोजाः[11] ॥ [22]अहं [17]दासा[7]वृषभो व[18]स्नयन्तो[21]दव्रजे[19]वर्चिनं शम्बरं[20] च । तं[23] [24]भूतिरिति देवा उपासाञ्चक्रिरे ते [25]बभूवुस्तस्माद्धाप्ये[26]तर्हि सुप्तो [27]भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह [28]पराबभूवुः ॥ तद्यथा[29] पेश-[30]स्कारी पेशसो मात्रा[31]मुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते । एवमेवाय[32]मात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं रूपं कुरुते ॥ पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां[33] भूतानाम्[34] । 'प्रयान्ति परमां सिद्धिमैहिकामुष्मिकीं द्रुतम् ॥ या न प्राप्याऽसुरैः सर्वैरक्षय्या क्लेशवर्जिता । न तां गतिं प्रपद्यन्ते विना भागवतान्नरान्' ॥ 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव [35]प्रकृतिं मोहिनीं श्रिताः ॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् । दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता । भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।

---

1-25 अन्वयक्रमः. 7 वर्षणाद् वृषभः परमेश्वरः. 8 सर्वदा. 9 चेतनत्वमात्रेण. 10 तमोमयीः. 11 प्रजाः. 12-13 कास्ताः देवेभ्योऽन्यमर्धम्. 14-16 स्वीयात् सम्बन्धनोपायेधत्. 18 जगद्वाच्छादयन्तौ. 19-20 उद्व्रजे जलधरौ. 22 अहन्, हिंसितवान्. 23 परमेश्वरम्. 24 ऐश्वर्यरूपः 25 मुक्ता. 26 इदानीम्. 27 सुप्तस्योवायुः. 28 तमां प्राप्ताः. 29 सुवर्णकारः. 30 सुवर्णस्य. 31 अंशम्. 32 परमात्मा. 33-34 मनुष्योत्तमानाम्. 35 स्वभावम्.

अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्' ॥ 'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' । द्विविधो [1]भूतसर्गोऽत्र दैव आसुर एव च ॥ विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः । देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः ॥ स्वाध्यायस्तत्त्ववेदित्वं विष्णुपूजारतिः [2]स्मृतिः । दैत्यानां बाहु[3]-शालित्वं मात्सर्यं युद्ध[4]सत्क्रिया ॥ नीतिशास्त्रप्रवेदित्वं शिवपूजा[5]रतिः स्मृतिः । वर्णाश्रमा[6]चारवत्त्वं स्वाध्यायो [7]भक्तिरच्युते ॥ शिवे सूर्ये तथा देव्यां स्वभावो मानुषः स्मृतः । अनादिवैष्णवा एव देवतास्तु स्वभावतः ॥ विपरीताः स्मृता दैत्याः सदैवानादिकालतः । मानुषा मिश्रमतयो विमिश्रगतयोऽपि च' ॥ इत्यादिवाक्यसन्दर्भैर्ज्ञायतेऽनादियोग्यता । [8]'यद्यनादिविशेषो[9] न साम्प्रतं कथमेव सः ॥ अदृष्टादेव चादृष्टं स्वीकृतं सर्ववादिभिः । [10]आकस्मिको [11]विशेषश्चेददृष्टे [12]क्वचिदिष्यते ॥ सर्वत्राकस्मिकत्वं स्यान्नादृष्टापेक्षता भवेत् । [13]अदृष्टावेद्वि[14]शेषोऽयमना[15]दित्वं कुतो न तत्[16] ॥ 'न [17]चान्यभेदाद्विष्णौ[18] भेदस्तद्दर्शिना[19]मपि । दृश्यते प्रत्यभिज्ञैव बहुरूपेषु [20]दृश्यते ॥ बहुत्वं च विशेषेण न भेदेन कथञ्चन । प्रत्यभिज्ञा च [21]येषां न तेऽपि

---

[1] स्वभावः. [2] विष्णोः. [3] अस्थाने. [4] शिवस्य. [5] कौशलम्. [6] तदनुष्ठानमात्रपर्यवसायित्वम्. [7] साम्येन. [8] श्रुत्यनुमानानुग्राहकं तर्कमाह. [9] योग्यता. [10] विशिष्टोत्कर्षहेतौ. [11] अदृष्टनिरपेक्षः. [12] अतिशयः. [13] विशिष्यते इति विशिष्टमदृष्टम्. [14] भवति. [15] तर्हि. [16] तादृशादृष्टपरम्परायाः अनादियोग्यतायत्त्वम्. [17] व्यतिरेकदृष्टान्तः, घटादीनां भेदो यथा दृश्यते न तथेति. [18] रामकृष्णादिरूपे. [19] तद्दर्शिभिः. [20] यथा आम्रवनः. [21] मध्यमजीवानाम्.

तन्मुष्ट[1]दृष्टयः ॥ भेदं नैव प्रपश्यन्ति, भेदमन्येभ्य एव च । पश्य[2]न्त्येवं हरि[3]स्तेषां सन्दर्शयति नान्यथा[4]' ॥ एवं बृहत्संहितायां वचनं न पुराणगम् । लोक[5]दर्शनबाधेव वेदरोधाय शक्नुयात् ॥ [6]अपरीक्षितदृष्टिश्च[7] परीक्षापूर्वदर्शनम् । निषेद्धुं शक्नुयात्क्वापि देव[8]-दत्तादिदृष्टिवत्[9] ॥ न च निश्चितभेदस्य[10] दर्शनेऽस्ति पुराणगम् । वाक्यं कचिद्धि [11]संमुग्धं [12]दर्शनं [13]तत्र गम्यते ॥ अपरीक्षितमेवात्र वेधादि[14]कमधीशितुः । परीक्षा[15]दर्शने नैव दृश्येते केनचित्कचित् ॥ 'निर्दोषमेव तं ब्रह्मा ददर्शाशेषरूपिणम् । निर्दोषमेव रुद्रोऽद्रा[16]-ङ्निर्दोषं तं पुरन्दरः ॥ निर्दोषाण्यस्य रूपाणि दृष्टान्येनं सुरोत्तमैः । अन्ये सदोषाः सर्वेऽपि निर्दोषो हरिरेकलः' ॥ इति [17]वर्कश्रुतेश्चैव सदोषं नास्य दर्शनम् । 'अविद्धो विद्धवद्विष्णुरजातो जातवन्मृषा ॥ अबद्धो बद्धवच्चैव दर्शयत्यमितद्युतिः' । इति पैङ्गिश्रुतिश्चैन प्राह निर्दोषतां हरेः ॥ 'अपरीक्षितदृष्ट्यैव सदोषो दृश्यते हरिः । परीक्षादर्शनेनैव दोषो दृश्यो हरेः कचित्' ॥ इति पैङ्गिश्रुति[18]श्चाह प्रमाणं हि [19]परीक्षितम् । न परीक्षाऽनवस्था स्यात्साक्षिसिद्धेत्वसंशयात् ॥ मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शने । [20]सुदृढो निर्णयो [21]यत्र ज्ञेयं तत्साक्षिदर्शनम् ॥ इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः । साक्षिसिद्धा न कश्चिद्धि तत्र संशयवान्कचित् ॥ [22]यत्क[23]चिद्भमि[24]चारि

1 अपहृत 2 पश्य–भेदाभेदोदासीनतया 3 योग्यतया. 4 भेदेन-अभेदेन च. 5 लोकाना भेददर्शनानुवादि. 6 परीक्षयाप्रमाणत्वेना-निश्चिता 7 च – न शक्नुयात् 8 यज्ञदत्तादौ 9 दृष्टिरिव. 10 पष्ठ्या अलुक् 11 प्रमाणत्वाप्रमाणत्वाभ्याम् 12 भेदस्य. 13 पुराणे. 14 तद्दर्शनम्. 15 युक्ता 16 अद्राक्, अद्राक्षीत्. 17 वर्कश्रुति शङ्कर-भाष्येऽपि गृहीतातो नाप्रसिद्धा 18 तदेव. 19 यत् 20 कदापि बाधरहित. 21 निपात य इत्यर्थे 22 दर्शनम् 23 शुक्तिरजतादी-विषये. 24 बाधितम्

स्याद्दर्शनं[1] मानसं हि तत् । मनश्चक्षुर्दर्शना[2]देरपि [4]यत्रैव साक्षिणा[5] ॥ [3]प्रामाण्यं [6]सुगृहीतं स्यात्तत्परीक्षितदर्शनम् । न [7]ज्ञानदृष्टिमात्रेण प्रामाण्यं [8]तस्य दृश्यते ॥ नियमेन[12] [9]सुखाद्येषु प्रामाण्यं[11] [10]साक्षिगोचरम् । स्वप्रामाण्यं सदा साक्षी [13]पश्यत्येव [14]सुनिश्चयात् ॥ ज्ञानस्य ग्राहकेणैव [15]साक्षिणा [16]मानतामितेः । दोषाभावे प्रमाणत्वं दोषाभावस्य[17] साक्षिणा ॥ निश्चितत्वं क्वचिच्चैव स्वतः प्रामाण्यमिष्यते । अतो[18] न सर्वमानानां प्रामाण्यं निश्चितं भवेत् ॥ साक्षिणानिश्चितं [19]यत्र [20]तत्प्रामाण्यं[21] [22]स्वलक्षणम् । न हि कश्चित्सुखाद्येषु संशयं कुरुते जनः ॥ न चैवाखिलमानानि निश्चिनोत्यखिलो जनः । तस्मादनुभवारूढं किमर्थमपलप्यते ॥ दोषाभावादिकं चैव साक्षी [23]सम्यक्प्रपश्यति । [24]तत्परीक्षितमानेन न दोषो [25]विष्णावि क्वचित् ॥ अपरीक्षितदृष्टिस्तु कस्मिन्नर्थं न विद्यते । [26]तत्प्रत्यक्षविरुद्धार्थे नागमस्यापि मानता ॥ [27]उपजीव्यमक्षजं यत्र[28] तदन्यत्र विपर्ययः । लौकिके[29] [30]व्यवहारेऽत्र[31] प्रत्यक्षस्योपजीव्यता ॥ [32]अवतारादिदृष्टौ स्यादागमस्योपजीव्यता । आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यते ॥ न चेत्स्याद्दोषनानन्यः [33]शास्त्रमिदं हि लक्षणम्[34] । कस्यचिद्दोषवत्त्वं स्यादिति [35]मात्रेऽक्षजं भवेत् ॥ न विष्णोर्दोषवत्त्वे हि प्रत्यक्षं वर्तते स्वतः । [36]केचित्पश्यन्ति दोषानित्यत्रापि स्याद्

---

[1] एव न साक्षिरूपम्. [2] जन्यसाक्षात्कारादेः. [3] ज्ञाने. [3-6] अन्वयक्रम. [7] ज्ञानस्य. [8-12] अन्वयक्रमः. [10] साक्षिगतम्, साक्षिगोचरो यस्य तत् [11] यत्–तत्. [12] दृश्यते. [13] एव. [14] सदा. [15] एव. [16] ज्ञानस्य. [17] परीक्षया. [18] एव. [19] यदा. [20] तदैव. [21] प्रामाण्यं सिध्यति. [22] अप्रामाण्यविविक्तम्. [23] एव. [24] तस्मात्. [25] 'यत्सोममिन्द्रविष्णवि' इतिवत्. [26] तदा. [27] आगमस्य. [28] यदा. [29] जीवादिविषये. [30] ऐक्यबोधने. [31] आगमे. [32] विष्ण्वादीनां दोषदृष्टौ. [33] शास्त्रेणैव. [34] यथायत्साङ्कादि. [35] यत्रायत्येवविषये. [36] सन्कल्पयति पुरुषाः.

चाक्षजम् ॥ पौराणं वाक्यमेवात्र तच्छ्रुत्यैव विरुध्यते । पुराणस्योपजीव्यश्च वेद एव न चापरः ॥ तद्विरोधे कथं मानं तत्तत्र च भविष्यति । अपरीक्षितदृष्टिश्च कथमेवाक्षजं[1] भवेत् ॥ यद्येवं देवदत्ता[2]दिभ्रमः किं नाक्षजं भवेत् । यावच्छक्तिपरीक्षाया[3]मुपजीव्यस्य बाधने[4] ॥ दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलम् । भ्रमेऽप्यभ्रमभागो[5]ऽस्ति तन्मात्रमुपजीव्य हि ॥ [6]बाधकज्ञानवृत्तिस्स्यान्न[7] चैवं सुपरीक्षिते । सर्वं तदुपजीव्यैव [8]प्रमाणं वर्तते यतः ॥ कथं ब्रह्मेति तज्ज्ञेयं सर्वज्ञत्वादि[9]लक्षणम् । विहाय[10] यस्मात्कस्मा[11]च्चित्स्वरूपस्यैव चेद्यदि[12] ॥ उपजीव्य[13]त्वमेतस्मा[14]द्व्यावृत्तं [15]यावता भवेत् । [16]तावतैवोपजीव्यत्वं स्वरूपस्यैव न क्वचित् ॥ सर्वलक्षणयुक्तं च स्वरूपं यदि भण्यते[17] । अस्तु नो नैव हानिः स्यात्स्वपक्षश्चायमञ्जसा ॥ यस्मादन्वित एवार्थः शब्दानामपि सर्वशः । विशेषसामान्यतया स्वरूपमखिलं[18] भवेत्[19] ॥ पुरोवर्तित्व[20]पूर्वाणि [21]देवदत्तादिकभ्रमे । व्यावर्तयन्ति [22]तद्रूपं चैत्रमात्राद्धिनैव तु ॥ [23]ब्रह्मणो निर्विशेषत्वा[24]द्व्यावर्तयति किं[25] पुनः । यस्मात्कस्माचिद[26]प्यर्थात्त्व[27]च्चित्सिद्ध[28]साधनम् ॥ चिन्मात्रत्वं[29] च नैवेष्टमविशेषत्ववादिनः । तावन्मात्रं यदीष्टं स्यात्सर्वज्ञत्वं कुतो न तत् ॥ चिन्मात्रा[30]भेदसाध्येऽपि सिद्धं

[1] प्रमाणम्. [2] यज्ञदत्तादौ [3] सत्यां प्रमाणतया प्रतीतस्य. [4] उपजीवकेनस्कृते इतः. [5] धर्म्यंशः. [6] प्रथमप्रमाणे. [7] सार्वज्ञ्यादिकम्. [8] तत्पमर्सीत्यादि. [9] (द्वितीयवाक्यंतु) विहाय (१२-१४). [10] धर्मान्. [11] तत्यादेः. [12] तदितिकथं ज्ञेयम्. [13] स्वरूपस्यैव. [14] अपरथाज्ञानासंभवात्. [15] धर्मेण. [16] उपेतस्यैव. [17] तच्छब्देन इति यदि भण्यते. [18] योग्यान्वितम्. [19] शाब्दबोध्यम्. [20] विशेषणानि. [21] देवदत्तादौचैत्रादिभ्रमे. [22] देवदत्तादि स्वरूपम्. [23] पुनः [24] कर्तृब्रह्म. [25] न किमपि. [26] तत्यादिरहितात्. [27] व्यावृत्तं चेत्. [28] ज्ञातस्यैव ज्ञापकम्. [29] सर्वं विषयकत्वरहितं चिद्रूपत्वम्. [30] चिन्मात्रेण अभेदः साध्यः=प्रतिपाद्यः यस्य तत् .

[1]तत्प्रतिवादिनः । [2]स्वाभेदाङ्गीकृतेरेव चित्त्वं स्वस्यापि [3]यन्मतम् ॥ [4]सर्वापेक्षतया सर्वज्ञत्वमित्येव[5] [6]तन्न हि । इति चेच्चेतनत्वं च ज्ञत्वं न ज्ञेयवर्जितम् ॥ स्वज्ञेयत्वं च नैवासौ मन्यते [7]सविशेषतः । स्वशब्दोऽपि[8]परापेक्षस्तस्मा[9]द्व्यावृत्तिरेव हि[10] ॥ स्वशब्दार्थ इति प्रोक्तः स्वरूपं नाम किं [11]न चेत् । रूपशब्देन पूर्त्या[12]त्वच[13] [14]सामान्यतावचः ॥ न [15]स्वरूपाभिधायि स्याद्वैयर्थ्यं स्वपदस्य यत् । चेतनस्य [16]स्वभावो[17] हि चैतन्यमिति गीयते ॥ तस्माद्विशेषबाहुल्यं[20] चैतन्यस्य[18] विशेषतः[19] । न ज्ञेयज्ञातृहीनं हि ज्ञानं नाम क्वचिद्भवेत् ॥ ज्ञेयज्ञानविहीनश्च ज्ञ इत्यत्र न च प्रमा । ज्ञातृज्ञेयविहीनं च ज्ञानं चेद्भोक्तृभोग्यतः ॥ हीनं भोजनमेव स्यात्ताडन [21]कर्तृताड्यतः[22] । [23]नित्यत्वात्ताडनं[24] च स्यादिति चेन्नित्यवागपि[24] ॥ वाच्यवक्तृविहीना स्यान्न हि सा चैव तादृशी । द्रष्टारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा ॥ नित्यो द्रष्टा च वाच्यश्च भगवानेव च स्वयम् । न हि वक्तृविहीना च वाच्यहीनापि वाक् क्वचित्[25] ॥ ज्ञातृज्ञेयविहीनं च ज्ञानमेव न तद्भवेत् । न [26]हि नित्योऽपि वक्तास्ति वाक्यवाच्यविवर्जितः ॥ ज्ञानज्ञेयविहीनश्च ज्ञोऽप्येवं नैव विद्यते । किं च सर्वविलोपश्च[27] केन मानेन गम्यते ॥ सर्वेण सह तद्वाक्यमर्थश्च यदि

1 चिदैक्यम् 2 स्वस्य स्वेन 3 यत सम्मतम् 4 मिथ्याभूत 5 हेतो 6 तदेव 7 विशेषाङ्गीकारपक्षे 8 परापक्षस्यार्थस्य-प्रतिपादक 9 परस्मात् 10 यथा 11 न किमपि स्वञ्च तद्रूपं चेत्पन्न 12 वैयर्थ्यं स्वपदस्य यत् 13 स्वरूपपदस्याखण्डत्वपक्षनिरास, रूपपदम् 14 सामान्याकारस्य वाचकम् 15 असाधारणाकारस्य 16 अनागन्तुक 17 शब्दप्रवृत्तिनिमित्तम् 18 ग्रहण, 19 अतिशयेन 20 स्यात् 21 ताडनकर्तृ 22 ताड्याभ्याम्, हीनं स्यात् 23 आघातादिहीनम् 24 वाक् न वाक्यार्थं किन्तु तत्कर्म तथापि आत्मज्ञानिमित्त प्रतिसम्बन्ध्यन्वितत्वं नित्यत्वेन न हीयत इति तदुक्ति 25 ग्रन्थे 26 यत 27 मिथ्यात्वम्

गृह्यते । तदभावे न सर्वस्य नापलापो भवेत्तदा ॥ न गृह्यते चेत्तन्यायादपलापो न हि क्वचित् । उपपत्तिविहीनस्य[1] वाक्य[2]स्यार्थो न गम्यते ॥ उपक्रमादिलिङ्गानां बलीयो [3]ह्युत्तरोत्तरम् । श्रुत्यादौ [4]पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात्[5] ॥ प्रत्यक्षमुपपत्तिश्च बह्वर्थागमा यदा । विरुध्यन्ते न चार्थो[7]ऽस्ति [6]यत्र [8]लिङ्गविरोधिता[9] ॥ [10]स एवार्थः कथं ग्राह्य उपपन्नेऽविरोधिनि । मुख्यार्थे विद्यमाने तु क्व सार्वज्ञं निषिध्यते ॥ अतः सर्वगुणैर्युक्तं ब्रह्माङ्गीकार्यमेव हि । [11]अपलापोऽपि सर्वस्य न कथञ्चन युज्यते ॥ अनादियोग्यता चोक्ता[12] तेन[13] ग्राह्यैव सर्वथा । मुक्तानां तारतम्यं च मानैरुक्तैर्न चाल्यते ॥ [14]ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि । तारतम्यं तु मुक्तौ च तेनैवाध्यवसीयते ॥ तारतम्यं न चेन्मुक्तौ कुतः कुर्युः शुभं पुनः । कृच्छ्रेणापि तपो ज्ञानं कर्माण्येते चरन्ति हि ॥ बिभ्यति स्याच्छुभान्नित्यं सकामाश्च शुभे सदा । न च स्वभाव एवायं भयपूर्वप्रवृत्तितः ॥ कृच्छ्रेणाचरणाच्चैव शुभस्यैव पुनः पुनः ॥ तादृशोऽपि [15]स्वभावश्चेदज्ञस्यापि भवेत्तथा । फलवत्त्वे प्रमाणं चेत्तत्रज्ञस्य समं हि तत् ॥ निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥ 'शुभेनानन्दवृद्धिः स्याद्ध्रासश्चैवाशुभेन हि । ज्ञानिनोऽपि यतस्तेन कर्तव्यं शुभमेव तैः' ॥ 'उपास्ते[16] स य आत्मानं क्षीयते नास्य कर्म हि । अस्माद्ध्येवात्मनो[17] यद्यत्कामयेत्सृजते च तत्[18] ॥ अविद्वान्बहु[19]कर्माऽपि हन्त्यल्पफलमाप्नुयात् । यदेव विद्यया कुर्यात्तदेव ह्यतिवीर्यवत्' ॥ इत्यादिवाक्यसामर्थ्या-

---

[1] विरुद्धस्य. [2] तात्पर्यम्. [3] यद्यदुत्तरं तत्. [4] यद्यत्पूर्वं तत् बलीयः. [5] निर्णीतत्वात्. [6] यदर्थबोधने. [7] प्रयोजनम्. [8] उपक्रमादि लिङ्ग. [9] च अस्ति. [10] विश्वमिथ्यात्वरूपः. [11] मिथ्यात्वाभिधानम्. [12] प्रमाणैरुपपादिता. [13] तेन कारणेन सा. [14] अपरोक्ष. [15] स्वभावबलात्ततः. [16] य आत्मानमेव लोकमुपास्ते. [17] परमात्मनः प्रसादेन. [18] कर्म इष्टं वस्तु. [19] अनेककर्मकर्ताऽपि.

त्तारतम्यं विमुक्तिगम् । न चात्रोपासकस्यैव फलमक्षयमुच्यते ॥ न हि ज्ञानं विना क्वापि फलस्याक्षयता भवेत् । ज्ञानद्वारेण चेत्तस्य नास्मत्पक्षप्रतीपता ॥ ज्ञानोत्तरस्यैवमपि ह्यक्षयत्वं न चान्यथा । पूर्वभाविशुभानां हि ज्ञानेनैव कृतार्थता ॥ प्रारब्धानां तु भोगेन तज्ज्ञानोत्तरकर्मणाम् । मुक्तावनुप्रवेशः स्यादन्यथा तत्कृतिर्न हि ॥ ज्ञानात्पूर्वाणि कर्माणि शुभानि ज्ञानसिद्धये । अकाम्यानि निषिद्धानि ज्ञानरोधाय [1]भुक्तये ॥ [2]योग्यताया बलाद्यच्च शुभबाहुल्यमादितः[3] । ज्ञानबाहुल्यमेवैतत्कुर्यान्नान्यस्य[4] कारणम् ॥ ज्ञानस्य भक्तिभागत्वा-द्भक्तिर्ज्ञानं[5]मितीर्यते[6] । ज्ञानस्यैव विशेषो[7] [8]यद्भक्तिरित्यभिधीयते ॥ परोक्षत्वापरोक्षत्वे विशेषौ ज्ञानगौ यथा । स्नेह[9]योगोऽपि तद्वत्स्या-द्विशेषो ज्ञानगोचरः ॥ इत्यभिप्रायतः प्रायो ज्ञानमेव विमुक्तये । वदन्ति श्रुतयः सोऽयं विशेषोऽपि ह्युदीर्यते ॥ भक्तिर्ज्ञानमिति क्वापि न हि द्वेषयुता दृशिः । पुरुषार्थाय भवति सर्वश्रुतिविरोधतः ॥ 'चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च । संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा ॥ मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथाऽपरम् । नित्यदुःखमिति ज्ञेयं साधनं [10]संसृतावपि ॥ काम्यं कर्मनिषिद्धं च सा[11]ज्ञानमिति निश्चयः । द्वेषो भक्तिश्च [12]मुक्तौ तु मुक्तिद्वय-विधायकम्[13]' ॥ इति पैङ्गिश्रुतेर्द्वेषो नैव सन्मुक्तिकारणम् । अमन्मुक्तेः कारणं च मुक्तावित्यत्र केशवः ॥ मुक्तिशब्दोदितो मोक्षं स्वभक्तानां करोति यत् । द्वेषतोऽपि विमुक्तिश्चेन्महातात्पर्य-रोधनम् ॥ भक्त्या प्रसन्नतो देवान्मुक्तिरित्येव तद्गुणात् । वदन्ति श्रुतयस्सर्वाः पुराणान्यागमा अपि ॥ यदि द्वेषेण मुक्तिः स्याद्वक्तव्यो

---

[1] दुःखस्य. [2] ब्राह्मणत्वादिरूपा पितृमरणादिरूपा च. [3] ज्ञानात्पूर्व-कृतम्. [4] प्रत्यवायमात्र परिहारस्य. [5] पदाभ्याम्. [6] लक्ष्यते. [7] स्नेहादिस्वादित्यलक्षणः. [8] यदा. [9] स्नेहेन सम्बन्धः. [10] संसृति-विषये. [11] अज्ञानमहितम्. [12] विष्णौ. [13] कारकम्.

दोषसञ्चयः । सर्तव्यो भगवानित्य[1]मित्यर्थेनैव हि कचित् ॥ द्वेषादिव गुणानाह [2]पुराणे क्रुद्धवाक्यवत् । यथा क्रुद्धः पिता पुत्रं [3]मरेत्याक्षेपपूर्वकम् ॥ प्रोक्तस्यान्यस [4]कृत्यर्थं वदत्येवं पुराणगम् । वाक्यं श्रुतिविरोधेन स्वविरोधेन चाञ्जसा ॥ बह्वागमविरोधाच्च न द्वेषान्मुक्तिवाचकम् । 'तमो द्वेषेण[5] संयान्ति भक्त्या मुक्तिं तथैव च ॥ [6]विष्णौ विष्णुप्रसादेन विलोम[7]त्वेन चाञ्जसा' । इति पाड्गुण्यवचनमप्युक्तार्थनियामकम् ॥ महातात्पर्यरोधेन कथं वाक्यं प्रमाणताम् । याति [8]सर्वार्थरूपं हि महातात्पर्य[9]मिष्यते ॥ वाचकत्वं हि [9]तात्पर्यं पदार्था अखिला रवाः[10] । सोऽर्थः कथं परित्याज्य एकशब्दस्य[11] संशये ॥ अतो विज्ञान[12]भक्तिभ्यां पुरुषार्थः परो भवेत् । 'यस्य[13] देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' । 'भक्त्या ज्ञानं [14]ततो [15]भक्तिस्ततो दृष्टिस्ततश्च सा[16] ॥ ततो मुक्तिस्ततो भक्तिः सैव स्यात्सुखरूपिणी' । 'भक्त्या प्रसन्नो भगवान्दद्याज्ज्ञानमनाकुलम् ॥ तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया' । '[17]नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥ [18]शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्व[19]नन्यया शक्य अहमेवंविधोऽर्जुन ॥ ज्ञातुं द्रष्टुं च तत्त्वेन[20] प्रवेष्टुं च परंतप' । इत्यादिवाक्यतश्चैव सोऽयमुक्तार्थ ईयते ॥ न च [21]प्रसादमाप्नोति द्वेषाद्भक्त्या

---

[1] इत्यभिप्रायेण. [2] क्वचित्. [3] प्रकृत्यन्तरस्यैतद्रूपम्. [4] करणाय. [5] विष्णौ. [6] भक्त्या [7] कोपेन. [8] सर्वेषां शास्त्राणामनन्यार्थतया-यदेकार्थप्रतिपादकत्व तद्रूपम्. [9] तत्पर प्रतिपाद्य यस्यतत् तत्पर तस्य भावः. [10] आगमाः. [11] एकवाक्यसम्बन्धिनिःसंशये सति. [12] माहात्म्यज्ञानस्नेहाभ्यामेव न तु द्वेषेण. [13] श्वेताश्वतरश्रुति [14] ज्ञानादेः. [15] पक्का. [16] परिपक्का [17] भक्तिरहित श्रवणादिभिः. [18] विपक्षिस्तु सन्धिर्भवतीत्युक्तेः [19] न विद्यतेऽन्योविषयो यस्याः सा. [20] याथार्थ्येन ज्ञातुम्. [21] हरिप्रसादः द्वेषसाध्यो न प्रसादत्वात् गुरुप्रसादवत् इत्यनुमानं उक्त दृष्टव्यास्तिकम्.

तमाप्नुयात् । इति दृष्टानुसारित्वमप्यस्मिन्नर्थ ईर्यते ॥ ‘ये [1]पृथग्विहिता विष्णोर्गुणा वेदेन सादरम् । त एव दृष्टवैलोम्या[2]दङ्गीकार्या न चापरम्[3] ॥ [4]अन्यदृष्टानुसारेण वासुदेवेऽपि गृह्यते । दोषाभावाश्च ये वेदैरुदिता अविहाय तान् ॥ अनुक्ता अपि च ग्राह्या महातात्पर्यशक्तितः’ । एवं बृहत्संहितायाञ्च सिद्धान्तो हि तदीरितः ॥ तारतम्येन तद्भक्तेष्वपि भक्तिर्विनिश्चयात्। कर्तव्यैषाऽपि तद्भक्तिर्लोकवेदानुसारतः ॥ यो हि भक्तः प्रधाने स्यात्तदीयेष्वपि भक्तिमान् । दृश्यतेऽसौ नियमतो विपरीतो विपर्यये ॥ व्यभिचारो यदि क्वापि भक्तिह्रासोऽत्र कल्प्यते । भक्तिदोषो ह्यसौ यत्र तद्भक्तेष्वपि भक्तिमान् ॥ तारतम्येन तेष्वद्धा भक्तिदृष्टानुसारतः । विष्णुप्रसादानुसारात्कार्या दोषस्तदन्यथा ॥ स्वप्रीत्यनुसृतौ प्रीतिर्लोकेऽप्यद्धैव दृश्यते । [5]तारतम्यपरिज्ञानमप्येतेनैव[6] [7]साधनम्[8] ॥ लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्रा गिरां पतिः । सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः ॥ तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः । सर्वेऽपि गुरवश्चैते पुरुषस्य सदैव हि ॥ तस्मात्पूज्याश्च नम्याश्च ध्येयाश्च परितो हरिम्’ । इति षाड्गुण्यवचनादप्ययमर्थोऽवसीयते ॥ ‘हरिभक्तिः [9]क्रमेणैव तदीयेषु[10] हरिस्मृतिः[11] । हरिस्तुतिस्तत्स्मृतिश्च [12]तत्स्तुतिर्हरिपूजनम् ॥ तत्पूजा विहितात्याग इति मुक्तेः क्रमेण[13] हि । नियमात्साधनान्येव नित्यसाध्यानि[14] चाखिलैः’ ॥ इति प्रवृत्तवचनं

---

[1] लोकवैलक्षण्येन. [2] दृष्टवैलोम्यमनादृत्य. [3] लोकविलक्षणं वेदानुक्तं गुणजातं नैवाङ्गीकार्यम्. [4] वेदोक्तादणुत्वमहत्वयौगपद्यादेः अन्यद्गुणजातम्. [5] देवता. [6] भक्तेषु तारतम्येन भक्तिः करणीयेति-समर्थनेन. [7] मोक्षस्य. [8] इति सिद्धम्. [9] तारतम्येन. [10] भक्तिः. [11–12] सर्वाय. [13] हरौ मुख्यानि अन्यत्रामुख्यानि. [14] नित्यं कर्तव्यानि.

साधनस्य विनिर्णये । [1]प्रवृत्ते पञ्चरात्रे[2] हि साधनस्य[3] विनिर्णयः[4] ॥ हरिद्वेषो न शुभदः [5]सद्द्वेषत्वाद्यथा [6]गुरोः । क्रमाद्भक्तिर्हरिप्रीतिकारणं तत्प्रियोपगा[7] ॥ भक्ति[8]र्यतो यथा स्वस्मिन्नित्याद्या युक्तिरत्र च । प्राधान्य[9]तारतम्यानुसारिणी भक्तिरुत्तमा ॥ [10]प्रीतिदैव हरेर्यस्माद्भक्तिः सा[11] [12]स्वोपगा यथा । इति वा ॥ ४१ ॥ ५ ॥ ६ ॥

॥ ॐ [13]स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥४४॥

ज्ञानकर्मादिफलं चैषु[14] [15]क्रमोपगम् ॥ [16]स्वातन्त्र्यतारतम्येन[17] फलं हि फलिनां[18] भवेत् । अशुभं त्वशुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो[19] हरेः ॥ आज्ञया [20]चान्यगं नैव भोगाय भवति क्वचित् । पुण्य[21]मेवामुमाप्नोति न देवान्पापमाप्नुयात् ॥ इत्यादिश्रुतयो मानमुक्तेऽर्थे युक्तयोऽपराः । 'उपासना[22]धर्मफलं यतो [23]देहान्तरे स्थितिः ॥ वासुदेवाज्ञया चैव[24] पूर्वकर्मानुसारतः । प्रेरयन्ति हि ते जीवान्पुण्यपापेषु नित्यशः ॥ [25]अरागद्वेषतश्चैव कथं दोषानवाप्नुयुः । हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते ॥ हरिपूजेति चोद्देशात्कथं न शुभमाप्नुयुः ॥ अतो यथाक्रमं धर्मज्ञानयोः फलमञ्जसा । सर्वप्राणिगतं देवाः प्राप्नुवन्त्याविरिञ्चतः ॥ देवा एव हि देवानां विशिष्टा विनियामकाः । ब्रह्मा त्वखिलदेवानां नराणां च नियामकः ॥ अतः

---

1 प्रवृत्तनामके ग्रन्थे. 2 पञ्चरात्रैकदेशे. 3 तन्नामकम्. 4 प्रकरणमस्ति. 5 उत्तमपुरुषद्वेषात्. 6 द्वेषः. 7-8 तत्प्रियविषयकभक्तित्वात्. 9 उत्तमत्वम्. 10 साध्यवचनमिदम्. 11 भक्तिः. 12 स्वमुपगच्छतीति विष्णुविषयिणी. 13 स्वामिनां देवानामेव ज्ञानफलम्. 14 देवेषु. 15 क्रमेणैवोपगच्छति. 16 स्वामित्व. 17 एव. 18 फलभाजाम्. 19 प्रसादेनैव. 20 अशुभं तु इत्यन्वयः. 21 'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति' इति बृह. 22 जनितपुण्यफलम्. 23 देवानां प्रेरकतया. 24 जीवानाम्. 25 देवानाम्.

सर्वगुणानेष प्राप्नोत्यधिकमन्यतः । द्रव्य[1]स्वातन्त्र्यविज्ञानप्रयत्नैरधिकं फलम् ॥ देवानामन्यगं[2] चापि तेषु हि ब्रह्मणोऽधिकम्' । बृहत्तन्त्रोदितं वाक्यं हरिणा [3]फलनिर्णये ॥ [4]लोकेऽप्येतादृशगुणैः फलाधिक्यं हि दृश्यते । एवं च कलिपूर्वाणामसुराणां महत्फलम् ॥ अशुभेषु सदैव स्वान्मिथ्याज्ञानादिकेषु हि ॥ 'शुभाशुभफलं देवा असुराश्च समाप्नुयुः । क्रमेणैव यथाशक्ति यथा ये ये प्रयोजकाः[5] ॥ प्रेरका अपि पापानां न देवाः पापमाप्नुयुः' । इति प्रकाशिकायां हि प्रोवाच हरिरञ्जसा ॥ ४४ ॥ ॐ [6]आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ॥ ४५ ॥ ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥४६॥ 'यद्यप्येवं सुराणां च दैत्यानां च महत्फलम् । शुभाशुभेभ्य एवं च कर्तुश्च[7] स्याद्यथोदितम्[8] ॥ [9]तस्मान्निरयमानुष्यस्वर्गमुक्त्युपभोगिनः । मानुषोत्तममारभ्य[10] देवास्तु निरयं विना ॥ असुरास्तु विना मुक्तिं तमोऽन्धमपि चाप्नुयुः' । इति तत्त्वविवेकोक्तं स्वयं भगवतो वचः ॥ ४४ ॥ ७ ॥

॥ ॐ अनाविष्कुर्व[11]न्नन्वयात्[12] ॐ ॥ ४९ ॥ [13]ज्ञानदा अपि चाचार्या विशेषात्फलमाप्नुयुः । 'मुक्तावष्टगुणं शिष्याद्गुरुराप्नोति शोभनम् ॥ तद्गुरु[14]र्द्विगुणं तस्मात्सार्धं तावत्ततोऽपरे ।

---

[1] इन्द्रियादिषु स्वामित्वम्. [2] जीवगम्. [3] तथामकप्रकरणे. [4] छप्यादौ. [5] तथा तथा. [6] स्तुसोपमानम् । मध्ये ऋत्विजांफलमिव प्रजानामपि मानादिफलमस्ति । [7] तु अल्पं फलम्. [8] श्रुत्याद्युक्त्यनुसारेण. [9] कर्तुः फलसद्भावादेव. [10] देवपर्यन्ता दैत्यपर्यन्ताश्च. [11] एव उपदेशं कुर्यात्. [12] उपपत्तेः. [13] पूर्ववदत्रापि पूर्वपक्षं अत्यन्तादेयस्याभावात् अपक्षेनाह. [14] सन्तानकारणत्वात्.

देवाः[1] सहस्रगुणितं [2]क्रमात्तस्माद्यथोत्तरम् ॥ ब्रह्मा [3]महौघगुणितमेवं फलविनिर्णयः' । इत्याह भगवांश्छास्त्रे गुरुवृत्ताभिधे स्वयम् ॥ युक्तं च तत्र गोदाता गोमात्रफलमाप्नुयात् । 'य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥ भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः । न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥ भविता न च मे तस्मादन्यः प्रियतमो भुवि' । इत्याह भगवानेवमपि[4] पात्र[5]मपेक्ष्यते ॥४९॥९॥

॥ ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥ ॥ ५० ॥ १० ॥ ॐ एवं मुक्तिफलाऽनियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ ५१ ॥ ११ ॥ एवमेवाविरोधेन प्रारब्धस्यैव कर्मणः । ज्ञानं दृष्ट[6]फलं प्रोक्तं मुक्तिश्चैवेह [7]लभ्यते ॥ ॥ १० ॥ ११ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥ अध्यायश्च सम्पूर्णः ॥ श्लोकसङ्ख्या ॥ २७८ ॥ ७१५ ॥

---

[1] ज्ञानप्रवर्तकत्वात्. [2-3] सहस्रमहौघेत्युपलक्षण परम्पराया अनियतत्वात्. [4] ज्ञानदानस्य तत्सम्प्रदाय प्रवर्तनस्य च महाफलत्वेन बहूनां ग्रहणायाविष्कारेण ज्ञानदानस्य कार्यत्वेऽपि. [5] दानफलेन, अन्यथा प्रत्यवाय हेतुत्वात्. [6] दृष्टं च तत्फलं च. [7] ज्ञानजन्मनि.

## ॥ अथ चतुर्थाध्यायः ॥

॥ ॐ ॥ समन्वयाविरोधाभ्यां सिद्धे[1] [2]वस्तुनि [3]साधने । विचारितेष्वशेषेषु साधनेषु विशेषतः[4] ॥ नित्यशः कार्य[5]मत्यन्तमवश्यम्भावि साधनम् । चिन्त्यते प्रथमं तत्र ॥ **ॐ आवृत्तिरसकृदुपदेशात् ॐ** ॥ १ ॥ श्रवणादिसकृत्क्रिया ॥ आवृत्तिर्नेति सन्देहे [6]कर्तव्याऽऽवृत्तिरेव हि । उपदेशोऽतत्त्वमसीत्यादिह्यसकृदेव यत् ॥ ' लिङ्गा[7]ज्ज्ञातव्यतः पूर्वमृजोर्ब्रह्म[8]त्वतः शतात् । शुभ्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः ॥ सार्धे परार्धे विष्णोस्तु गुणान्भक्त्या सदोद्यतः । तत्त्रिभागमुपास्तां च चक्रे संभृतमानसः ॥ दशमन्वन्तरं शक्रपदयोग्यो [9]गरुत्मतः । [10]पदयोग्यात्सुमनसः सुनन्दो नाम चाम्भृणोव ॥ उपास्तां चक्र उद्युक्तो मन्वन्तरचतुष्टयम् । सूर्याचन्द्रमसोश्चैव पदयोग्यौ [11]सुतेजसौ ॥ सुरूपश्शान्तरूपश्च मन्वन्तरचतुष्टयम् । [12]अम्भृणतां सुमनसो मन्वन्तरमुपासताम्[13] ॥ ततः प्रोक्तास्तु ते सर्वे भक्त्योग्रतप आदयः । अपश्यन्परमं विष्णुं तत्प्रसादधिताः सदा' ॥ इत्युक्तं विष्णुना साक्षाद्ग्रन्थे सत्तत्त्वसंज्ञिते ॥ १ ॥ १ ॥

**॥ ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ॥** ॥ २ ॥ आत्मेति नाम कथितं साक्षान्नारायणस्य हि । 'आत्मा ब्रह्म महांस्तारः परमेशः शुचिश्रवाः ॥ विष्णुर्नारायणोऽनन्त इति श्रीपतिरीर्यते' । इति पैङ्गिश्रुतिश्चैव तथैव परमश्रुतिः ॥ 'ओमात्मा भगवान्विष्णुरात्मानन्दोऽक्षरः स्वराट् । विश्वत्राता नृसिंहोऽजो नारायण

---

[1] सति. [2] परब्रह्मादिरूपे. [3] साधनविषये. [4] परमादरेण. [5] मोक्षसिद्धावत्यन्तम् [6] श्रवणादीनाम्. [7] आदातव्यः शिष्यैरुपासितव्यः तस्मात्. [8] ब्रह्मरजानां शतात्पूर्वमिति [9-10] गरुडपद. [11] सुमत्रायेय म तु मन्दौ. [12] अम्भृणुनाम [13] उपासाताम्.

उरुक्रमः ॥ अनसूया तथैवात्रेर्जज्ञे[1] पुत्रानकल्मषान् । दत्तं दूर्वाससं सोम[2]मात्मेशब्रह्मसम्भवान्' ॥ इति भागवते चैव[3] तस्मादात्मा जनार्दनः । तस्मादुपास्यो[4] [5]विष्णुरिति ज्ञातव्यः सज्जनैः सदा ॥ तथैवोपासते सन्तस्तथैवोपदिशन्ति च । [6]आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेत् ॥ स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसा । 'स्वामी विष्णुरिति ध्यानं विशेषणविशेष्यतः ॥ कर्तव्यं सर्वथैवैतन्न कथञ्चन विस्मरेत्' । इति सत्तत्त्ववचनं षाड्गुण्यवचनं परम् ॥ 'मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च । इति ध्येयः सर्वदैव भगवान्विष्णुरव्ययः ॥ ३ ॥ २ ॥

**॥ ॐ न प्रतीके न हि सः ॐ ॥ ४ ॥** प्रतीकविषयत्वेन न कार्या विष्णुभावना । प्रतीकं नैव विष्णुर्यन्मिथ्योपासा ह्यनर्थदा ॥ योऽन्यथा[7] सन्तमात्मेश[8]मन्यथा[9] प्रतिपद्यते[10] ॥ किं तेन न कृतं पापं चोरेणात्मापहारिणा' ॥ 'योऽन्यथा सन्तमात्मान[11]मन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा'[12] ॥ 'योऽन्यथैव स्थितं विष्णुमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेण ब्रह्महारिणा' ॥ 'स्वात्मानं प्रतिमां चापि देवतान्तरमेव वा । चेतनाचेतनं वाऽन्यद्ध्यायेद्यः केशवस्त्विति ॥ किं तेन न कृतं पापं चोरेणेशापहारिणा' । 'योऽन्यद्विष्णुरिति ध्यायेज्जानीयाद्वा हरिं तथा ॥ अन्धेतमसि मज्जेत्स [13]यत्र नैवोत्थितिः क्वचित्' । 'योऽन्यद्विष्णुरिति

---

[1] जनयामास. [2] विष्णुशिवब्रह्मभिः, सोमस्तु ब्रह्मणा सहभूतः. [3] आत्मशब्दप्रयोगोऽस्ति. [4] च. [5] आत्मा–विष्णुः आत्मा=स्वामी इति ज्ञातव्यः. [6] स्वीयतया आ+दा+मन् आकारलोपो दस्यचतः निर्वचनत्वात्. [7] प्रतीकभिन्नत्वादिप्रकारम्. [8] जीवानामीशम्. [9] प्रतीकत्वादिना. [10] जानाति ध्यायति च. [11] परमात्मानम्. [12] महाभारते सनत्सुजातीये २. १४. [13] पतितस्य.

ध्यायेद्विष्णुरन्यदिति स्म वा ॥ अन्यथाध्यानदोषेण सोऽन्धेतमसि मज्जति' । 'योऽन्यद्विष्णुरिति ध्यायेद्विष्णुरन्यदिति स्म वा ॥ महातमसि मग्नस्य तस्य नैवोत्थितिः क्वचित्' । "यत्किञ्चिदन्यथा[2]-संस्थमन्यथा[3]ध्यातमञ्जसा ॥ ध्यातुर्महादोषकरं किमु सर्वेश्वरो हरिः" । 'यत्किञ्चिदन्यथासंस्थमन्यथाध्यातमञ्जसा ॥ महादोषकरं विष्णुः किमु सर्वेश्वरेश्वरः' । 'यत्किञ्चिदन्यथासंस्थमन्यथाध्यातमञ्जसा ॥ अनर्थकारणं लोके किमु सर्वेश्वरेश्वरः । न किञ्चिदन्यथा ज्ञेयं ध्येयं वा तेन कुत्रचित् ॥ किमु सर्वोत्तमो विष्णुर्ज्ञेयो नीचतया क्वचित् । तस्माद्वस्तु यथारूपं ज्ञेयं ध्येयं च सर्वदा ॥ कारणं पुरुषार्थस्य नान्यथा भवति क्वचित्' । इति श्रुतिपुराणोक्तिबलतो न प्रतीकता ॥ ध्येया विष्णोः क्वचिद्यस्मान्मिथ्याज्ञानमनर्थदम् । इत्यभिप्रेत्य 'न हि स' इत्याह भगवान्प्रभुः ॥ प्रतीकसंस्थितत्वेन ध्येयो विष्णुर्न चान्यथा ॥ ॥ ४ ॥ ३ ॥

॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ५ ॥ ब्रह्मेति च सदा ध्येयो भगवान्विष्णुरञ्जसा । उत्कृष्टो ब्रह्मशब्दार्थः 'पूर्णत्वं ब्रह्मता[5] यतः ॥ आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु । ध्येयैव ब्रह्मता नित्यं विष्णोर्भक्त्या निरन्तरम् ॥ इति प्रकाशिकायां च वचनं विष्णुनेरितम् । नात्मेति सूत्रमीशस्य जीवत्वप्रतिपादकम् ॥ आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् । स्वशब्दात्प्राणभृच्चैव नोक्त इत्येव वेदराट् ॥ यद्यात्मशब्दो जीवे[6]ऽपि कथं स विनिवारयेत् । आत्मशब्दोदितस्तस्माद्विष्णुरेव न चापरः ॥ 'आत्मब्रह्मादयः शब्दास्समृते विष्णुमव्ययम् । न वदन्ति यतो नास्ना [7]क्वापि तद्गुण-पूर्णता' ॥ नारायणाध्यात्मगतमिति यद्वैष्णवं वचः । यदि

[1] गङ्गोदकादिवत्. [2] पवित्रम्. [3] अपवित्रम्. [4] प्रतिमा. [5] ब्रह्म-शब्दप्रवृत्तिनिमित्तम्. [6] वर्तते, अथवा वर्तेत. [7] अवस्थायाम्.

जीवेशयोर्वेदपतिरैक्यं च मन्यते ॥ आत्मशब्दं कथं तस्मान्निवारयति युक्तितः। भेदस्य व्यपदेशं च स्थितिं चादनमेव च ॥ भेददार्ढ्ये हेतुमाह तात्पर्यं स जगत्पतिः। [1]व्यावहारिकभेदश्चेत्कासावव्यावहारिकः ॥ [2]व्यावहारिकमित्येव वचनं व्यावहारिकम्। उत नेति विकल्पे तु यदि स्याद्व्यावहारिकम् ॥ [3]तस्यापि [4]बाध्यता चेत्स्याद्भेदः स्यात्पारमार्थिकः। अव्याव[5]हारिकत्वं चेद्भेदोऽयं सत्यतां गतः ॥ एकस्यासत्यतायां हि द्वयोरेव विरुद्धयोः। अन्यस्य सत्यतैव स्यादिति केन निवार्यते ॥ असत्यं नोक्तमित्युक्ते[5] सत्यमुक्तमिति प्रजाः। जानंत्युक्तं तु नो सत्यमित्युक्तेऽसत्यतामपि ॥ न स्वप्नेऽपि द्वयं मिथ्या [7]तत्रैकं सत्यमेव हि। भावा[8]भावावुभौ तत्र कथं मिथ्या भविष्यतः॥ भावस्य हि निषेधे तु नाभावस्य निषेधनम्। [9]स्ववाचोऽसत्यता चेत्स्यात्तस्मा[10]द्भेदस्य सत्यता ॥ [11]तस्माज्जीवेशयोर्भेद[12] उक्तन्यायेन[13] गम्यते ॥ २ ॥ [14]एतस्मादात्मशब्दोऽयं [15]परमात्माभिधा[16] भवेत्। प्रतीकविषयत्वेन विष्णुदृष्टिर्न तद्भवेत् ॥ प्रतीके विष्णुरित्येव तस्मात्कार्या ह्युपासना। न च विष्णुः प्रतीकं [17]यत्तस्मा ॥ ३ ॥ आत्मे[18]त्युपासना[19] ॥ [20]इति पक्षो[21] यदा ब्रह्मदृष्टिश्चात्र[22] विरुध्यते। स नेति युक्तिस्तत्रापि[23] समेत्युक्तविरुद्धता ॥ यद्यप्युत्कर्षमात्रेण [24]ह्यतद्भावेऽप्युपासना। [25]उत्कर्ष आत्मनोऽपि [26]स्याच्चेतन[27]त्वादचेतनात्[28] ॥

[1] भ्रान्तिसिद्ध. [2] भेदभाषम्. [3] वचनस्य. [4] न केवलं भ्रान्तिकल्पितत्वम्. [5] तस्य वचनस्य. [6] प्रमिते. [7] घटतदभावयोर्मध्ये. [8] अभावतत्प्रतियोगिनौ. [9] प्रतिवादिवागर्थस्य सकलभेदमिथ्यात्वस्य. [10] व्याप्तिसद्भावात्. [11] भेदमिथ्यात्वासम्भवात्. [12] पारमार्थिकभेदः. [13] द्युभ्वादिसूत्रैः. [14] उक्तन्यायात्. [15] आत्मेतिसूत्रगतः. [16] परमात्मनोऽभिधायकः. [17] यस्मात्. [18] जीव इति. [19] न कार्या. [20] न हि स उपासकः प्रतीकमनीति. [21] पूर्वसूत्रव्याख्यानम्. [22] प्रतीकेषु. [23] ब्रह्मप्रतीकयोः. [24] प्रतीकानामब्रह्मत्वे. [25] अचेतनात्. [26] ब्रह्मवत्. [27] आत्मनः. [28] प्रतीकवत्.

तस्मादतत्वं[1] नोपास्यमिति वेदविदां मतम् । उत्कर्षाद्ब्रह्म[2]ताध्याने यदि स्यात्फलमञ्जसा ॥ ब्रह्मणो नीचताज्ञानादनर्थः किं न जायते । अचेतनस्य ब्रह्मत्वध्याने तुष्टिर्न हि कचित् ॥ नीचस्य[3] स्वात्मताज्ञानात्कुप्यति ब्रह्म लोकवत् । चण्डालो नृप इत्युक्ते नृपश्चण्डाल इत्यपि ॥ को विशेषः परिज्ञाने नृपेण स्यात्कथञ्चन । पुरतो नरदेवस्य चण्डालो यदि पूज्यते ॥ राजवत्किं न कोपस्स्याद्राज्ञो लोकेऽभिपश्यति । राज्ञस्तु पुरतः प्रोक्ते चण्डालो नृप इत्यपि ॥ आत्मानं म[4] इति प्रोक्तमितिवद्ध्येव कुप्यति । अभेदेनैतयो[5]र्ध्याने को विशेषो वचस्यपि ॥ अयं राजा त्वमित्युक्ते चण्डालेऽथ नृपेऽपि च । चण्डाल इति तु प्रोक्ते सममेव हि दूषणम् ॥ ध्यातेऽन्येकस्य[6] तद्भावे[7] [8]तद्भावोऽन्यस्य[9] किं न तत् । न चैव [10]तदविज्ञातं सर्वज्ञब्रह्मणा कचित् ॥ तस्मादपेशलं सर्वमन्यस्य ब्रह्मतावचः । तस्माद्यथोक्तमार्गेण ब्रह्मोपास्यं मुमुक्षुभिः ॥ ५ ॥ ४ ॥

॥ ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ॥ १३ ॥ यथोपास्याञ्जसा[11] दृष्टं ब्रह्म पापं च भस्मसात् । करोति निखिलं पूर्वं पाश्चात्यस्याप्यसङ्गताम् ॥ करोति

॥ ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥ १४ ॥ [12]तद्विपर्ययं[13] पुण्यनाशोऽप्यसङ्गता[14] । यदेव विद्ययेत्यत्र पूर्वोक्तादि विशिष्यते ॥ पूर्वं [15]स्वर्गादि लब्ध्यर्थं वीर्यवत्त्वेन चोदितम् ।

---

[1] यद्यद्ब्रह्म भवति तत्तत्त्वेन नोपास्यम्. [2] प्रतीकध्यानाम्. [3] प्रतीकस्य. [4] सः=चण्डालः. [5] ब्रह्मप्रतीकयोः. [6] प्रतीकस्य. [7] ब्रह्मभावे [8] प्रतीकभावः. [9] ब्रह्मणः [10] उपासनम्. [11] आदरनैरन्तर्याभ्याम्. [12] ब्रह्मद्विषः. [13] प्राप्तियम्. [14] उत्तरस्य पुण्यस्य. [15] मोक्षेतरपुरुषार्थं.

कर्मविधायुतं पश्चान्मोक्षे वीर्य[1]प्रदं त्विति[2] ॥ १४ ॥ ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ ॥१९॥ [3]ततो भोगेन पुण्यं च क्षपयित्वे तरत्तथा ब्रह्मवित् ब्रह्मदर्शी च तमो मोक्षावाप्नुतः ॥ 'ब्रह्मणां[4] [5]शतकालात्तु [6]पूर्वमारब्धसङ्क्षयः । ब्रह्मणस्त्वेव [7]तावत्त्वं पञ्चाशद्ब्रह्मणस्तथा[8] ॥ [9]रुद्रस्य [10]विंशदेव स्यादिन्द्रस्या[11]र्कादिके दश । अन्येषां ब्रह्ममात्रस्य त्वन्त[12] आरब्धसङ्क्षयः ॥ ब्रह्मणैव [13]सहातश्च[14] परं नारायणं व्रजेत्' । इति सत्तत्त्ववचनं स्वयं भगवतोदितम् ॥ १९ ॥ ८ ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

॥ श्लोकसङ्ख्या ७० ॥

॥ ॐ ॥ देवानां च मनुष्याणामेतावत्सम[15]मेव हि । उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः ॥ कर्मक्षयस्तथोत्क्रान्तिमार्गो भोगश्चतुष्टयम् । फलं मोक्ष इति प्रोक्तं क्रमात्पादेषु चोदितम् ॥ स्रष्टृष्वेव च सृज्यानां प्रवेशो ब्रह्मणो[16] लये[17] । देवानां मार्ग उद्दिष्टो नार्चिरादिर्न चोत्क्रमः ॥ स्रष्टुस्तु ग्रासभूतस्य देह[18]स्तत्र[19] लयं व्रजेत् । यतः सृज्यस्य देवस्य नैवोत्क्रान्तिस्ततो भवेत् ॥ लयाच्चैवार्चिरादीनां लोकानामपि सर्वशः । कथं मार्गो भवेत्तेषां विंशतामुत्तरं स्वतः ॥ जातानां मानुषे लोके देवानां तु कदाचन । उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते ॥ अन्येषामपि[20] साक्षात्तु मुक्तिः प्राप्यापि

---

1 आनन्दातिशयप्रदम्. 2 चोदितम्. 3 अप्रारब्धक्षयानन्तरम्. 4-5 षष्ठ्या अलुक् ब्रह्मणां शतस्य कालसमाप्तेः. 6 ज्ञानिनाम्. 7 कल्पशतेन कर्मक्षयवत्त्वं एव. 8 ब्रह्मणाकालात्पूर्वम्. 9 आरब्धसङ्क्षयः. 10 विंशतिशब्द-पर्यायोऽयम्. 11 आरब्धक्षयकालः. 12 अन्ते–अवसाने. 13 अतः परम्. 14 सहैव. 15 कर्मनाशाख्यं फलम्. 16 एव. 17 प्रत्यासन्ने सति. 18 चेतनाधिष्ठित एव. 19 स्रष्टरि. 20 परीक्षिदादीनाम्.

तं हरिम् । महैव ब्रह्मणा भूयादिति शास्त्रस्य निर्णयः ॥ 'क्ष्माऽम्भोऽनलानिलवियन्मनइन्द्रियार्थ[1]भूतादिभिः[2] परिवृतः प्रतिसंजिघृक्षुः[3] । अव्याकृतं[4] विशति [5]यर्हि गुणत्रयात्मा[6] कालं [7]परं स्वमनुभूय परः[8] स्वयम्भूः ॥ [9]एवं परेत्य भगवन्त[10]मनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः । तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः[11]' ॥ '[12]भगवन्तमनुप्राप्ता अपि तु ब्रह्मणा सह । परमं मोक्ष[13]मायान्ति लिङ्गभङ्गेन योगिनः' ॥ 'प्राप्ता अपि परं देवं महैव ब्रह्मणा पुनः । आनन्दव्यक्तिमायान्ति पूर्णां लिङ्गस्य भङ्गतः' ॥ इति श्रुतिपुराणोक्तिबलाद्विज्ञायते च तत् । भोगस्तु सर्वदेवानां नरादीनां च भिद्यते ॥ [14]तत्र प्रवेशो देवानामुत्तरोत्तरतः[15] क्रमात् । उच्यते देहगानां च वृत्तीना[16]मेव[17]मेव तु ॥ [18]तत्र मोक्षस्वरूपं तु वादिनः प्रतिभा[19]श्रयात् । नाना वदन्ति पुंसां हि मतयो गुणभेदतः[20] ॥ पृथक् पृथक् प्रजायन्ते तमसैवान्यथामतिः । रजसा मिश्रबुद्धित्वं सत्त्वेनैव यथामतिः[21] ॥ [22]गुणातीता विमुक्तानां[23]मतिः शुद्धचितिर्यतः । सम्यगेवाथ[24] नित्या च तत्तन्माहात्म्य[25]योगतः ॥ [26]बहुला चातिविशदा स्पष्टा चैव श्रियो मतिः । महाशुद्धचितित्वेन[27] ततोऽप्यतिमहाचितिः ॥ [28]अशेषोरुविशेषा[29]णामतिस्पष्टतया

[1] पञ्चविषयाः. [2] भूतानामादिः अहङ्कारः तदभिमानिदेवैः [3] संहर्तुमिच्छुः. [4] परमेश्वरम् [5] यदा. [6] अभिमानी. [7] परसङ्गयोपेतम् [8] क्षमादिभ्यः श्रेष्ठः. [9] तदा. [10] तदीयलोकम्. [11] अगतजीवभावाः. [12] भागवते ३-३३, ९-१०. [13] आनन्दाविर्भावम् [14] द्वितयपादे प्रथमम्. [15] उत्तरोत्तरेषु [16] वर्तन्ते देह एताभिरिति वृत्तयो वागाद्याः जडाः तासाम्. [17] मरणकाले लयो भवतीति वागादिपदप्रयोगः. [18] तथा सति मोक्षे प्रमाणैरुपपादिते सति. [19] स्वोत्प्रेक्षामात्रेण. [20] गुणविशेषतः. [21] यथेतिमिश्रं पदं सम्यक्. [22] अतः. [23] यद्यपि. [24] अथापि. [25] योग्यतैव योगः–निमित्तं तस्मात्. [26] बहुलार्थविषयिणी. [27] गुणाभीना. [28] उरु–अनन्त [29] विशिष्यन्त इति पदार्थाः तेषाम्

दृशिः[1] । नित्यमेकप्रकारा च नारायणमतिः परा[2] ॥ सूर्यप्रभावदखिलं भासयन्ती निरन्तरा[3] । निर्लेपा[4] वीतदोषा च नित्यमेवाविकारिणी ॥ विशेषांस्तद्गतांस्त्यक्त्वा प्रायस्तल्लक्षणा श्रियः । तथैव स्पष्टताऽभावात्तदन्यत्वात्तु केवलम् ॥ न तादृशी ब्रह्मणस्तु प्रायेणैवं श्रियो यथा । मुक्तानां तु तदन्येषां समुद्र[5]तरलोपमा ॥ अग्निज्वालावदेव[6] स्यात्सृतिगानां [7]दृशो भवः[8] । एवंविधेषु[9] ज्ञानेषु तमसा मुष्टदृष्टयः[10] ॥ खद्योतसदृशा[11]स्त्वल्पज्ञानत्वादन्यथादृशः[12] । वदन्ति वादिनो मोक्षं नानामतसमाश्रयात् ॥ आश्रित्य प्रतिमामाह जिन[13]स्त्वातिततामसीम् । ज्ञानात्कर्मक्षयान्मोक्षो भवेद्देहाख्यपञ्जरात्[14] ॥ पञ्जरोन्मुक्तखगवदलोकाकाशगोचरः । नित्यमूर्ध्वं व्रजत्येव पुद्गलो[15] हस्तपादवान् ॥ इति[16] तर्केण मानेन मोक्षरूपं प्रदर्श्यते । गतिरूर्ध्वा च दुःखेता[17] गतित्वाल्लौकिकी यथा ॥ इत्युक्ते चानुमानैक[18]शरणस्य किमुत्तरम् । अनूर्ध्वगतिता तत्र ह्युपाधिः खगस्य च ॥ दूरोर्ध्वगमने दुःखमिति[19] साध्या[20]नुगो न मः । [21]प्रतिसाधनरूपस्य नानुमानस्य दूषणम् ॥ उपाधिः [22]प्रतिरूपं हि[23] [24]साधनं [25]तत्र चापरम्[26] । [27]अथापि [28]सशरीरत्वं चात्रोपाधिर्न वै भवेत् ॥ गतित्वं यत्र देहित्वमिति यत्साधनानुगम् । आगमाननुसारित्वे प्रसङ्गोऽयं यतस्ततः ॥

1 साक्षात्कारः विपरीतकारिणी वा. 2 सम्यक्त्वेऽपि गुणेभ्यः. 3 निर्भेदा. 4 कर्मसम्बन्धशून्या. 5 विशेषबलेन वृद्धि, ह्रासवती. 6 ज्वालाया अग्नेरिव. 7 अन्तःकरणात्. 8 उत्पत्तिः. 9 मन्दु. 10 [illegible]-सम्यग्ज्ञानाः. 11 अधिष्ठानसामान्यज्ञानवन्तः. 12 विपरीतज्ञानिनः. 13 तेषु वादिषु. 14 मोक्षः. 15 जीवः. 16 अर्हन्. 17 [illegible]. 18 एकं तत् शरणं च तथा अनुमानमेकशरणं यस्य सः तस्य. अत्र न [illegible]स्य पूर्वनिपातः. 19 हेतोः. 20 [illegible]. 21 [illegible]-[illegible]म्, दूषणम् 22-24 प्रतिपक्षोपायसम्. 23 [illegible]. 25 [illegible]. 26 अनेकान्तोद्धारयम्. 27 [illegible]. 28 शरीरपूर्तित्वम्.

नापसिद्धान्तता[1] दोषः प्रसङ्गे यदि सा भवेत्[2] । तदैवातिप्रसङ्गः स्यान्न प्रसङ्गः क्वचि[3]द्भवेत् ॥ लोका[4]काशगतित्वं चेदुपाधिः साधना[5]नुगः । सोऽपीत्युक्ते वदेत्किं । तस्माद्वेदोदितो भवेत् ॥ मोक्ष एवं स्वयं विष्णुर्यद्यपीशो ह्यशेषवित् । चकार सौगतमतं मोहायैव चकार यत् ॥ असुराणामयोग्यानां वेदमार्गे प्रवर्तताम् । अतोऽसुराधिकारत्वान्न ग्राह्यं तन्मतं क्वचित् ॥ चतुष्प्रकारं तत्रोक्तं शून्यं विज्ञानमेवलम् । [6]अनुमेयबहिस्तत्त्वं तथा [7]प्रत्यक्षबाह्यगम् ॥ इति तत्र तु ये शून्यं वदन्त्यज्ञानमोहिताः । ते मोक्षं तादृशं ब्रूयुर्निश्शङ्कं मायिनो यथा ॥ न किञ्चिन्मुच्यमानस्यायामात्माऽऽत्मीय[8]मथापि वा । एकस्मिन्संसृतेर्मुक्ते न किञ्चि[9]दवशिष्यते ॥ तत्सन्तत्यैव[10] [11]भेदोऽस्य चेतनाचेतनात्मकः । दृश्यते संसृतेर्ध्वंसे[12] निर्विशेषैव शून्यता[13] ॥ न [14]सत्त्वं नैव चासत्त्वं[15] शून्यतत्त्वस्य विद्यते । न सुखत्वं न दुःखत्वं न विशेषोऽपि कश्चन ॥ निर्विशेषं स्वयभातं निर्लेप[16]मजरामरम् । शून्यं तत्त्वमसंबाधं[17] नानासंवृतिवर्जितम् ॥ अशेषदोष[18]रहितं मनोवाचामगोचरम् । मोक्ष इत्युच्यतेऽसद्भिर्नानासंवृतिदूषितम्[19] ॥ संसृत्यनन्या निर्ज्ञेया सवृत्त्यैव निशिष्यते । स्थितया ध्वस्तया चैव [20]संसृतिर्मोक्ष इत्यपि[21] ॥ [22]केचित्तेष्व[23]न्यथा[24] [25]प्राहुस्संवृत्त्यैव

[1] सिद्धान्तेऽपि मुक्तानां निर्दुःखत्वाङ्गीकारात् [2] दोष [3] अप सिद्धान्तस्य सर्वप्रसङ्गेषु उद्भावयितुं शक्यत्वात् [4] लोकाकाश सम्बन्धित्वम् [5] अनुगच्छतीति गतित्वव्यापक [6] अनुमेय बहि स्तत्त्वम्-ज्ञानव्यतिरिक्तं यस्मिंस्तत् वैभाषिकमतम् [7] सौत्रान्तिकमतम् [8] ज्ञेयम् [9] चेतनमचेतनं च [10] तस्यैकस्यैवात्मनोऽज्ञानेन [11] भिद्यत इति भेदः-पदार्थसमूहः [12] ध्वंसे जाते सति [13] शिष्यते [14] पर सामान्यादिरूपम् [15] अभावप्रतियोगित्वम् [16] धर्माधर्मरहितम् [17] यस्य तदोपमर्दरहितमद्वितीयम् [18] कामादि [19] शून्यमेव [20] यद्यपि शून्यमेव मसारो मोक्षश्च तथापि [21] विशिष्यत एव [22] अनकमतादिनः [23] शून्यवादिषु [24] पक्षान्तरवादिमतात् [25] मानाभूतया

त्वनेकधा[1] । अवच्छिन्नं[2] महा[3]शून्यं नाना पुद्गल[4]शब्दितम् ॥ यस्य शून्यैकरसता[5] ज्ञानात्सा त्वपगच्छति । स पुद्गल[6]त्वनिर्मुक्तो महाशून्यत्वमेष्यति ॥ संवृत्त्या यस्त्ववच्छिन्नो दुःखान्यनुभवत्यलम्[7] । इत्येवं मायिनश्चाहु[8]रेकजीवत्ववादिनः ॥ [9]बहुजीवमताश्चेति माया तेषां तु संवृतिः । निर्विशेषत्वचाचैव शून्यं ब्रह्मेति नो भिदा ॥ संवित्सुखादिकं चैव किं कुतोऽखण्डवादिनः । [10]व्यावर्त्यमात्रभेदस्तु विद्यते शून्यवादिनः ॥ अनृतादेरपोहं तु स्वयमेव हि मन्यते । निर्विशेषत्वतो नैव विशेषो ब्रह्मशून्ययोः ॥ प्रामाण्यादि च वेदस्य फलतः सममेव हि । अतत्त्वावेदकं यस्मात्प्रमाणं तेन कथ्यते ॥ अतत्त्वावेदकत्वं यदप्रामाण्यं [11]सतां मतम् । [12]दीर्घभ्रान्तिकरी चेत्स्याद[13]तत्त्वावेदकप्रमा ॥ रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता । स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः ॥ तलनैल्यादि[14]विज्ञानमाकाशे मानतां व्रजेत् । [15]छत्राकारत्वविज्ञानं चन्द्रप्रादेशतामतिः[16] ॥ निर्भेदत्वं तु शून्यस्य तेनाप्यङ्गीकृतं सदा । सत्त्वासत्त्वादिधर्माणामभाव उभयोर्मतः ॥ न हि [17]सत्प्रतियोगित्वं शून्यत्वं तेन[18] चेष्यते । न च दुःखविरोधित्वादन्या ह्यानन्दतेष्यते ॥ मायिना शून्यपक्षेऽपि ज्ञानं जाड्यविरोधि च । धर्माः केऽपि न सन्त्येव को विशेषस्ततस्तयोः ॥ एतादृशानां पक्षाणां दूषणं प्रभुणा कृतम् । स्वपक्षसाधनेनैव 'नामाव' इति चोक्तितः ॥ आत्माभावे पुमर्थः क इष्टस्यात्माऽवधिर्यतः ।

---

[1-4] अन्वयक्रमः. [5] अद्वितीयत्व. [6] कर्तृत्वादिरूपात्. [7] इति प्राहुः. [8] एको जीवो यस्मिन् लोके सः. [9] बहवो जीवा यस्मिन् तत् बहुजीव मते येषां ते. [10] व्यावर्त्यानामसत्त्वादीनामेव भेदः न सत्त्वादिपदयोरर्थे वस्तुनि. [11] विदुषाम्. [12] या. [13] सा. [14] तलमिन्द्रनीलं तस्य नैल्यमिव नैल्यम्. [15] आकाशे. [16] मानतां व्रजेत्. [17] सद्विरोधित्वमसत्त्वम्. [18] शून्यवादिना निर्विशेषत्वाभिप्रायेण शून्यमित्युच्यते नासत्त्वाभिप्रायेण तदजमित्यर्थाङ्गीकरणम्.

यदि [1]नात्माऽधिर्मोक्षो मोक्षः[2] स्याद्घटशून्यता[3] ॥ [4]कल्पितत्वाद्विशेषाणां मायिनोऽपि समं हि [5]तत् । दृश्यमान विशेषेऽपि यदि चेदविशेषता[6] ॥ [7]घटाभावोऽविशेषःस्यात्पा[8]श्चात्यश्चेदना[9]गतः । न मोक्षो [10]निमतो [11]यस्मादेहो घटशून्यता ॥ यथेत्युक्ते वदेत्किं स योऽनुमामात्रमानकः । न च मायी वदेदत्र पूर्वोक्तेनैव वर्त्मना ॥ अमानत्वात्श्रुतेस्तस्य न चादेहत्ववादिनी । श्रुतिः काचिददेह[12]त्वमप्राकृतशरीरताम् ॥ मोक्षे भोगं यतो ब्रूते जक्षन् क्रीडन्निति श्रुतिः । निर्दुःखत्वान्न [13]तन्मोक्षः प्रतिपन्नं[14] यथेति च ॥ [15]अनुमादूषणं किं स्याद्वादिनोः शून्यमायिनोः । [16]दुःखं दुःखादभिन्नत्वान्मोक्षोऽपि[17] स्यादसंशयम् ॥ भेदे[18] सद्वैतनैव स्यादित्याद्यमितदोषतः । हेय मायामतेनैव सह शून्यमतं बुधैः ॥ एवं विज्ञानवादोऽपि ज्ञान[19]-मात्रविशेषतः । [20]तस्यापि भङ्गुरत्वादिविशेषमपहाय हि ॥ अद्वैतवामतं साक्षादुक्तदोष[21]स्ततो भवेत् । [22]कालो न[23] केवल[24]ज्ञानी

---

1 आत्मभिन्नाना देहादीनामेव निवृत्तिरात्मनस्तु स्वरूपेणावस्थान इति पक्षो यदि न स्यात् आत्मनोऽपि शून्यतापत्तिर्यदि स्यात् 2 देवदत्तस्य मोक्ष स्यात् अविशेषात् 3 अपि 4 ननु घटशून्यता नाम न घटाभाव किं तु नप आत्मा घटश्च तयोश्चाप्रामाणिकत्वेन तद्धर्माणामपि कल्पितत्वात् 5 आत्माभाव इत्यादिकम् 6 मोक्षत्वेनाभिमतस्य शून्यभावस्य 7 घटशून्यताऽपि निर्विशेषा 8 आत्मशून्यभाव व्यवहारदशात पश्चात्तन निर्विशेषा 9 व्यवहार निरूपणमनागत = अप्राप्तस्तु, घटशून्यभावोऽपि निर्विशेष एव, व्यवहारदशायामेव तस्य सविशेषत्वात् 10 शून्यभावो ब्रह्मभावो वा 11 अदेहत्वात् 12 अशरीर वान सन्तमित्यत्र 13 तत्, शून्यत्व ब्रह्मत्व वा. 14 घटशून्यत्वम् 15 प्रत्यनुमाया 16 दु.खात्मक 17 मोक्ष, शून्य ब्रह्म वा 18 दु खात् शून्यब्रह्मणोर्भेदे 19 ज्ञानमात्ररूपविशेष द्वितीयार्धेतस्मि 20 ज्ञानस्य. 21 सम. 22 मोक्षकाल 23 24 अद्वितीयज्ञानवान्न भवति

कालत्वात्प्रतिपन्नवत्[1] ॥ एतयाऽनुमया रोधो[2]ऽत्र [3]तादृङ्मोक्षरूपता । यदि कालोऽपि नेत्याह[4] कदेति प्रश्न उत्तरम् ॥ किं वक्ष्यति यदाऽवस्थां वदेत्सा[5] पक्षतां व्रजेत् । अवस्थात्वादिति ह्येव हेतुः [6]साऽपि कदेति च ॥ पृष्टे कालश्च वक्तव्यो नाकालत्वं ततो भवेत् । न काल इति [7]सामान्यनिषेधे[8] [9]कालगप्रमा ॥ निरुणद्धि ममश्चायं प्रयाणा[10]मुक्तवादिनाम् । एकजीवत्वपक्षे तु कालाभावादियं [11]प्रमा ॥ कुपिता[12] कालमाधाय[13] द्वैतमेवोपपादयेत् । विमतः प्रपञ्चवान्कालः[14] कालत्वात्प्रतिपन्नवत् ॥ इति चान्यानुमैकत्वं जीवस्य[15] निनिवारयेत् । [16]कालशब्दैक्यैकत्वमतान्यप्येवमेव हि ॥ निराकृतानि तेषां च समत्वा[17]त्पक्षदोषयोः । [18]ज्ञानं स्वरसभङ्ग्येव नित्यसन्तान[19]मिष्यते ॥ बौद्धाभ्यामपराभ्यां तु तत्राप्युक्तानुमा रिपुः । मोक्षो न [20]शुद्ध-विज्ञानसन्तानी काल[21]गत्वतः ॥ प्रतिपक्षो[22] यथेत्येतदनुमानं तदुत्तरम् । अनुमानानि सर्वाणि प्रतिसाधन[23]योगतः ॥ निषिद्धान्युक्तभङ्ग्यैव श्रुतयश्चास्मदुक्तिगाः । साङ्ख्यनैयायिकाद्याश्च प्राहुर्मोक्षं च निःसुखम् ॥ इच्छाद्वेषप्रयत्नादेरपि सर्वात्मना लयम् । तत्राहुर्नैतदप्यत्र शोभनं श्रुतयो यतः ॥ महानन्दं च भोगं च नियमेन वदन्ति हि ।

---

1 वर्तमानकालवत्. 2 विरोधात्. 3 तादृक् मोक्षरूपं यस्य सः तस्य भावः आत्मनः. 4 विज्ञानवादी. 5 कालभावाधिकरणत्वेन. 6 मोक्षावस्था. 7 सामान्यतो. 8 क्रियमाणे सति. 9 साक्षी. 10 प्रत्युक्तानाम्. 11 एकमुक्तिरेवसर्वमुक्तिः एकस्मिन् मुक्ते न किञ्चिदवशिष्यते इति पक्षे. 12 विरोधिनीसती. 13 उपपाद्य. 14 मोक्षकालः. 15 एकत्वम्. 16 कालानुविद्धत्वेन, वैयाकरणमते शब्दानुविद्धत्वेन, सर्वस्य प्रतीयमानत्वात् द्विवैकत्वमतं च. 17 मतस्य, जीवनाशाङ्गीकारात् परमेष्टनानेऽपुरुषार्थत्वापत्तिदोषस्य च. 18 ज्ञानमेवात्मा. 19 तत्सन्तानो-नित्यः इति वैभाषिकैः सौत्रान्तिकैस्तु संसारे साकारत्वं मुक्तौ निराकारत्वमिति. 20 निर्विषयचित्सन्तानसम्बन्धी. 21 काल-सम्बन्धित्वात्. 22 संसारः. 23 प्रतिपक्षानुमानसम्बन्धात्.

प्राकृतप्रियहानिस्तु प्रियास्पृष्टिरितीर्यते ॥ [1]अप्रियं प्रति[2]कूलं तद्विशेषेण[3] शब्दितम् । नास्ति ह्यप्राकृतं दुःखं मतो[4] जीवस्य कुत्रचित् ॥ प्रियं[5] स्वरूपमेवास्य बलानन्दादिवाक्यतः । [6]हेयत्वाद[8]प्रियस्यैव[7] [9]प्रियहानेरनिष्टतः[10] ॥ न समस्तप्रियाभावो मोक्षे प्रोक्ते[11] तु [12]युज्यते । अप्रियस्य स्वरूपत्वमसुरेष्वेव हि श्रुतम् ॥ असुरा नैवमेनं च नैनं चाखिलमानुषाः । इत्यात्मप्रियहानाय को यतेत च बुद्धिमान् ॥ [13]सञ्ज्ञा नास्तीत्यपि[14] ह्यस्य[15] नामुक्तज्ञेयतेति हि[16] । धर्मानुच्छित्तिमेवास्य यतो वक्त्युत्तरश्रुतिः[17] ॥ [18]आशङ्क्यास्य ज्ञानहानिं मैत्रेय्या मोह[19]माह माम्[20] । मयानित्युक्तवत्या[21] हि नाहं मोहं वदामि ते ॥ इत्युक्त्वा याज्ञवल्क्यो हि स्वरूपानाश[22]मूचिवान् । ज्ञानरूपस्य विज्ञाननाशस्त्वनाश एव यत् । इति शून्यमतोच्छित्त्यै पुनरानन्दपूर्वकान् ॥ धर्मानाहाप्यनुच्छिन्नास्तार्किकैर्विनिवारितान् । [23]मात्रा संसर्गमप्याह तथा माध्यन्दिनश्रुतिः[24] ॥ आचिक्षेप[25] मतं तच्च यस्मिन्न विषया[26]दनम् । [27]घ्राणादिभोगाभावस्य त्वनिष्टत्वहृदा श्रुतिः[28] ॥ येनेदमखिलं वेद [29]विज्ञातारं स्वमेव च । केन तं[30] च विजानीया[31]दित्यनिष्टं च सर्वथा ॥ नाखिलज्ञापको विष्णुरज्ञेयो नियमेन हि ।

---

[1] सर्वमपि दुःखम् [2] मुमुक्षोः [3] प्राकृतेतिविशेषणराहित्येन [4] मुक्तियोग्यस्य [5] सुखम् [6] [7] एव [8] दुःखस्य [9] सुख [10] अनिष्टत्वात् [11] अशरीरं वावसन्तं न प्रियाप्रिये स्पृशत इति श्रुतौ [12] व्याख्यातुम् [13] एवं सुखास्पृष्टिश्रुतिं व्याख्याय ज्ञानाभावश्रुतिं व्याख्याति ॥ सञ्ज्ञेति ॥ [14] श्रुतिः [15] अमुक्तस्य [16] एव वक्ति [17] अनुच्छित्ति धर्मेति [18] न प्रेत्य सञ्ज्ञाऽस्तीति श्रुत्या [19] मोहकम् [20] मां प्रति [21] चोदित [22] 'अविनाशी वा अरेऽयमात्मा' [23] मीयन्ते इति रूपादिविषय [24] न काण्वश्रुतिः 'यत्र हि द्वैतमिव भवति' इति [25] अतो न ज्ञानलोप [26] रूपादिविषयभोग [27] घ्राणादिना गन्धादि [28] 'यत्र हि द्वैतमिव भवति' इति [29] तं च येन. [30] 'विज्ञातारमरे केन विजानीयात्' [31] इति वाक्यद्वयोक्तम्

तज्ज्ञानार्थं हि वेदानामखिलानां प्रवर्तनम् ॥ [1]प्रत्यक्षमात्म[2]विज्ञानाविरोधानुभवादपि । न स्वविज्ञानितायां च विरोधः कश्चनेयते ॥ कर्तृकर्मविरोधश्च [3]नित्यानुभवरोधतः । कथमेव पदं गच्छेद्विरोधोऽ[4]दृष्टबाधनम् ॥ 'सोऽश्नुते सर्वकामांश्च कामान्नी कामरूप्यथ' । इत्यादि श्रुतयश्चोक्त[5]मर्थमेव वदन्ति हि ॥ अस्वातन्त्र्यादिवेत्युक्तं न द्वैताभावतः क्वचित् । [6]'आत्मैवाभूदिति ह्यस्मादविशेषप्रसङ्गतः'[7] ॥ 'अस्वातन्त्र्योपमाऽभेद[8]भेदेष्विव उदीरितः' । शब्दतत्त्व इति प्रोक्तं मैत्रेय्युक्तो[9]त्तरं च किम् ॥ सुखादिधर्महानौ[10] तु मुक्तेः किं च प्रयोजनम्[11] । [12]यद्यर्थो दुःखहानिः स्यादनर्थः[13] सुखनाशनम् ॥ तयोश्च दुःखहानाद्धि सुखनाशोऽधिको भवेत् । प्राप्यापि दुःखं सुमहत्सुखलेशाप्तये [14]जनः ॥ यतते [15]सुखहानौ हि को[16] मोक्षाय यतेत्पुमान् । अल्पाच्च सुखनाशाद्धि बिभेत्यतितरां जनः ॥ महच्च दुःखमाप्नोति सुखनाशनिवृत्तये । न च रागनिमित्तं तद्वीतरागा अपि स्फुटम् ॥ नारदाद्याः सुखार्थाय सहन्ते दुःखमञ्जसा । युद्धादिदर्शनं यस्मात्सुदुःखेनापि कुर्वते ॥ '[17]यदेन्द्रवैरोचनयोर्ब्रह्मास्त्राभ्यां सुतापिताः । अपि नैवाजहुर्युद्ध[18]रसात्ते नारदादयः' ॥ इति स्कान्दवचस्तस्मात्सुखा-

[1] क्रियाविशेषणमेतत्. [2] आत्मकर्मकज्ञानं च तत्राविरोधश्च तयोः. [3] साक्षी. [4] यत्रादृष्टबाधनम्, प्रमाणविरोधाभावस्तत्रैवायं कर्तृकर्मविरोधः प्रवर्तते यथाङ्गुल्यग्रेणाङ्गुल्यस्पर्शने. [5] मुक्तस्य भोगवत्स्वरूपम्. [6] यत्र त्वस्य सर्वम्. [7] पौनरुक्त्यापत्तेः [8] अभेदभेदेति प्रतियोगिद्वयोपलक्षणम्. [9] अन्यथाव्याख्याने मैत्रेय्युक्तस्य ज्ञानाभावनिन्दनस्य किमुत्तरम्. [10] मुक्तित्वेनाङ्गीकृतायाम्. [11] प्रयुज्यते प्रवर्त्यते, पुरुषोऽनेनेति, मुक्त्यर्थे प्रवर्तकं किमपि नास्ति. [12] अर्थः, अर्थनीयः. [13] अप्यस्ति. [14] जाङ्गिकादिः. [15] अल्पस्यापि सुखस्य. [16] महतोऽदुःखस्यापि । अभ्युपगमवादश्चायं नहि सांसारिकसुखस्य दुःखापेक्षयाऽल्पत्वं तथाऽपि शास्त्रेषु तन्निन्दा मोक्षसुखमपेक्ष्याल्पत्वाभिप्रायेण. [17] यतः. [18] दर्शननिमित्तसुखात्.

भाराय को यतेत् । [1]विमतो दुःखयुग्यस्माचेतनः संत्सुखोज्झितः ॥ प्रति[2]पन्नो यथेत्येव चानुमा केन वार्यते । सर्वश्रुतिपुराणेषु सुखभावो[3]क्तिस्तथा ॥ मुक्तौ न ग्राह्यमेवैतत्सुखाभावमतं बुधैः । 'सोऽनानन्दाद्विमुक्तस्सन्नानन्दी भवति स्फुटम्' ॥ 'निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः । परमानन्दमाप्नोति [4]यत्र कामोऽवमीय[5]ते'[6] ॥ 'न विष्णुसदृशं दैवं न मोक्षसदृशं सुखम् । न वेदसदृशं वाक्यं न [7]वर्णोङ्कारसम्मितः[8]' ॥ 'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः[9] [10]कामास्तत्र माममृतं कृधि'[11] ॥ इति श्रुतिपुराणानि [12]तत्र तत्र वदन्ति हि । अतो मोक्षे सुखाभाव इति यत्किञ्चिदेव[13] हि ॥ शिरः कराद्यमानश्च न मुक्तस्य भवेत्क्वचित् । श्रुतयश्च पुराणानि मानमत्र बहूनि च ॥ 'न वर्तते यत्र रजस्तमस्तयोः[14] [15]सत्त्वं च मिश्रं[16] न च कालविक्रमः[17] । न यत्र माया[18] किमुतापरे[19] हरेरनुव्रता यत्र [20]सुरासुरार्चिताः ॥ श्यामावदाताः[21] शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः[22] सुपेशसः[23] । सर्वे चतुर्बाहव [24]उन्मिषन्मणिप्रवेकनिष्काभरणाः [25]सुवर्चसः ॥ [26]प्रवालवैदूर्यमृणालवर्चसा परिस्फुरत्कुण्डल[27]मौलिमालिनाम् । भ्राजिष्णुभिर्यः[28] परितो विराजते लसद्विमानावलिभिर्महात्मनाम् ॥ विद्योत[29]मानप्रमदोत्तमाभिः

---

[1] मुक्तत्वेन परमसम्मत [2] नारकी [3] सख [4] परमानन्दे प्राप्ते [5] अवसानं गच्छति [6] भागवते भगवद्वाक्यम् [7] वर्णेत्यविभक्तिको निर्देशः [8] पुराणे [9] विषयाः [10] पर्याप्ताः [11] ऋग्वेद ९ ११३ ११ [12] प्रदेशे [13] फल्गु, अल्पम् [14] [15–16] तत्सहचरितम् [17] सामर्थ्यं इतो वस्तुविकारः [18] प्रकृतिः [19] महदाद्याः [20] असुराः साधनं सन्ति [21] निर्मलाः [22] सुप्रभाः [23] सुरूपाः [24] रश्मिमद्रत्नप्रवरहारपमरणाः [25] सुवल्चन्तः हरेरनुमताः [26] केचित्प्रवालवर्चसः इत्यादि [27] कुण्डलमौलयश्च ते मालिनश्च [28] यः, लोक [29] विद्योतमाना प्रमदोत्तमा यासु, यद्वा विद्योतमानाभिः प्रमदाभिः

सविद्युदभ्रावलिभिर्यथा नभः । श्रीर्यत्ररूपि[1]ण्युरुगाय[2]पादयोः करोति [3]मानं [4]बहुधा [5]विभूतिभिः'[6] ॥ 'ऋचान्त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः' ॥ कामान्नरूपी चरतीति[7]पूर्वश्रुत्या [8]पुराणोक्तिभिरप्यदोषः । देहः [9]स्वरूपात्मक एव तेषां मुक्तिं गतानामपि चेयते हि ॥ शिरः करार्द्यैरपि मुक्तिभाजो युक्ता यतस्ते पुरुषा[10] इदानीम् । [11]यथेति पूर्वा अनुमाश्च [12]जीवस्वरूपमङ्गादिकमापयन्ति[13] ॥ न ब्रह्मरूपत्वममुष्य देहिनो मुक्तावपि स्यात्प्रमया[14] [15]कथञ्चित् । स ब्रह्मणा सहितोऽशेषभोगान्भुङ्क्ते [16]तथोपेत्य सुखार्णवं तम् ॥ यत्तत्परं ज्योतिरुपेत्य जीवो निजस्वरूपत्वमवाप्य कामान् । भुङ्क्ते स देवः पुरुषोत्तमोऽज आत्मेति चोक्तो गुणपूर्तिहेतोः ॥ सेतुः[17] स देवोऽखिलमुक्तिभाजामुता[18]मृतस्येष्ट इहेशिता यत् । इत्यादिवाक्यै[19]र्भगवद्वशः[20] सन् भुङ्क्तेऽखिलान् मुक्तिगतोऽपि भोगान् ॥ कालोऽ[21]प्यसौ नैक्ययुतः परेण जीवस्य कालो [22]यत एष [23]यद्वत् । इत्यादिका अप्यनुमा प्रमाणं मुक्तौ च जीवस्य परत्वरोधे[24] ॥ कथं च यः[25] [26]पूर्वमसौ[27] न[28] पश्चा[29]द्भवेत्स एवेत्यपि [30]युक्तिमेति । यतो न दृष्टं [31]यदभून्न पूर्वं

---

[1] प्रत्यक्षा. [2] उरुभिर्ब्रह्मादिभिर्गीयमानस्य. [3] पूजाम् [4] स्थिताभिः. [5] स्वमूर्तिभिः. [6] एवंभूतं लोके सन्दर्शयामास. [7] इत्येषा पूर्वायस्याः. [8] दयाभावदाता इत्यादिना देहः प्रतीयते. [9] जीवस्वरूपमेव आत्मा स्वरूपं यस्य. [10] आत्मत्वात्. [11] अस्मदादिवत्. [12] मुक्तजीवस्वरूपम्. [13] करणे कर्तृत्वोपचारः। आपयन्तीति क्वचित्पाठः. [14] मुक्तावपि भेदे. [15] केनापि प्रमाणेन साधनेन वा, प्रमाणेन. [16] श्रुतिसमुच्चयेन. [17] अमृतस्यैष सेतुः. [18] उतामृतत्वस्येशानो. [19] ज्ञायते. [20] तत्समीपं प्राप्तोऽपि. [21] मोक्षसम्बन्ध्यपि जीवस्य परेण यदैक्यं तद्युतो न भवति. [22] कालत्वात्. [23] संसारकालवत्. [24] मुक्तावपि जीवस्य परब्रह्मत्वनिवारणे. [25] जीवः. [26] संसारे. [27] परमात्मा. [28] भवति, असौ. [29] मुक्तौ. [30] अनुमानसमुच्चय. [31] किंचिद्घटादिकम्.

पश्चात्तदा[1] सेति[2] कुतश्च[3] किञ्चित् ॥ नचैव मुक्तेन हरेः पृथक्त्वमैक्यं तथा स्यादिति [4]युक्तिमेति । यतो न कुत्रापि भिदाऽभिदा च दृष्टा [5]चितश्चेतनया कुतश्चित्[6] ॥ इत्थं [7]मतानि भ्रम[8]जानि यस्मा[9]न्मोक्षं समुद्देश्य[10]मपि भ्रमेण । विदुर्न सम्यग्यदपीह[11] लौकिकाः सुख मम स्याद्धि सदेति[12] जानते[13] ॥ ८ ॥

औदार्यमुच्चावचशक्तिरात्मस्वरूपदार्ढ्यं च निजस्वभावः । स्वातन्त्र्यमापूर्णविशेषयोग्यता विरोधहानिश्च चतुर्थपादे ॥ व्यवस्थितिस्त्वविशेषस्थितिश्च निषेधसामान्यविधिक्रियाणाम् । विभक्तता चात्वरयैव सिद्धि[14]र्विपक्षसम्प्राप्तिविरुद्ध[15]हेतवः[16] ॥ सुशक्यता शश्वदतिप्रसिद्धिर्विवेक विन्यास विचारसंज्ञाः । नानाप्रवृत्तिः कृतकृत्यता च विपक्षतर्काः [17]समतीतपादे ॥ महाफलत्व प्रविविक्तता च सन्धिग्रहः साधनमात्तकृत्यम् । विशेषकार्य कृतिसंस्थितिश्च सुयुक्तयो निर्णयगाः[18] [19]स्वपक्षे ॥ व्यामिश्रता कार्यकरत्वमर्थक्लृप्तिः सुदार्ढ्यं परतन्त्रता च । समानधर्मः कृतशेषता च लोकोपमा पूर्वमतानुसाराः ॥ विशेषसाम्यश्रुतिराढ्यता च समानलोपो महिमाविशेषः । कृतार्थता शश्वदनुप्रवृत्तिः सिद्धान्तनिर्णीति[20] विशिष्टहेतवः ॥१॥ ॐ नैकस्मि[21]न्दर्शयतो हि ॐ ॥ ६ ॥ प्रधानवायु[22]स्त्वि[23]ह वायुनामा भूतेष्विति

---

[1] ऐक्यमापन्नम् [2] न दृष्टम् [3] कारणात् [4] च मत युक्ति नैवैति [5] चेतनस्य [6] प्रमाणात् [7] जनादि [8] विप्रलम्भजानिच [9] मताना प्रणेतार [10] प्रधानोद्देश्यम् [11] प्राणिषु [12] स्वोद्देश्यम् [13] न तु नयमेव न भूयास्मेत्यादि, अतस्तेभ्योऽप्येते मन्दा [14] विरुद्ध इति पाठ सम्प्राप्तिशब्द करणसाधन [15] इता निरोध [16] पूर्व समाप्तिंकुर्वतीनायुक्तीना विचारकाहेतव [17] चतुर्थस्य प्रथमे [18] सिद्धान्त विषये [19] निर्णयहेतव सुयुक्त्य [20] निर्णीतो विशिष्ट [21] अस्मै सर्वे देवा विलीयन्ते किंतु पञ्चस्वपि भूतेषु [22] तुशब्दोऽवधारणे [23] "वायाविन्द्र" इति श्रुतौ

प्रोक्तगतो[1]ऽपि युक्त्या[2]। यस्मात् श्रुतौ [3]पवते चेति[4] [5]भूरिप्रोक्तो [6]यतो भूत[7]मानी च सो[8]ऽपि ॥ महामानी[9] त्वल्पमानी च यस्मात्तच्छ[10]ब्दे-नाप्युच्यते[11] तेन सोऽपि ॥ ६ ॥ ५ ॥

॥ ॐ तानि परे [12]तथा ह्याह ॐ ॥ १५ ॥

तस्मिन्लयं यान्ति [13]भूतान्यशेषक्रमाविरोधेन [illegible] एव विष्णौ[14]। इन्द्रादीनां [15]तत्र लयः क्रमं तु प्रोक्तं विशेषा[16]दनुसृत्य[17] नान्यत् ॥ तस्मादशेषा गिरिजां[18] प्रविश्य तयैव [19]रुद्रं सह तेन वाणीम् । तया पतिं प्राप्य सहैव तेन लयं हरौ यान्ति समस्तजीवाः ॥ सोमस्तु वारीश[20]युतोऽनिरुद्धं विशत्यसौ काममसौ तु वारुणीम् । सा शेषदेवं स गिरं च सैव वायुं विशत्यक्ष इतीह निर्णयः ॥ उमागिरीशाविति भारती[21]राविति स्म वाग्वेदगता ब्रवीति । अहीन्द्रपत्नीमहिपं विरिञ्च-पत्नी विरिञ्चं च विमुक्तिकाले[22] ॥ त एव [23]यत्तत्पदमाप्नुवन्ति [24]तत्काल [25]एतान्समुपास्य जीवाः । प्रलयकाले[26] प्रविशन्ति चैता[27]निति स्म वाक्ताह्यशतायुपैति ॥ सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नीम् । तया सुपर्णं सह तेन वाणीं ब्रह्माणमेतद्गत एव याति ॥ इन्द्रप्रवेशस्तु [28]यदोच्यतेऽत्र [29]तदा ह्युमेत्येव सुपर्णपत्नी । उक्ता

---

[1] भूतेषु देवानां लय इत्यत्रार्थे प्रोक्तं सूत्रकृता गृहीतं श्रुतिवाक्यं तद्गतोपि. [2] उत्तमानामिन्द्रादीनामधमे भूतवायौ लयानुपपत्तेः इति. [3] सा वा-य्वादेवताऽनादिर्योय पवते. [4] अन्यासु श्रुतिष्वपि. [5] भूरित्वेन सकलजीवोत्तमत्वेन. [6] तस्मात्तस्मिन्निन्द्रादीनां प्रलयोपपत्तेः. [7] अतो भूतनामा. [8] प्रधानवायुरपि. [9] सर्वाभिमानी. [10] भूतशब्देन. [11] न केवलं वायुशब्देन. [12] परमात्मनि लीयन्ते. [13] भूताभिमानि प्रभृति देवानि. [14] लयं याति. [15] प्रधानवायौ. [16] विशेषवाक्येन. [17] व्याख्यातव्यः. [18] सौपर्णीम्. [19] शेषगरुडौ. [20] वरुण. [21] इंद्र-समीरः. [22] प्रतिपादनावसरे. [23] यस्मात् [24] उमात्वादिकाले. [25] उमादीन्देवान्. [26] वाय्वादीनाम्. [27] वारुण्यादीन्. [28] यत्र. [29] तत्र.

सुपर्णश्च गिरीशनाम्ना ततो विरोधश्च न कश्चनात्र ॥ भृग्वादयो दक्षमवाप्य तेन प्राप्येन्द्रमेतेन सुपर्णपत्नीम् । [1]विशन्ति ये मनवो राजमुख्या मनुं प्रविश्यात्र गता महेन्द्रम् ॥ आकाश उर्वी च गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम् । [2]सनादयो यतयः काममेव विशन्ति शिष्टा अपि हव्यवाहम् ॥ वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेति काले[3] । [4]तमेव सर्वे पितरस्सुरानुगास्सर्वे कुबेरं ■ च सोममेव ॥ विमुक्तिकाले प्रविशन्त्यभीक्ष्णं[5] भोगांश्च तद्देहगताः प्रभुञ्जते । आनन्दसुव्यक्तिरमुत्र[6] तेषां भवत्यत[7]श्चेष्टत[8] एव निर्गताः ॥ क्रीडन्ति भूयश्च समाविशन्ति [9]तानेव सायुज्यमिदं [10]वदन्ति । सायुज्यहीनास्तु लये तु[11] सर्वे प्रोक्तेन मार्गेण विशन्ति [12]सृष्टौ ॥ [13]बहिश्च निर्यान्ति [14]ततोऽन्यदापि सायुज्यभाजां भवति प्रवेशः । उक्तं समस्तं परमश्रुतौ हि प्रोक्तं च [15]सर्गक्रमतो विपर्ययः ॥ मुक्तौ [16]लये यद्वदथो लयश्च विपर्ययेणेत्यवदद्धरिः प्रभुः । लयो यतो मुक्तिरियं सुराणां भोगो विशेषेण[17] च [18]यं वदिष्यति ॥ उक्तश्च बिम्बप्रतिबिम्बभावः पैङ्गिश्रुतावुक्तलयानुसारतः । बिम्बे लयो यन्नियतश्च मुक्तौ चिदात्मनां तद्वशता च सर्वदा ॥ तेजोऽभिधां[19] तु श्रियमाप्य[20] विष्णुमग्रे[21] ततः[22] पुत्रतयैव[23] वायुः । आप्तः प्रवृत्तः पुनरेव विष्णुं प्रविश्य मुक्तः प्रलयेऽत्र तिष्ठति ॥ सर्वेऽपि ते मुक्तगणा

---

1 उभयत्रसम्बन्धः. 2 सनत्कुमारव्यतिरिक्ताः. 3 मोक्षकाले. 4 धर्ममेव. 5 आविष्टग्रहवत्. 6 उत्तमेषु प्रवेशेन. 7 उत्तमेभ्यो निर्गताश्च. 8 इच्छया. 9 पूर्वं प्रविष्टान्. 10 पुराणादीनि. 11 तु–एव. 12 उत्तमान्. 13 तेभ्यः. 14 लयकालात्. 15 मुक्तौ. 16 साधारणप्रलये. 17 देवपदादप्यतिशयेन. 18 भोगम्. 19 तेजःशब्दस्य लक्ष्मीवाचित्वात्. 20 तत्रलीनो भूत्वा. 21 सृष्टिकाले जाते सर्वेभ्यः पूर्वम्. 22 विष्णोः. 23 हिरण्यगर्भतया प्रसूतः.

अमन्दसान्द्रं निजानन्दमशेषतोऽपि । भुञ्जन्त[1] एवासत ईशदेहे लयेऽथ सर्गे बहिरेव यान्ति ॥ प्रयाति धर्मे निर्ऋतिस्तु शक्रं मरुद्गणाः पारिषदास्तथैव । सर्वेऽनिरुद्धं पृतनाधिपाद्यास्तुरश्रुतिर्हीत्थमियं[2] विमुक्तितः ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥ ॥ १४८ ॥ २१८ ॥

॥ ॐ ॥ [3]उत्क्रान्तमार्गश्च विमुक्त[4]गम्यं पादोदितम् ॥ ८ ॥ सुक्रमविक्रमौ च ॥ सान्तानिकप्राप्तिरभीष्टता च सौकर्यमित्यन्य[5]मतस्य तर्काः । विशेष सम्प्राप्तिरुरुत्वमाप्तिः क्रमानुरागः कथितानुवृत्तिः ॥ सिद्धान्तनिर्णीतिकराः[6] ॥ ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ १५ ॥ प्रतीकं [7]देहादिकं [8]तद्रूजमेव ये नराः । उपासते ते पुरत[9]स्समाप्नुयुर्ब्राह्मणमस्मन्मति[10]माप्य विष्णुम् ॥ प्राप्स्यन्त्यतोऽन्येऽ[11]पि तमाप्य तस्माद्धरिं गता मुक्तिभाजः परान्ते[12] ॥ १५ ॥ ६ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥ श्लोकसङ्ख्या ३ ॥ २२१ ॥

॥ ॐ ॥ अतिक्रमोक्तिः कृतिरर्थलाभः परागतिः एरगतिस्तदोकः । समस्तकार्ये वशिता च विग्रसम्भावना युक्तयस्त्वन्यपक्षे ॥ सामान्यरूपं प्रतिमानमुक्तिराश्रयता कृत्रिमतास्तदोषः । विशेषक्लृप्तिः

---

[1] अनुभवन्तः. [2] देवादीनां देहलयरूपा. [3] देहादुत्क्रान्तानां मानुषाणां मार्गः विष्णुलोकगमनमार्गः. [4] कर्मणो देहाच्च विमुक्तानां सर्वेषां प्राप्यम्. [5] मतानाम्. [6] तर्काः. [7] मनःप्रभृति. [8] प्रतीकगतं, विष्णुम्. [9] प्राक्प्रलयकालात्. [10] भगवज्ज्ञान विशेषम्. [11] व्याप्तोपासकाः. [12] परान्तकाले.

कृतनिश्चयश्च माहात्म्यमित्येव सुनिर्णयार्थाः ॥ ८ ॥ ॐ [1]अत एव [2]चानन्याधिपतिः ॐ ॥ ९ ॥ अनन्यभृत्यत्वमिहोदितेभ्य[3]-स्त्वन्यस्य भृत्यत्वनिवारणाय[4] । पतिं [5]यदेषामपि विष्णुमाह श्रुतामृतत्वस्य पतित्वमाग्धरेः ॥ [6]एते[7]ऽपि चान्याधिपतित्वयुक्ता विष्ण्वन्य-चित्त्वेन[8] यथा पुमांसः । प्रसिद्धिमात्रस्त्विति चानुमैव [9]ह्यमीष्ट-[10]सिद्धं भवतीह[11] निश्चयात् ॥ मुक्तस्वकीया[12]वरयन्त्वृतास्ति मुक्तानपि ब्रह्मपुरस्मराणाम्[13] । [14]अनेन देवेन तथामुना[15] च हीष्टे परा[16]र्वाक्तन-लोकिनामिति[17] ॥ फलं [18]श्रुतिर्ज्ञानत आह मुक्तावेतच्च सर्वाशुभा नाशलिङ्गात् । लोकाधिपत्यं च निधातुरेव सर्वात्मनेत्याह [19]तुरश्रुतिश्च ॥ सर्वे बलिं देवगणा वहन्तीत्येतच्च नान्यस्य तु मुक्तिमेति । लोका इतीहापि[20] तु लोकिना [21]वचो लोका इति ह्येव रव.[22] प्रजासु ॥ प्रयुज्यते सर्वजनै[23] सदैव तन्मानिनो[24] लोकपदेन चोक्ताः । तद्वास्तु[25] मुक्ता इह लोकशब्दा अन्योऽन्यनाथा इति पङ्क्तिना श्रुतिः ॥ अलोकशब्देन निमुक्तिमानो वाच्या.[26] पद [27]तादृगपीह [28]युक्तम् ।

---

1 सत्यसङ्कल्पत्वादेव 2 मुक्त 3 शास्त्रे स्वाधिपतित्वेनोक्तेभ्य अन्यशब्दप्रयोगात् 4 अन्यथा अपतिरित्यवक्ष्यत् 6 मुक्ता 7 प्रमाणसमुच्चयेन 5 यस्माद् 8 विष्ण्वन्यत्वेन जीवत्वेन च 9 श्रुत्यर्थे निप्रतिपद्यमान प्रति 10 अधिपतिसाहित्यस्य 12 स्वैः सह मुक्तिं गतानाम् 13 अपि 14 चक्षुरन्तस्थेन देवेन 11 मुक्तेषु प्रसन्नेन अर्वाचीनलोकिनाम् 15 आदित्यान्तर्गतेन 16 परलोकवर्तिना ईष्टे ईशिता भवति 17 इत्यर्थवती 18 श्रुति छान्दोग्य १ ७ ७ ‘अथ य एव विद्वान् सोऽमुनैव येचाऽमुष्मात्पराञ्चोलोकास्तांश्चाप्नोति देवकामांश्च अथानेनैव येचैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च’ इति 19 न्यायविवरणोक्त 20 श्रुतौ 21 प्रति पादकम् 22 शब्द 23 शब्दशक्तिज्ञै 24 लोकाभिमानिन 25 अवधारणे 26 लोकदोषातीतत्वाद्विदेहत्वाद्वा 27 अलोका इति 28 हेतु वाक्यम्

लोकाभिधाश्चापि यतो हि मुक्ताः [1]प्रकाशरूपाः सततं च सर्वे ॥ न [2]चेह ब्रह्मैव लोकाधिपतिर्विमुक्तो भवेदिति प्राह तुरश्रुतिश्च ॥ उक्तं [4]पृथक्तच्च[5] विज्ञानफलं [3]समुक्तं लोकाधिपत्यं रविबिम्बगे हरौ। उक्तं [4]पृथक्तच्च[5] पुरैव यस्माद्वे[6]दोऽमुनेत्यादि[7] च[8] सम्यगुक्तः॥ [9]त्वप्रत्ययं [10]चाप्यति-हाय[11] नैव रूपेण[12] तेनेति भवेदिहार्थः। भवत्य[13]सावित्यणु[14]शब्दमत्र विहाय वाक्यानि बहूनि[15] दोषः[16] ॥ अतो [17]जगद्व्यापृतिमन्त एव ब्रह्मादयः पूर्णगुणाः क्रमेण। अमन्दमानन्दमजस्रमेव भुञ्जन्त आत्मीयमजा[18]स्समासते[19] ॥ ७ ॥

नमो नमोऽशेषविशेष[20]पूर्णगुणैकधाम्ने पुरुषोत्तमाय। भक्तानु-कम्पा[21]दतिशुद्धसंविद्वात्रेऽनुपाधिप्रिय[22]सद्गुणात्मने ॥ ८ ॥ यस्य[23] त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं [24]वट्[25]तद्दर्शत[26]मित्यमेव निहितं[27] देवस्य भर्गो[28] महद्। वायो रामवचोनयं प्रथमकं पृक्षो

---

[1] प्रसिद्धाः. [2] मुक्तौ. [3] सम्यगुक्तं इति व्याख्यानं न च. [4] पूर्ववाक्य एव तल्लोकाधिपत्यं विभागेनोक्तम्. [5] चक्षुर्गते च. [6] विदुषः परमेश्वरात्. [7] इत्यादीति क्रियाविशेषणम्. [8] अनेन च. [9] अदस्त्वेनेति. [10] रूपेणेतिपदं च यः. [11] प्रवृत्तायां इह श्रुतौ. [12] तेन रूपेण अनेनामुनाच रूपेण अस्यामुष्यच तादात्म्यं प्राप्य इति अर्थोनैव भवेत्. [13] अयं – विद्वान् असौ – परमात्मा भवति. [14] अल्प. [15] प्रयुञ्जानायाः श्रुतेः. [16] अकुशलत्वम्. [17] स्वकीयावरमुक्तानाम्. [18] विष्णुमविहाय. [19] सम्यक् आसते. [20] अशेषविशेषैः पूर्णा ये गुणाः तेषां प्रधानाश्रयाय. [21] भक्ते मयि अनुकम्पात् अनुकम्पां भतति करोति अतसातत्यगमने अन्तर्णीतणिच् प्रापयतीति तथा, भक्तानुकम्पाश्चासौ अतिशुद्ध संविद्दाता च तस्मै अतः अनुकम्पा-शब्दस्य नित्यस्त्रीलिङ्गत्वात्पुंस्त्वं कथमिति चोद्यानवकाशः इति कम्बालूर टिप्पण्याम्. [22] सद्गुणानुवादेनानुपाधिप्रियत्वे गुणतादात्म्यं च विधीयत इति न पुनरुक्तिः. [23] स्वस्वरूपज्ञानस्यापि पुरुषार्थ-साधनत्वात्तदाविष्कुर्वन्नाह यस्येति. [24] बलात्मकम्. [25] यस्यतन्मूल-रूपम्. [26] ज्ञानरूपं अनेन वायुशब्दो निरुक्तः. [27] अवतारेषु. [28] भर्गः= बिभर्ति श्वासरूपेण हंसमन्त्रजपेन सर्वप्राणिजातमिति भर, गमय-तीतिगः स एनान् ब्रह्मगमयतीति श्रुतेः.

द्वितीयं वपुर्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः[1] कृतः केशवे[2] ॥ निःशेषदोषरहित कल्याणाखिलसद्गुण । [3]भूतिस्वयम्भुशर्वादिवन्द्य त्वां नौमि मे प्रियम्[4] ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥ श्लोकसङ्ख्या ॥ १६ ॥ २३७ ॥ अध्यायः सम्पूर्णः ॥

॥ ग्रन्थश्चायं सम्पूर्णः ॥ १९१९ ॥

---

[1] अयं ग्रन्थः. [2] केशवे विषये. [3] भूतिः=महालक्ष्मीः. [4] ग्रन्थारम्भे स्थितस्य नारायणमिति पदस्य ग्रन्थान्ते स्थितेन प्रियमित्यनेन संयोजने नारायणस्य प्रियत्वमुक्तं तेन च ग्रन्थस्य माङ्गलिकत्वं तदध्येतृणां च सकलपुरुषार्थावाप्तिः सूच्यते ।

विशेष सूचना—अत्र टिप्पण्यां अङ्कानांस्थाने क्वचन तत्पदानां अर्था दत्ताः । क्वचन पूर्वशेषः, कुत्रचिदुत्तरशेषः, क्वचित् तदुपयोगिनोऽन्ये च विषयाः, क्वचित् केवलमन्वयक्रमश्च इत्येते दत्ताः तद्यथा-सम्भवमूह्यम् ।

# श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमन्न्यायविवरणम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गत श्रीरामकृष्णवेदव्यासात्मक श्रीहयग्रीवाय नमः ॥ ॐ ॥ चेतनाचेतनजगन्नियन्त्रेऽशेषसंविदे । नमो नारायणायाऽजशर्वशक्रादिवन्दित ॥ १ ॥ कृत्वा भाष्याऽनुभाष्येऽहमपि वेदार्थमत्पतेः । कृष्णस्य सूत्राऽनुव्याख्यासन्न्यायविवृतिं स्फुटम् ॥ २ ॥ करोमि मन्दबुद्धीनां बुधानां चोपकारिकाम् । प्रीत्यै तस्यैव देवस्य तत्प्रसादपुरःसरः ॥ ३ ॥ जीवव्यतिरिक्तेश्वरस्याभावात्तस्य च स्वप्रकाशत्वाच्च जिज्ञास्यतेति प्राप्ते "अथातो ब्रह्मजिज्ञासे"त्याह ॥ "तद्विजिज्ञासस्व तद्ब्रह्मे"ति ब्रह्मशब्देन पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुणजीवाऽभेदः ॥ "अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः" इति श्रुतेः ॥ १ ॥ न जीव एवाऽयं ब्रह्म शब्दः । "यतो वा इमानि भूतानि जायन्ते" इत्यादिना जन्मादिकारणत्वस्यैव ब्रह्मलक्षणत्वोक्तेः ॥ २ ॥ न च रुद्रादौ सममेतल्लक्षणम् । शास्त्रैकसमधिगम्यत्वात् कारणत्वस्य ॥ ३ ॥ न च पाशुपतशास्त्रोदितत्वादि, शास्त्रप्रतिपाद्यत्वे कारणम् । किं तूपक्रमादिलक्षणः समन्वय एव ॥४॥ न च तस्याऽवाच्यत्वं श्रुत्यभिप्रायः । "सर्वे वेदा यत्पदमामनन्ती"त्यादि श्रुतिसहितानुभवस्य बलवत्त्वात् ॥ ५ ॥ न चाऽव्ययत्वविरोधः "नेह नानाऽस्ति किञ्चने"ति श्रुतेरवयवाद्यभेदात् ॥ ६ ॥ न च "ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुकृतं वाचो वीर्यं तपसाऽन्वविन्द"दित्यादि शब्दानामन्यविषयत्वम् ॥ श्रुतिसन्देहेऽनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेः ॥ ७ ॥ अधिभूताध्यात्माधिवेदगतानामपि शब्दानामचेतनत्व

जीवान्वयव्यतिरेकित्वनित्यत्वेषु विद्यमानेष्वपि भगवद्विषयत्वमेवा-नन्यथासिद्धलिङ्गैः ॥ "तावानस्य महिमा ततो ज्यायांश्च पुरुषः" इत्यादिशब्दसहितलिङ्गैश्च ॥ सन्दिग्धश्रुतिलिङ्गाभ्यामुक्ताभ्यामपि, असन्दिग्धयोः केवलयोरेव बलवत्त्वात्(म्) ॥ ११ ॥ न चानन्यथा-सिद्धत्वमन्यत्र श्रुतिलिङ्गादेः । अन्यगतलिङ्गादीनामपि तद्गतभगव-दपेक्षया युक्तेः ॥ १२ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे प्रथमाध्यायस्य प्रथमः पादः ॥ ॥ १ ॥ १ ॥

॥ हरिः ॐ ॥ बहुलिङ्गसहितश्रुतेरपि सावकाशायाः, निरवकाश-श्रुत्यादीनामेव बलवत्त्वम् । बह्चो ह्यत्राऽदित्यशब्दाः ॥ क्षित्यादि-युक्त्याऽऽदित्येऽनुक्तिरित्यादिलिङ्गं च । तथाऽपि निरवकाशा एतमेवेत्यवधारणादयः ॥ १ ॥ सन्दिग्धश्रुतिलिङ्गाभ्यां निश्चित-लिङ्गप्रकरणयोरेव बलवत्त्वम् । सन्दिग्धश्रुतिर्लिङ्गं चाऽदितिशब्दोदि-तत्वं च ॥ २ ॥ द्विवचनश्रुतेरपि बलं निरवकाशत्वं नास्ति । विष्णो-रेवद्विरूपत्वात् ॥ ३ ॥ 'सोऽहमस्मि', 'स एवाऽहमस्मी'त्याद्यभ्यासार्थ-वादसहितबहुश्रुतिभ्योऽपि निरवकाशोपपत्तेरेव प्राबल्यम् ॥ ४ ॥ पृथिव्यादिशरीरत्वं च न निरवकाशम् । यौगिकशरीरत्वोपपत्ते-र्विष्णोरपि ॥ ५ ॥ "अक्षरात्परतः परः" इति श्रुतेरपि नाक्षरा-त्सम्भवतीत्यस्या निरवकाशत्वम् । अक्षरात्परतः परस्याप्यक्षरान्तरत्व-वचनात् (॥ ६ ॥) श्रुतिसाधारण्ये विशेषश्रुत्यादेर्निश्चयः । उभयत्र विशेषश्रुत्यादौ पुनः सावकाशत्वनिरवकाशत्वबलान्निश्चयः ॥ ७ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्या-न्यायविवरणे प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

॥ हरिः ॐ ॥ "प्राणानां ग्रन्थिरसि" । 'रुद्रो वै लोकायतनम्' । 'वायुना वै गौतम सूत्रेणाऽयं च लोकः परश्च लोकः सर्वाणि भूतानि

सन्दृब्धानि भवन्ति' । 'सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्च भवन्ति'' इत्यादेर्द्युभ्वाद्यायतनत्वमन्यज्ञानां साधारणं लिङ्गम् ॥ १ ॥ 'प्राणो वा आशाया भूयान्विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नामे'त्यादेर्भूमशब्दोऽज्ञानां साधारणः ॥ २ ॥ विष्णोश्चेतनप्रकृतेश्चाऽविनाशित्वसाम्यादक्षरशब्दः साधारणः ॥ ३ ॥ कारणत्वसाम्याद्विष्णोः प्रकृतेश्च, "सदेव सोम्येदमग्र आसी''दित्यादिसृष्टिस्थानं साधारणम् ॥ ४ ॥ लिङ्गं हृत्पद्मस्थितत्वं साधारणम् ॥ ५ ॥ "कथं नु तद्विजानीया''मित्यानुकूल्येन ग्रहणं कस्येति विचार्यमनुग्रहः ॥ ६ ॥ पुनः शब्दाः 'ईशानो वज्रो ज्योतिराकाश' इति ॥ ७ ॥ १०–१२ ॥ लिङ्गं स्वप्नादिदर्शनं कस्येति ॥ १३ ॥ शब्दो ब्राह्मण इति ॥ १४ ॥ "यस्मिन्द्यौः पृथिवीचान्तरिक्षमोतं मन ओतं प्राणा ओता'' इत्यत्रोक्तानां लिङ्गानामन्यत्र रुद्रादिविषयत्वे, शब्दबाहुल्यम् ॥ 'प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकः । प्राणेश्वरः कृत्तिवासाः पिनाकी मनो वै रुद्र ओतं च प्रोतं च रुद्रो वाव लोकाऽधार' इत्यादिकं शब्दबाहुल्यम् ॥ १ ॥ प्राणो वा आशाया भूयानित्युक्त्वा प्राणाद्भूयसोऽनुक्तिः ॥ २ ॥ अत्तेत्युक्त्वा न तदश्नाति किञ्चनेति विरुद्धता ॥ ३ ॥ "बहुस्यां प्रजायेये''त्यन्यसाऽन्यभावाऽदृष्टिः ॥ ४ ॥ "दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्य''मित्यनेन, "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश'' इत्यस्यान्वयाभावः ॥ ५ ॥ "तदेतदिति मन्यन्ते'' "कथं नु तद्विजानीया''मिति "तेषां सुखं शाश्वत''मित्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रमः ॥६॥ "ऊर्ध्वं प्राणमुन्नयती''त्यादिलिङ्गानां प्राणादन्यत्रावकाशराहित्यमिति भ्रमः । "एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते'' इत्यादिवाक्याद्भ्रमः ॥ ७ ॥ वज्रशब्द उद्यतत्वलिङ्गं च तादृग्द्वयम् ॥ १० ॥

आदित्यादिज्योतिष्टुभयलोकमञ्चरण"मादित्येनैनाऽयं ज्योतिषाऽस्त" इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभावो बहुतादृक्त्वम् ॥११॥ वै नामेति प्रसिद्धिद्योतकनिपातद्वयं, रूढित्यागेनोक्तयौगिकार्थस्वीकारे विरोधि ॥ १२ ॥ जीवेश्वराभेदे ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यर्थात्तथागतिः ॥ १३ ॥ ब्राह्मणशब्दस्य पापालेपलिङ्गस्य च चतुर्मुखेन सह परमात्मनोऽभेदं विनाऽनवकाशराहित्यादर्थादभेदप्राप्तिरिति समस्तमेतत् ॥ १४ ॥ तेषामेव लिङ्गशब्दाना "प्राणानां ग्रन्थिरसी"त्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वम् । तस्य हि रुन्द्रानणादिकर्तृत्वं मुख्यम् ॥ १ ॥ प्राणस्य विष्णोः सकाशाद्भूयस्त्वानुक्तिः, चशब्देन "एष तु वा अतिवदति यः सत्येनातिवदती"ति प्राणाद्विष्णोर्भूयस्त्वोक्तिश्च ॥ २ ॥ सर्वाऽऽधारप्रकृत्याधारत्वं, विष्णोरन्यस्य विरुद्धम् । "पतिं विश्वस्यात्मेश्वर"—"विश्वात्मानं परायणम्" इत्यादि श्रुतेः । अनशनोक्तिस्त्वनुपजीवनार्थत्वेनैव सावकाशा ॥ ३ ॥ अचेतनस्येक्षणादृष्टिः । बहुमानश्रुतिस्त्वन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वाऽर्थत्वेनैव युज्यते ॥ ४ ॥ आकाशपक्ष एवान्वयाभावः । विष्णुपक्षे तु, योऽन्वेष्टव्यो भगवान्, तस्मान्तर्हृदये यावान्वाऽयमाकाशस्तावानाकाशः, तस्मिन्द्यावापृथिवी अन्तरेव समाहिते, स भगवानपहतपाप्मेत्यन्वयः ॥ ५ ॥ यज्ज्ञानाच्छाश्वतं सुखं स भगवान्यद्ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यन्ते । अतः पूर्ववाद विपरीतैव श्रुतिः । पूर्ववादोक्तयोजना तु भ्रम एव ॥ ६ ॥ लिङ्गानां परमात्मन्यवकाशो नियत एवेति तद्राहित्यं भ्रम एव । वामन श्रुतेरेवानवकाश इति ईशानशब्दोक्तो विष्णुरेव ॥ ७ ॥ वज्रशब्द सोद्यतत्वस्य च विष्णावेवाऽवकाशः । उद्यमित्वमेवोद्यतत्वमिति ॥१०॥ "अयं पुरुषः" इति संसारी । आत्मशब्दोदित एव विष्णुः । अत आदित्यादिज्योतिष्टुं संसारिण एव "आदित्येनैवे"त्यवधारणं -

ज्योतिष्षु प्राधान्याऽपेक्षयेत्यादि । लोकसश्वरणं तु जीवमादाय तस्यैवादुःखेन स्वातन्त्र्यात् ॥ ११ ॥ वै नामेति निर्वहितृत्वे श्रुत्यादि-प्रसिद्धिबाहुल्यम्, प्रसिद्धाऽऽकाशस्योक्तमनामरूपत्वं विरुद्धम् ॥ १२ ॥ सुषुप्त्युत्क्रान्त्योर्जीवेश्वरयोर्भेदोक्तेरसङ्गत्वाऽऽदि चेश्वरस्यैवेत्यर्थाद्भेद एव भवति । जीवस्य तदयुक्तेरीशे सावकाशत्वाच ॥ १३ ॥ ब्रह्मणा वेदेन गम्यत इति " ब्राह्मण " शब्दो विष्णावेव युज्यत इत्यर्थादज-शब्दोऽपि तस्मिन्नेव । चतुर्मुखस्य कर्मफलाभावायुक्तेस्तयोर्भेदोऽ-र्थादापद्यते । उक्तिविरोधश्च तत्रैव ॥ भेदश्रुतिबाहुल्यात् । तल्लिङ्गं स शब्दश्च चतुर्मुखेऽनवकाश इति समस्तमेतत् ॥ १४ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्याय-विवरणे प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

॥ हरिः ॐ ॥ अवरत्वादिधर्मनियन्तृत्वं, तत्तादात्म्यवत्त्वं चेति द्विविधं ह्यवरत्वादि । "निरनिष्टो निरवद्य" इत्यादिश्रुतेस्तत्तद्दोप-तादात्म्यात्यस्पृष्टिनियमात् विष्णोः, 'नामानि सर्वाणि यमाविशन्ती'ति श्रुतिबलाच नियन्तृत्वमवरत्वादिकमित्यापतति । श्रुतिद्वयस्याऽपि निरवकाशत्वात् । मृत्युशब्दादिषु प्रसिद्धेश्च । प्रसिद्धत्वात्कर्तृव्युत्पत्तेः । 'तमेव मृत्युममृतं, तात दैवं सर्वात्मनाऽनेहि परं परायणमि'त्यादेश्च । उपचारकल्पनायाश्च क्लिष्टत्वात् । प्रमाणाऽभावाच । नाव्यक्तादि-शब्दानां परमात्मविषयत्वाङ्गीकारे सर्वमानविरोधः ॥ १ ॥ रूढी रूढियोगो महायोगो महारूढियोगो रूढोपचारो, रूढलक्षणोपचारो लक्षणेति शब्दवृत्तिभेदा(ः), रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽ-खिलशब्दव्युत्पत्त्युपपत्तेः ॥ २ ॥ बहुरूपत्वादधिकरणाऽध्येयत्वादि तस्यैव युज्यते ॥ ३ ॥ व्यक्त्यपेक्षया कार्य (कारण)त्वं च ॥ ४ ॥ इति श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे प्रथमाध्यायस्य चतुर्थः पादः ॥ ॥ १ ॥ ४ ॥ प्रथमाध्यायश्च समाप्तः ॥

## ॥ अथ द्वितीयाध्यायः ॥

॥ हरिः ॐ ॥ रुद्रादीनां नकाशाद्विष्ण्वादीनामेवासत्त्वम् ॥ श्रुत्यनुसारित्वात् ॥ १ ॥ न श्रुतेः रुद्रादिस्मृतिसाम्यं, किन्तु साक्षिप्रत्यक्षसाम्यमेव निरपेक्षत्वात् ॥ २ ॥ न मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणम् । अपि तु, वचनादिशक्ताया देवताया मृदादिशब्दवाच्यत्वयोतिकव ॥ ३ ॥ ईश्वरस्य स्रष्टृत्ववदसतोऽपि स्रष्टृत्वं श्रूयत इति नास्ति । सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति श्रुतेः साम्यम् ॥ ४ ॥ 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वे एकीभवन्ति' इति श्रुतिबलादैक्यम् । किन्तु, भेदापादकमेवैतत्, 'निरञ्जनः परमं साम्यमुपैति' 'परात्परं पुरिशयं पुरुषमुपैति दिव्यम्' इति सन्निहितवाक्यबलात् । एकीभावशब्दस्तु सान्निध्येऽपि भवति । 'एकीभूता तु सा सेना पाण्डवानभ्यवर्तते'तिवत् । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमे'ति वाक्यान्तराच्च ॥ ५ ॥ न लौकिकसर्नकार्याऽनुसारेणाऽकर्तृतन्त्रत्वं सर्वानुसारः । किं तर्हि, तद्विलक्षणेन सर्वकर्तृविलक्षणसर्वशक्तित्वमेवाशेषयुक्ति-श्रुत्यनुसारि । "एष सर्वेश्वरः" इत्यादिश्रुतेः । युक्तिमात्राच्छ्रुतियुक्ता हि युक्तिर्बलवती ॥६॥ न चेश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवम् । श्रुतिसिद्धत्वेनाकल्पनात् । अश्रुतजीवकर्तृत्वाङ्गीकारे गौरवमेव । तदभावे सिद्धान्ते लघुता । 'नान्यः कर्ता, स हि स्वतन्त्रः, परमात्परमो हरि'रित्यादेश्च । अभेदपक्षस्तु निराकृतः । श्रुत्यनुमवविरोधाच्च ॥ ७ ॥ शब्दैकसमधिगम्यत्वमनंशक्तित्वादीनां विशेषणामदर्शनं जीवे । न जीवादिविशेषदर्शनं परमेश्वरे । विशेषश्रुतेरेव ॥ ८ ॥ न च प्रयोजनाभावोऽकर्तृत्वे कारणम् । अशेषकर्तृत्वापवादकश्च । फलापेक्षिणस्त्वपूर्णत्वादेव न सर्वकर्तृत्वादिशक्तिः, इतरस्य पूर्णत्वादेवाऽनन्तशक्तित्वालीलयैव कर्तृत्वम् ॥ ९ ॥ नेशस्य पूर्णत्वासिद्धिः । कर्मसापेक्षत्वेऽ-

नीशत्वमनपेक्षत्वे श्रुतेरप्रामाण्यमिति । कर्मणोऽपि तदधीनत्वम् । तथापि तदनुसारेण फलदानमित्य(न)ङ्गीकार एवेष्टश्रुतिप्रामाण्यासिद्धिः ॥ १० ॥ सर्वचेतना अपूर्णगुणा इति नियमो न । स्वतन्त्रस्य पूर्णगुणत्वनियमात् । 'अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः पूर्णो हरिर्यः स्वतन्त्रः सदैव । न हि ' स्वतन्त्रोऽपूर्णतां कामयीत, पूर्णो यदि स्यादस्वतन्त्रः कुतः सः ॥'—इति श्रुतेः ॥ ११ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्याय विवरणे द्वितीयाध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

॥ हरिः ॐ ॥ उक्तविरोधिनस्तत्तत्समयसिद्धाः पूर्वपक्षन्यायाः, तद्विरोधिनोऽन्ये, इति प्रसिद्धा एव ॥ १ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

॥ हरिः ॐ ॥ न च वियत उत्पत्तिमत्त्वेऽनुभूति-युक्ति-बहुवाग्विरोधोऽस्ति, व्यवस्थाऽयोगात् । अवकाशमात्रस्याऽव्याकृतात्मकत्वादनुत्पत्तिवचनानां तद्विषयत्वं, उत्पत्तिवचनानामसितवर्ण-भूततदभिमानिशरीरविषयत्वं पराधीनविशेषवत्त्वमात्रविषयत्वं चेति व्यवस्था । 'आकाशो नीलिमोदेति न प्रदेशः कथञ्चन । अभावो हि प्रदेशस्य न ह्यत्राभाव इत्यपि' इति पैङ्गिश्रुते(ति)ः ॥ १ ॥ ततोऽधिकमेतत्सर्वमनुभूत्यादिविरुद्धत्वं वायूत्पत्ताविति, न वायोरेव मुख्यानुत्पत्त्यनुपपत्तेः । पराधीनविशेष(त्व)मात्रं ह्युत्पत्तिः । तदभाव उभयोः स्वातन्त्र्यं विरुद्धमेव । सर्वोत्तमत्वानुपपत्तेः । उभयोरपि पराधीनत्वाप्रासेश्चाऽन्योन्यानुरोधे, अननुरोधे तु न सर्वैश्वर्यम् । ज्ञानानिस्मृत्या वायावपि व्यवस्थेत्यतिदेशः । अनुपपत्तिस्तु तत्प्रापिका । पराधीनविशेषवत्त्वमात्रं त्वव्याकृताकाशस्य तदभिमानिप्रकृतेश्च सममेव ॥ २ ॥ न च सतः पराधीनविषयत्वं (विशेषवत्त्वं)

'स्वातन्त्र्यात् ॥ ३ ॥ न च विष्णोरेव तेजस उत्पत्तौ द्वारकारण-वैयर्थ्यम् । द्वारमनुसृत्यैव विष्णोः प्रवृत्तेः ॥ ४ ॥ न च तेजस एवापामुत्पत्त्यङ्गीकारे घर्मात्स्वेदादिदृष्ट्यनुसारित्वमिति गुणाधिक्यम् । मुख्यार्थपरित्यागप्राप्तेः ॥५॥ न चाद्भयो वाऽन्नमुत्पद्यत इत्याद्युक्त-प्रसिद्धान्नाख्यान्यार्थाविरोधेन प्रसिद्धान्ननामस्वीकारे बहुवाक्यानु-वर्तिनेति गुणः । अन्नशब्दस्य प्रयोगबाहुल्यात्पृथिव्यामपि शक्ति-मत्त्वात् । अधिकारादीनां निरवकाशत्वाच्च । बहुवाक्यानुरोधोऽ-प्यत्रैवेति ॥ ६ ॥ न च रुद्रादीनां लयकारित्वाङ्गीकारे, पितुरन्यस्यैव मारकत्वदृष्टेर्लोकदृष्ट्यनुसारित्वमिति गुणः । लोकपितृत्वरूपाद्विष्णो-र्यथावाक्यमङ्गीकारोपपत्तेः । अन्यथा "न विष्णोरन्यो विलयकृन्न विष्णोरन्यो विमुक्तिदः" इत्यादि श्रुतिविरोधात् । रुद्रस्य तु क्वचित्संहारद्वारत्वेनैव तद्वाक्यानां सावकाशत्वात् ॥ ७ ॥ न च लोकानुसारित्वम् । "क्रमादुत्पद्यते, क्रमाद्विलीयते, क्रमेणैवोत्पत्ति-र्विलयश्च, क्रमेणैवास्योत्पत्तिविलयौ" इत्यादिलोकानुसारिबहुवाक्यानु-रोधश्च यथोत्पत्तिलये । 'द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रम-स्तथा । सृष्टावन्यो लये चान्य इति वेदविदो विदुः' । इति श्रुतेः क्रमवाक्यस्य सावकाशत्वाद्द्विरूप्यं बहुप्रकारत्वं क्रमस्य ॥ ८ ॥ न च केषांश्चित्क्रमाल्लयः, केषांश्चिद्व्युत्क्रमाल्लय इत्यङ्गीकारे लोकदृष्ट्यनुसारा-दन्तरा विज्ञान-मनसी व्युत्क्रमः । 'सर्वं वा एतत्क्रमादुत्पद्यते, व्युत्क्रमाल्लीयते' इति श्रुतौ, सर्वस्यापि व्युत्क्रमाल्लयसङ्ग्रहात् । तल्लिङ्गस्य तु चराऽचरव्यपाश्रयविज्ञानादिविषयत्वेनैव सावकाशत्वात् ॥ ॥ ९ ॥ न च चेतनत्वेन साम्याद्विष्णोरपि देहलयः । 'सर्वे वा एते चिदात्मानो ब्रह्मलयमनुप्राप्य विष्णोरुदरे संविशन्ती'ति तस्योदरे सर्वसङ्ग्रहणादिश्रुतिभ्यो नित्यत्वावगमाच्चदेहस्य । अश्रुत-त्वाच्चान्यथा ॥ १० ॥ न चानादित्वाज्जीवस्य पराधीनविशेषा-

प्राप्तिः । "इदं सर्वमसृजते"ति सर्वस्मिन्गृहीतत्वात् । पराधीनः विशेषवत्त्वेऽप्यनादित्वस्याऽविरोधात् ॥ ११ ॥ न च सर्वदेहस्पर्श-ज्ञानाद्रसादीनां च तत्र तत्र परिज्ञानाज्जीवस्याऽनणुत्वम् । उत्क्रान्ति-गत्यादेः। आदिशब्देन सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिज्ञानोपपत्तिः। अतोऽणुत्वमनणुत्वं चेति भावः ॥ १२ ॥ न च जीवस्य बहुरूपत्व-शक्त्यांशेन गुणसाम्यम् । ईशशक्त्यैव बहुरूपत्वादेः ॥ १३ ॥ न च श्रुत्या जीवेश्वरैक्यम् । सर्वमानविरोधात् । श्रुतेः सादृश्यैक्यादिना सावकाशत्वात् । बहुमानविरोधे एकस्य दौर्बल्याच्च । धर्मिग्राहक-विरोधाच्च ॥ १४ ॥ न चोत्पत्तिमत्त्वाद्विनाशित्वं जीवस्य । अनित्यत्वे तदभीष्टमोक्षाद्यसिद्धेः । न हि पराधीनविशेषवत्त्वमात्रेण विनाशित्वम्, तादृशानामेव नित्यत्वश्रुतिविरोधात् ॥ १५ ॥ न च सगुणाऽ-ननुभूत्यनुपपत्तेः पूर्वज्ञानादीनां सामस्त्येनाभावः । पूर्वमव्यक्तानां पश्चात्सुव्यक्त्युपपत्तेः ॥ १६ ॥ न चेश्वरस्यैव कर्तृत्वे कल्पनालाघवम् । जीवस्याऽकर्तृत्वे शास्त्रवैयर्थ्यात् । तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्च ॥ ॥ १७ ॥ न च नानाश्रुतेरप्रामाण्यम् । दृष्टभेदानुसारेण तासा-मर्थोपपत्तेः । अप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वात् ॥ १८ ॥ न च वैचित्र्यमनाभासत्वे कारणम् । जीवानां सामान्यत आभास-त्वेऽपि विशेषादृष्टाद्वैचित्र्योपपत्तेः ॥ १९ ॥ इति श्रीमदानन्दतीर्थ-भगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे द्विती-याध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

॥ हरिः ॐ ॥ न च प्राणानामुत्पत्त्यङ्गीकारे, 'प्राणा एवा-नादयः' इत्यादिस्पष्टार्थवद्विशेषश्रुतिविरोधः । 'आत्मैवेदमग्र आसीत्स प्राणमसृजत, स प्राणान्' इत्यादिवचनादनादित्व एव स्पष्टार्थवद्विशेष-श्रुतिविरोधात् । 'इदं सर्वमसृजते'ति सामान्यवचनस्याऽधिक्यं सिद्धान्ते । विशेषमात्रश्रुतेः सावकाशाया उभयश्रुतेः प्राबल्यात् ॥१॥

